# अथाग्निपुराणानुक्रमणिका ।

# अग्निपुराणं।

## अथ पञ्चदशाधिकशततमोऽध्यायः।



### गयायात्राविधिः।

अग्निरुवाच। उद्यतश्चेद्गयां यातुं(१) श्राद्धं कृत्वा विधानतः।
विधाय कार्पटीवेशं ग्रामस्यापि प्रदक्षिणं॥ १॥
कृत्वा प्रतिदिनङ्गच्छेत् संयतश्चाप्रतिग्रही।
गृहाच्चलितमात्रस्य गयाया गमनं प्रति॥ २॥
स्वर्गारोहणसोपानं पितॄणान्तु पदे पदे।
ब्रह्मज्ञानेन किं कार्यं गोगृहे मरणेन किं॥ ३॥
किं कुरुक्षेत्रवासेन यदा(२) पुत्रो गयां व्रजेत्।
गयाप्राप्तं सुतं दृष्ट्वा पितॄणामुत्सवो भवेत्॥ ४॥
पद्भ्यामपि जलं स्पृष्ट्वा अस्मभ्यं किन्न दास्यति।
ब्रह्मज्ञानं गयाश्राद्धं गोगृहे मरणं तथा॥ ५॥
वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्विधा।
काङ्क्षन्ति पितरः पुत्रं नरकाद्भयभीरवः॥ ६॥
गयां यास्यति यः पुत्रः स नस्त्राता भविष्यति।
मुण्डनञ्चोपवासश्च सर्वतीर्थेष्वयं विधिः॥ ७॥
न कालादिर्गयातीर्थे दद्यात् पिण्डांश्च नित्यशः।
पक्षत्रयनिवासी च पुनात्यासप्तमं कुलं॥ ८॥

---

१ यातुमिति घ०, ग०, ख०, ङ०, ञ० च। २ यदि इति घ०, ञ०, ङ० च।

अष्टकासु च वृद्धौच(१) गयायां मृतवासरे ।
अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ॥ ९ ॥
पित्रादिनवदैवत्यं तथा द्वादशदैवतं ।
प्रथमे दिवसे स्नायात्तीर्थे ह्युत्तरमानसे ॥ १० ॥
उत्तरे मानसे पुण्ये आयुरारोग्यवृद्धये ।
सर्व्वाघौघविघाताय(२) स्नानं कुर्य्याद् विमुक्तये(३) ॥ ११ ॥
सन्तर्प्य देवपित्रादीन् श्राद्धकृत् पिण्डदो भवेत् ।
दिव्यान्तरीक्षभौमस्थान्(४) देवान् सन्तर्पयाम्यहं ॥ १२ ॥
दिव्यान्तरीक्षभौमादि पितृमात्रादि तर्पयेत् ।
पिता पितामहश्चैव तथैव प्रपितामहः ॥ १३ ॥
माता पितामही चैव(५) तथैव प्रपितामही ।
मातामहः प्रमातामहो वृद्धप्रमातामहः(६) ॥ १४ ॥
तेभ्योऽन्येभ्य(७) इमान् पिण्डानुद्धाराय ददाम्यहं ।
ओँ नमः सूर्य्यदेवाय सोमभौमज्ञरूपिणे(८) ॥ १५ ॥
जीवशुक्रशनैश्चारिराहुकेतुस्वरूपिणे ।
उत्तरे मानसे स्नात(९) उद्धरेत्सकलं कुलं ॥ १६ ॥
सूर्य्यं नत्वा(१०) व्रजेन्मौनी नरो दक्षिणमानसं(११) ।

---

१ अन्वष्टकासु वृद्धौ चेति घ०, ञ० च।
२ सर्व्वाघौघविनाशायेति ख०, घ०, ङ० च।
३ स्नानं सर्व्वविमुक्तये इति क०।
४ दिव्यान्तरीक्षगान् भौमानिति ग०।
५ माता मातामही चैवेति क०, ख०, ग०, ङ०, ञ० च।
६ वृद्धप्रमातृकामह इति क०, ग०, ङ०, ज०, झ० च।
७ तेभ्यस्तेभ्य इति घ०, ञ० च।
८ सोमभौमस्वरूपिणे इति घ०।
९ स्नात्वे ति क०।
१० सूर्य्यं दृष्ट्वा इति ङ०।
११ गत्वा दक्षिणमानसमिति ग०, घ०, ञ०, झ० च।

दक्षिणे मानसे स्नानं करोमि पितृतृप्तये(१) ॥ १७ ॥
गयायामागतः स्वर्गं यान्तु मे पितरोऽखिलाः ।
श्राद्धं पिण्डन्ततः कृत्वा सूर्यं नत्वा वदेदिदं ॥ १८ ॥
ओं नमो भानवे भर्त्रे(२) भवाय भव मे विभो ।
भुक्तिमुक्तिप्रदः सर्व्वपितॄणां भवभावितः ॥ १९ ॥
कव्यवालानलः सोमो यमश्चैवार्य्यमा तथा ।
अग्निष्वात्ता बर्हिषद आज्यपाः पितृदेवताः ॥ २० ॥
आगच्छन्तु महाभागा युष्माभी रक्षितास्त्विह ।
मदीयाः पितरो ये च मातृमातामहादयः ॥ २१ ॥
तेषां पिण्डप्रदाताहमागतोऽस्मि गयामिमां ।
उदीच्यां मुण्डपृष्ठस्य देवर्षिगणपूजितं(३) ॥ २२ ॥
नाम्ना कनखलं तीर्थं त्रिषु लोकेषु विश्रुतं ।
सिद्धानां प्रीतिजननैः पापानाञ्च भयङ्करैः ॥ २३ ॥
लेलिहानैर्म्महानागै रक्ष्यते चैव नित्यशः ।
तत्र स्नात्वा दिवं(४) यान्ति क्रीडन्ते भुवि मानवाः ॥२४॥
फल्गुतीर्थं ततो गच्छेन्महानद्यां स्थितं परं ।
नागाज्जनार्द्दनात् कूपाद्वटाच्चोत्तरमानसात् ॥ २५ ॥
एतद् गयाशिरः(५) प्रोक्तं फल्गुतीर्थं तदुच्यते ।
मुण्डपृष्ठनगाद्याथ सारात् सारमथान्तरं ॥ २६ ॥

---

१ करोमि पितृदैवते इति ज० ।
२ भानवे नमो इति ङ० ।
३ देवर्षिगणसेवितमिति ग०, ज० च ।
४ तत्र स्नाता दिवमिति ज० ।
५ फल्गु गयाशिर इति घ०, ङ०, ज० च ।
देवर्षीगणसेवितमिति ख० ।

यस्मिन् फलति श्रीगौर्व्वी कामधेनुर्जलं मही।
दृष्टिरम्यादिकं यस्मात् फल्गुतीर्थं न फल्गुवत् ॥ २७ ॥
फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरं।
एतेन किं न पर्य्याप्तं नृणां सुकृतकारिणां ॥ २८ ॥
पृथिव्यां यानि तीर्थानि आसमुद्रात्सरांसि च।
फल्गुतीर्थं गमिष्यन्ति वारमेकं दिने दिने ॥ २९ ॥
फल्गुतीर्थे तीर्थराजे करोति स्नानमादृतः।
पितॄणां ब्रह्मलोकाप्त्यै आत्मनो भुक्तिमुक्तये ॥ ३० ॥
स्नात्वा श्राद्धी पिण्डदोऽथ नमेद्देव पितामह।
कलौ माहेश्वरा लोका अत्र देवो(१) गदाधरः ॥ ३१ ॥
पितामहो लिङ्गरूपी तन्नमामि महेश्वरं।
गदाधरं बलं काममनिरुद्ध नरायण(२) ॥ ३२ ॥
ब्रह्मविष्णुनृसिंहाख्यं वराहादिं नमाम्यह।
ततो गदाधरं दृष्ट्वा कुलानां शतमुद्धरेत् ॥ ३३ ॥
धर्मारण्यं द्वितीयेऽह्नि मतङ्गस्याश्रमे वरे।
मतङ्गवाप्यां संस्नाय श्राद्धकृत् पिण्डदो(३) भवेत् ॥ ३४ ॥
मतङ्गेशं सुसिद्धेशं(४) नत्वा चेदमुदीरयेत्।
प्रमाणं देवताः सन्तु लोकपालाश्च साक्षिणः ॥ ३५ ॥
मयागत्य मतङ्गेऽस्मिन् पितॄणां निष्कृतिः कृता।
स्नानतर्पणश्राद्धादिर्ब्रह्मतीर्थेऽथ(५) कूपके ॥ ३६ ॥

१ अत्रो देव इति ख०, ग०, घ०, ङ० च।
२ नारायणमिति ख०, ग०, ङ० च।
३ श्राद्ध पिण्डद इति ख०।
४ मतङ्गेशश्च सिद्धेशमिति ख०।
५ ब्रह्मतीर्थेचेति ख०।

तत्कूपयूपयोर्मध्ये श्राद्धं कुलशतोद्धृतौ ।
महाबोधितरुं नत्वा धर्मवान् स्वर्गलोकभाक् ॥ ३७ ॥
हतीये ब्रह्मसरसि([१]) स्नानं कुर्य्याद्यतव्रत ([२]) ।
स्नानं ब्रह्मसरस्तीर्थे([३]) करोमि ब्रह्मभूतये ॥ ३८ ॥
पितॄणां ब्रह्मलोकाय ब्रह्मर्षिगणसेविते ।
तर्पणं श्राद्धकृत् पिण्ड प्रदद्यात्तु प्रसेचनं([४]) ।
कुर्य्याच्च वाजपेयार्थी ब्रह्मयूपप्रदक्षिणं ॥ ३९ ॥

एको मुनिः कुम्भकुशाग्रहस्त
आम्रस्य मूले सलिलन्ददाति ।
आम्राश्च सिक्ताः पितरश्च तृप्ता
एका क्रिया द्व्यर्थकरी प्रसिद्धा ॥ ४० ॥

ब्रह्माणञ्च नमस्कृत्य कुलानां शतमुद्धरेत् ।
फल्गुतीर्थे चतुर्थेऽह्नि स्नात्वा देवादितर्पण ॥ ४१ ॥
कृत्वा श्राद्धं सपिण्डञ्च गयाशिरसि कारयेत् ।
पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः ॥ ४२ ॥
तत्र पिण्डप्रदानेन कुलानां शतमुद्धरेत् ।
मुण्डपृष्ठे पदं न्यस्तं महादेवेन धीमता ॥ ४३ ॥
मुण्डपृष्ठे शिरः साक्षाद् गयाशिर उदाहृतं ।

---

१ ब्रह्मसदसि इति ख०, ग०, ङ०, ज० च ।

२ यथागत्येत्यादि, स्नानं कुर्य्याद्यतव्रत इत्यन्त पाठः ङ० पुस्तके नास्ति ।

३ ब्रह्मसदस्तीर्थे इति घ० । ब्रह्मशिरस्तीर्थे इति ख० ।

४ तर्पणश्राद्धकृत पिण्डप्रदद्यापि प्रसेचनमिति ख०, ङ० च । तर्पणश्राद्धकृत् पिण्डप्रदद्यात्प्रसेचनमिति ज०, घ०, ङ०, ज० च ।

साक्षाद् गयाशिरस्तत्र फल्गुतीर्थाश्रमं(१) कृतं ॥ ४४ ॥
अमृतं तत्र वहति पितृणान्दत्तमक्षयं।
स्नात्वा दशाश्वमेधे तु दृष्ट्वा देवं पितामहं ॥ ४५ ॥
रुद्रपादं नरः स्पृष्ट्वा नेह भूयोऽभिजायते।
शमीपत्रप्रमाणेन पिण्डं दत्त्वा गयाशिरे(२) ॥ ४६ ॥
नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः।
पायसेनाथ पिष्टेन सक्तुना चरुणा तथा ॥ ४७ ॥
पिण्डदानं तण्डुलैश्च गोधूमैस्तिलमिश्रितैः।
पिण्डं दत्त्वा रुद्रपदे कुलानां शतमुद्धरेत् ॥ ४८ ॥
तथा विष्णुपदे श्राद्धपिण्डदो ह्यृणमुक्तिकृत्(३)।
पित्रादीनां शतकुलं स्वात्मानं(४) तारयेन्नरः ॥ ४९ ॥
तथा ब्रह्मपदे श्राद्धी(५) ब्रह्मलोकं नयेत्पितॄन्।
दक्षिणाग्निपदे तद्वद्गार्हपत्यपदे तथा ॥ ५० ॥
पदे आहवनीयस्य श्राद्धी यज्ञफलं लभेत्।
आवसथ्यस्य चन्द्रस्य(६) सूर्यस्य च गणस्य च ॥ ५१ ॥
अगस्त्यकार्त्तिकेयस्य श्राद्धी तारयते कुलं।
आदित्यस्य रथं नत्वा(७) कर्णादित्यं नमेन्नरः ॥ ५२ ॥

---

१ फल्गुतीर्थान्वयमिति क०, ख०, ग०, घ० च।
२ पिण्डं दत्त्वा गयाशिरे इति ग०।
३ पिण्डदः शूलमुक्तिकृदिति क०, ख० च। पिण्डदो धर्ममुक्तिकृदिति ग०।
४ स्वात्मानमिति ग०।
५ ब्रह्मपदे श्राद्धमिति घ०।
६ भवयमस्याय चेन्द्रस्येति ग०। आवसथ्यस्य चेन्द्रस्येति ख०। आव-सथ्यस्य सोमस्येति, घ०,
७ रथं दृष्ट्वेति क०, ख० च।

कनकेशपदं नत्वा गयाकेदारकं नमेत्।
सर्वपापविनिर्मुक्तः पितॄन् ब्रह्मपुरं नयेत् ॥ ५३ ॥
विशालोऽपि गयाशीर्षे पिण्डदोऽभूच्च पुत्रवान्।
विशालायां विशालोऽभूद्राजपुत्रोऽब्रवीद् द्विजान् ॥ ५४ ॥
कथं पुत्रादयः स्युर्मे द्विजा ऊचुर्विशालकं।
गयायां पिण्डदानेन तव सर्वं भविष्यति ॥ ५५ ॥
विशालोऽपि गयाशीर्षे पितृपिण्डान्ददौ ततः[१]।
दृष्ट्वाकाशे सितं रक्तं पुरुषांस्तांश्च पृष्टवान् ॥ ५६ ॥
के यूयन्तेषु चैवैकः सितः प्रोचे विशालकं।
अहं सितस्ते जनक इन्द्रलोकं गतः शुभात् ॥ ५७ ॥
मम रक्तः पिता पुत्र कृष्णश्चैव पितामहः।
अब्रवीत् नरकं प्राप्ता त्वया मुक्तीकृता वयं ॥ ५८ ॥
पिण्डदानाद् ब्रह्मलोकं व्रजाम इति ते गताः।
विशालः प्राप्तपुत्रादी राज्यं कृत्वा हरिं ययौ ॥ ५९ ॥
प्रेतराजः स्वमुक्त्यै च वणिजञ्चेदमब्रवीत्।
प्रेतैः सर्व्वैः सहार्त्तः सन् सुकृतं भुज्यते फलं ॥ ६० ॥
श्रवणद्वादशीयोगे कुम्भः सान्नश्च सोदकः[२]।
दत्तः पुरा स मध्याह्ने जीवनायोपतिष्ठते ॥ ६१ ॥
धनं गृहीत्वा मे गच्छ गयायां पिण्डदो भव।
वणिग्धनं गृहीत्वा तु गयायां पिण्डदोऽभवत् ॥ ६२ ॥

---

१ ददौ गत इति ख०, ग०, घ०, ङ०, छ०, ज० च।　　२ सान्नश्च सोदक इति ङ०।

प्रेतराजः सह प्रेतैर्मुक्तो नीतो हरेः पुरं।
गयाशीर्षे पिण्डदानादात्मानं स्वपितृंस्तथा(१) ॥ ६३ ॥
पितृवंशे मृता ये च मातृवंशे तथैव च।
गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः ॥ ६४ ॥
ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः(२)।
क्रियालोपगता ये च जात्यन्धाः पङ्गवस्तथा ॥ ६५ ॥
विरूपा आमगर्भा ये ज्ञाताज्ञाताः कुले मम।
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठतां ॥ ६६ ॥
ये केचित् प्रेतरूपेण तिष्ठन्ति पितरो मम।
ते सर्वे तृप्तिमायान्तु पिण्डदानेन(३) सर्वदा ॥ ६७ ॥
पिण्डो देयस्तु सर्वेभ्यः सर्वैश्च कुलतारकैः।
आत्मनस्तु तथा देयो ह्यक्षयं लोकमिच्छता ॥ ६८ ॥
पञ्चमेऽह्नि गदालोले स्नायान्मन्त्रेण बुद्धिमान्।
गदाप्रक्षालने तीर्थे गदालोलेऽतिपावने ॥ ६९ ॥
स्नानं करोमि संसारगदशान्त्यै जनार्द्दन।
नमोऽक्षयवटायैव अक्षयस्वर्गदायिने ॥ ७० ॥
पित्रादीनामक्षयाय सर्वपापक्षयाय च।
श्राद्धं वटतले(४) कुर्य्याद् ब्राह्मणानाञ्च भोजनं ॥ ७१ ॥
एकस्मिन् भोजिते विप्रे कोटिर्भवति भोजिता।
किम्पुनर्बहुभिर्भुक्तैः पितॄणां दत्तमक्षयं ॥ ७२ ॥

---

१ प्रेतराजेत्यादि, स्वपितृंस्तथेत्यन्तपाठो भ० पुस्तके नास्ति।
२ दानकर्मविवर्जिता इति भ०।
३ पिण्डदानेनेति ङ०।
४ वटतटे इति ञ०।

गयायामन्नदाता यः पितरस्तेन पुत्रिणः।
वटं वटेश्वरं नत्वा पूजयेत् प्रपितामहं ॥ ७३ ॥
अक्षयांल्लभते लोकान् कुलानां शतमुद्धरेत्।
क्रमतोऽक्रमतो वापि गयायात्रा महाफला ॥ ७४ ॥

इत्याग्नेये महापुराणे गयामाहात्म्ये गयायात्रा नाम पञ्चदशाधिकशततमोऽध्यायः।

---

## अथ षोड़शाधिकशततमोऽध्यायः।

—:०:—

### गयायात्राविधिः।

अग्निरुवाच। गायत्र्यैव महानद्यां स्नातः(१) सन्ध्यां समाचरेत्।
गायत्र्या अग्रतः प्रातः श्राद्धं पिण्डमथाक्षयं ॥ १ ॥
मध्याह्ने चोद्यनि(२) स्नात्वा गीतवाद्यैर्ह्युपास्य च।
सावित्रीपुरतः सन्ध्यां पिण्डदानञ्च तत्पदे ॥ २ ॥
अगस्त्यस्य पदे कुर्य्याद्योनिद्वारं प्रविश्य च।
निर्गतो न पुनर्योनिं प्रविशेन्मुच्यते भवात्(३) ॥ ३ ॥

---

१ प्रात इति ख०।
२ मध्याह्ने चरचोनि ग०।
३ मुच्यते भयादिति ख०, ङ० च।

बलिं काकशिलायाञ्च कुमारञ्च नमेत्ततः(१)।
स्वर्गद्वार्यां सोमकुण्डे वायुतीर्थेऽथ पिण्डदः॥ ४॥
भवेदाकाशगङ्गायां कपिलायाञ्च पिण्डद।
कपिलेशं शिवं नत्वा रुक्मिकुण्डे च पिण्डदः॥ ५॥
कोटीतीर्थे च कोटीशं नत्वामोघपदे नरः(२)।
गदालोले वानरके गोप्रचारे च पिण्डदः(३)॥ ६॥
नत्वा गायं वैतरण्यामेकविंशकुलोद्धृति।
श्राद्धपिण्डप्रदाता(४) स्यात् क्रौञ्चपादे च पिण्डदः(५)॥ ७॥
तृतीयायां विशालायां निश्चिरायाञ्च पिण्डदः।
ऋणमोक्षे पापमोक्षे भस्मकुण्डेऽथ भस्मना॥ ८॥
स्नानकृत् मुच्यते पापान्नमेद्देवं जनार्दनम्।
एष पिण्डो मया दत्तस्तव हस्ते जनार्दन॥ ९॥
परलोकगते मह्यमक्षय्यमुपतिष्ठतां।
गयायां पितृरूपेण स्वयमेव जनार्दन॥ १०॥
तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते वै ऋणत्रयात्।
मार्कण्डेयेश्वरं नत्वा नमेद्गृध्रेश्वरं नरः(६)॥ ११॥
मूलक्षेत्रे महेशस्य धारायां पिण्डदो भवेत्।

---

१ नमेश्वर इति ख०, ग०, घ०, ङ०, च० छ।

२ मागधदेश्वर इति ख०, ङ० च।

३ कपिलेशमित्यादि, क्रौञ्चपादे च पिण्डद इत्यन्तः पाठो ग० पुस्तके नास्ति।

४ श्राद्धे पिण्डप्रदातेति ख०।

५ भवेदाकाशगङ्गायामित्यादि, क्रौञ्चपादे च पिण्डद इत्यन्त पाठः ग० पुस्तके नास्ति।

६ नमेद्धृतेश्वर नर इति घ०।

(१)गृध्रकूटे गृध्रवटे धौतपादे च पिण्डदः ॥ १२ ॥
पुष्करिण्यां कर्दमाले रामतीर्थे च पिण्डदः ।
प्रभासेशन्नमेत् प्रेतशिलायां पिण्डदो भवेत् ॥ १३ ॥
दिव्यान्तरीक्षभूमिष्ठाः पितरो बान्धवादयः ।
प्रेतादिरूपा मुक्ताः(२) स्युः पिण्डैर्दत्तैर्मयाखिलाः ॥ १४ ॥
स्थानत्रये प्रेतशिला गयाशिरसि पावनी ।
प्रभासे प्रेतकुण्डे च पिण्डदस्तारयेत् कुलम् ॥ १५ ॥
वसिष्ठेशन्नमस्कृत्य तदग्रे पिण्डदो भवेत् ।
गयानाभौ सुषुम्णायां महाकोष्ठ्याञ्च पिण्डदः ॥ १६ ॥
गदाधराग्रतो मुण्डपृष्ठे देव्याश्च सन्निधौ ।
मुण्डपृष्ठं नमेदादौ क्षेत्रपालादिसंयुतम् ॥ १७ ॥
पूजयित्वा भयं न स्याद्विषरोगादिनाशनम् ।
ब्रह्माणञ्च नमस्कृत्य ब्रह्मलोकं नयेत् कुलम् ॥ १८ ॥
सुभद्रां बलभद्रञ्च प्रपूज्य पुरुषोत्तमम् ।
सर्वकामसमायुक्तः कुलमुद्धृत्य नाकभाक्(३) ॥ १९ ॥
हृषीकेशं नमस्कृत्य तदग्रे पिण्डदो भवेत् ।
माधवं पूजयित्वा च देवो वैमानिको(४) भवेत् ॥ २० ॥
महालक्ष्मीं प्रार्च्य गौरीं मङ्गलाञ्च सरस्वतीम् ।
पितॄनुद्धृत्य स्वर्गस्थो भुक्तभोगोऽत्र शास्त्रधीः ॥ २१ ॥

---

१ सर्वकामसमायुक्तः कुलमुद्धृत्य नाकभाक् इति पाठो ङ० पुस्तकेऽधिकोऽस्ति ।

२ प्रेतादिरूपमुक्ता इति ख०, ग०, घ०, ङ०, ज० च ।

३ कुलमुद्धृत्य स्वर्गभागिति ङ०, ज० च। सद्दिष्टेरमित्यादि, कुलमुद्धृत्य नाकभाक् इत्यन्तः पाठो ङ० पुस्तके नास्ति ।

४ देवैर्वैमानिक इति ख० ।

द्वादशादित्यमभ्यर्च्य वह्निं रेवन्तमिन्द्रकम् ।
रोगादिमुक्तः स्वर्गी स्याच्छ्रीकपर्द्दिविनायकम् ॥ २२ ॥
प्रपूज्य कार्त्तिकेयञ्च निर्विघ्नः सिद्धिमाप्नुयात् ।
सोमनाथञ्च कालेशङ्केदारं प्रपितामहम् ॥ २३ ॥
सिद्धेश्वरञ्च रुद्रेशं रामेशं ब्रह्मकेश्वरम् ।
अष्टलिङ्गानि गुह्यानि पूजयित्वा तु(१) सर्वभाक् ॥ २४ ॥
नारायणं वराहञ्च नारसिंहं नमेच्छ्रिये ।
ब्रह्मविष्णुमहेशाख्यं त्रिपुरघ्नमशेषदम् ॥ २५ ॥
सीतां रामञ्च गरुड़ं वामनं सम्प्रपूज्य च ।
सर्वकामानवाप्नोति ब्रह्मलोकं नयेत् पितॄन् ॥ २६ ॥
देवैः सार्द्धं सम्प्रपूज्य देवमादिगदाधरम् ।
ऋणत्रयविनिर्मुक्तस्तारयेत् सकलं कुलम् ॥ २७ ॥
देवरूपा शिला पुण्या तस्माद्देवमयी शिला ।
गयायां नहि तत् स्थानं यत्र तीर्थं न विद्यते ॥ २८ ॥
यन्नाम्ना पातयेत् पिण्डं तन्नयेद्ब्रह्म शाश्वतम् ।
फल्ग्वीशं फल्गुचण्डीं च प्रणम्याङ्गारकेश्वरम् ॥ २९ ॥
मतङ्गस्य पदे श्राद्धी भरताश्रमके भवेत् ।
हंसतीर्थे कोटितीर्थे यत्र पाण्डुशिलाप्रदः ॥ ३० ॥
तत्र स्यादग्निधारायां मधुस्रवसि पिण्डदः ।
रुद्रेशं किलिकिलेशं नमेद्वृद्धिविनायकम्(२) ॥ ३१ ॥
पिण्डदो धेनुकारण्ये पदे धेनोर्नमेच्च गाम् ।

---

१ पूजयित्वार्थमिति ख०, घ०, ङ०, ञ० च।

२ नमेद्वृद्धिविनायकमिति ख०, ग०, घ० च। नमेद्धृविनायकमिति ङ०।

सर्वान् पितॄंस्तारयेच्च सरस्वत्याञ्च पिण्डदः ॥ ३२ ॥
सन्ध्यामुपास्य सायाह्ने नमेद्देवीं सरस्वतीम्।
त्रिसन्ध्याकृद्भवेद्विप्रो वेदवेदाङ्गपारगः ॥ ३३ ॥
गयां प्रदक्षिणीकृत्य गयाविप्रान् प्रपूज्य च।
अन्नदानादिकं सर्वं कृतन्तत्राचयं भवेत् ॥ ३४ ॥
स्तुत्वा सम्प्रार्थयेद्देवमादिदेवं गदाधरम्।
गदाधरं गयावासं पित्रादीनां गतिप्रदम् ॥ ३५ ॥
धर्म्मार्थकाममोक्षार्थं योगदं प्रणमाम्यहम्।
देहेन्द्रियमनोबुद्धिप्राणाहङ्कारवर्जितम् ॥ ३६ ॥
नित्यशुद्धं बुद्धियुक्तं(१) सत्यं ब्रह्म नमाम्यहम्॥
आनन्दमद्वयं देवं देवदानववन्दितम् ॥ ३७ ॥
देवदेवीवृन्दयुक्तं सर्वदा प्रणमाम्यहम्।
कलिकल्मषकालार्त्तिदमनं(२) वनमालिनम् ॥ ३८ ॥
पालिताखिललोकेशं(३) कुलोद्धरणमानसम्।
व्यक्ताव्यक्तविभक्तात्माविभक्तात्मानमात्मनि ॥ ३९ ॥
स्थितं स्थिरतरं(४) सारं वन्दे घोराघमर्द्दनम्(५)।
आगतोऽस्मि गयां देव पितृकार्य्ये गदाधर: ॥ ४० ॥
त्वं मे साक्षी भवाद्येह अनृणोऽहमृणत्रयात्।

---

१ नित्यशुद्धबुद्धियुक्तमिति ग०, ङ०, च।
२ कालार्त्तिमाशमनमिति ग०। कालार्त्ति दमनमिति ग०, ङ०, घ०, ज० च।
३ पालिताखिलदेवेशमिति घ०।
४ स्थिततरमिति ग०, घ०, ङ० च।
५ वन्दे घमविमर्द्दनमिति ङ०। वन्दे संसारमर्द्दनमिति क०।

साक्षिणः सन्तु मे देवा ब्रह्मेशानादयस्तथा ॥ ४१ ॥
मया गयां समासाद्य पितॄणां निष्कृतिः कृता।
गयामाहात्म्यपठनाच्छ्राद्धादौ ब्रह्मलोकभाक् ॥ ४२ ॥
पितॄणामक्षयं श्राद्धमक्षयं ब्रह्मलोकदम्।

इत्याग्नेये महापुराणे गयामाहात्म्ये गयायात्रा नाम षोड़-
शाधिकशततमोऽध्यायः।



## अथ सप्तदशाधिकशततमोऽध्यायः।

### श्राद्धकल्पः।

अग्निरुवाच। कात्यायनो मुनीनाह यथा श्राद्धं तथा वदे।
गयादौ श्राद्धं कुर्वीत सङ्क्रान्त्यादौ विशेषतः ॥ १ ॥
काले वापरपक्षे च चतुर्थ्या ऊर्द्ध्वमेव वा।
सम्पाद्य च पदर्क्षे च(१) पूर्वेद्युश्च निमन्त्रयेत् ॥ २ ॥
यतीन् गृहस्थसाधून् वा स्नातकाञ्छ्रोत्रियान् द्विजान्।
अनवद्यान् कर्म्मनिष्ठान् शिष्टानाचारसंयुतान्(२) ॥ ३ ॥

१ सम्पाद्य परमर्क्षे चेति ख०। २ आचारसङ्कुलानिति ग०, ज० च।

वर्ज्जयेच्छिविकुष्ठाद्यैश्च स्तोयाविमन्त्रितान्।
स्नाताञ्छुचींस्तथा दान्तान् प्राङ्मुखान् देवकर्म्मणि ॥४॥
उपवेशयेत्त्रीन् पित्राद्यौनेकैकमुभयत्र वा।
एवं मातामहादेश्च शाकैरपि च कारयेत्॥ ५॥
तदह्नि ब्रह्मचारी स्यादकोपोऽत्वरितो मृदुः(१)।
सत्योऽप्रमत्तोऽनध्वन्यो स्वाध्यायञ्च(२) वाग्यतः ॥ ६॥
सर्वांश्च पङ्क्तिमूर्द्धन्यान् पृच्छेत् प्रश्ने तथासने।
दर्भानास्तीर्य्य द्विगुणान् पित्रे देवादिकाचरेत्॥ ७॥
विश्वान्देवानावाहयिष्ये पृच्छेदावाहयेति च।
विश्वेदेवास आवाह्य विकीर्य्याथ यवान् जपेत्॥ ८॥
विश्वे देवाः शृणुतेमं पितॄनावाहयिष्ये च।
पृच्छेदावाहयेत्युक्ते उशन्तस्त्वा समाह्वयेत्॥ ९॥
तिलान् विकीर्य्याथ जपेदायन्त्वित्यादि पित्र्यके।
सपवित्रे निषिक्ताद्वा शन्नो देवीरभि त्वचा॥ १०॥
यवोऽसीति यवान् दत्वा पित्रे सर्वत्र वै तिलान्।
तिलोऽसि सोमदैवत्यो गोसवो देवनिर्म्मितः।
प्रत्नमद्भिः पृक्तः स्वधया पितॄन् लोकान् प्रीणाहि नः स्वधा। इति।
स्रोय तेति ददेत्पूर्ण पात्रे हैमेऽथ राजते॥ ११॥
औदुम्बरे वा खड्गे वा पर्णपात्रे प्रदक्षिणम्।
देवानामपसव्यं तु पितॄणां सव्यमाचरेत्॥ १२॥

१ अनतिरोऽद्रुतरिति क॰। प॰, द॰ च।
२ पत्ते प्रपत्तोऽनध्वनो ह्यध्याध्यायचेति

एकैकस्य एकैकेन सपवित्रकरेषु च।

या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उतपार्थिवीर्याः।

हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः संश्योनाः सुहवा भवन्तु॥

विश्वे देवा एष वोऽर्घः स्वाहा च पितरेष ते॥१३॥
स्वधेयं पितामहादेः संस्रवात् प्रथमे चरेत्(१)।
पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यध॥१४॥
अथ गन्धपुष्पधूपदीपाच्छादनदानकं।
घृताक्तमन्नमुद्धृत्य पृच्छत्यग्नौ करिष्ये च॥१५॥
कुरुष्वेत्यभ्यनुज्ञातो जुहुयात्साग्निकोऽनले।
अनग्निकः पितृहस्ते(२) सपवित्रे तु मन्त्रतः॥१६॥
अग्नये कव्यवाहनाय स्वाहेति(३) प्रथमाहुतिः।
सोमाय पितृमतेऽथ यमायाङ्गिरसे परे॥१७॥
हुतशेषं चान्नपात्रे दत्त्वा पात्रं समालभेत्।

पृथिवी ते पात्रन्द्यौः पिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहेति।

जपेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत्॥१८॥
अपहतेति च तिलान् विकीर्यान्नं प्रदापयेत्।
जुषध्वमिति चोक्त्वाथ गायत्र्यादि ततो जपेत्॥१८॥

---

१ एकैकस्येत्यादि, प्रथमे चरेदित्यन्तपाठो भ० पुस्तके नास्ति।

२ अनग्निको जले चैवेति ङ०।

३ स्वधेति ख०।

देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वधायै स्वाहायै नित्यमेव नमो नमः(१) ॥ २० ॥
इमान् प्राप्यान्न विकिरेदपो दद्यात् सकृत् सकृत् ।
गायत्रीं पूर्ववज्जप्त्वा मधु मध्विति वै जपेत् ॥ २१ ॥
तृप्ताः स्थ इति सम्पृच्छेत् तृप्ताः स्म इति वै वदेत् ।
शेषमन्नमनुज्ञाप्य सर्व्वमन्नमथैकतः ॥ २२ ॥
उद्धृत्योच्छिष्टपार्श्वे तु कृत्वा चैवावनेजनं ।
दद्यात्कुशेषु त्रीन् पिण्डानाचान्तेषु परे जगुः ॥ २३ ॥
आचान्तेषूदकं पुष्पाण्यक्षतानि प्रदापयेत् ।
अक्षय्योदकमेवाथ आशिषः प्रार्थयेन्नरः(२) ॥ २४ ॥
अघोराः पितरः सन्तु गोत्रन्नो वर्द्धतां सदा ।
दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ॥ २५ ॥
श्रद्धा च नो माव्यगमद्बहुदेयं च नोऽस्त्विति ।
अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि ॥ २६ ॥
याचितारश्च नः सन्तु मा च याचिष्म कञ्चन ।
स्वधावाचनीयान् कुशानास्तीर्य्य सपवित्रकान्(३) ॥२७॥
स्वधां वाचयिष्ये पृच्छेदनुज्ञातश्च वाच्यतां ।
पितृभ्यः पितामहेभ्यः प्रपितामहमुख्यके ॥ २८ ॥
स्वधोच्यतामस्तु स्वधा उच्यमानस्तथैव च ।
अपो निषिञ्चेदुत्तानं पात्र कृत्वाथ दक्षिणां ॥ २९ ॥

१ स्वाहायै नित्यमेव भवन्त्विति इति ख०, छ० च ।

२ प्रार्थयेत्तत इति ख०, ग०, ङ० च ।

३ अघोरा पितर इत्यादि, आस्तीर्य्य सपवित्रकानित्यन्त पाठ ख०, छ०, पुस्तकद्वये नास्ति ।

यथाशक्ति प्रदद्याच्च दैवे पैत्रेऽथ वाचयेत्।
विश्वे देवाः प्रीयन्ताञ्च वाजे वाजे विसर्जयेत् ॥ ३० ॥
आमावाजस्येत्यनुव्रज्य कृत्वा विप्रान् प्रदक्षिणं।
गृहे विशेदमावास्यां मासि मासि चरेत्तथा ॥ ३१ ॥
एकोद्दिष्टं प्रवक्ष्यामि श्राद्धं पूर्ववदाचरेत्।
एकं पवित्रमेकार्घं एकं पिण्डम्प्रदापयेत् ॥ ३२ ॥
आवाहनाग्नौकरणं विश्वे देवा न चात्र हि।
तृप्तिप्रश्ने स्वदितमिति वदेत्सुस्वदितं द्विजः ॥ ३३॥
उपतिष्ठतामित्यक्षय्ये विसर्गे चाभिरम्यतां।
अभिरताः स्म इत्यपरे शेषं पूर्ववदाचरेत् ॥ ३४ ॥
सपिण्डीकरणं वक्ष्ये अब्दान्ते मध्यतोऽपि वा।
पितृणां त्रीणि पात्राणि एकम्प्रेतस्य पावक ॥ ३५ ॥
सपवित्राणि चत्वारि तिलपुष्पयुतानि च।
गन्धोदकेन युक्तानि(१) पूरयित्वाभिषिञ्चति ॥ ३६ ॥
प्रेतपात्रं पितृपात्रे ये समना इति द्वयात्।
पूर्ववत् पिण्डदानादि प्रेतानां पितृता भवेत् ॥ ३७ ॥
अथाभ्युदयिकं श्राद्धं वक्ष्ये सर्वं तु पूर्ववत्।
जपेत् पितृमन्त्रवर्ज्यं पूर्वाह्णे तत् प्रदक्षिणं ॥ ३८ ॥
उपचारा ऋजुकुशास्तिलार्थैश्च यवैरिह(२)।
तृप्तिप्रश्नस्तु सम्पन्नं सुसम्पन्नं वदेद्द्विजः ॥ ३९ ॥

१ गन्धोदकेन सिक्तानि इति ग०। इत्यन्त पाठो ख० पुस्तके नास्ति।
२ ऋचाश्च दक्षिणामन्ताद्धि, यवैरिह

दध्यक्षतबदराद्याः(१) पिण्डा नान्दीमुखान् पितॄन् ।
आवाहयिष्ये पृच्छेत प्रीयन्तामिति चाचयेत् ॥ ४० ॥
नान्दीमुखाश्च पितरो वाचयिष्येऽथ पृच्छति ।
नान्दीमुखान् पितृगणान् प्रीयन्तामित्यथो वदेत् ॥४१॥
नान्दीमुखाश्च पितरस्तत्पिता प्रपितामहः ।
मातामह प्रमातामहो वृद्धप्रमातामहः ॥ ४२ ॥
स्वधाकारश्च युञ्जीत युग्मान् विप्रांश्च भोजयेत् ।
तृप्तिं वक्ष्ये पितॄणां च ग्राम्यैरोषधिभिस्तथा ॥ ४३ ॥
मासतृप्तिस्तथारण्यैः(२) कन्दमूलफलादिभिः ।
मत्स्यैर्मासद्वयं मार्गैस्त्रयं वै शाकुनेन च ॥ ४४ ॥
चतुरो रौरवेणाथ(३) पञ्च षट् छागलेन तु(४) ।
कौर्मेण सप्त चाष्टौ च वाराहेण नवैव तु ॥ ४५ ॥
मेषमांसेन दश च माहिषैः पार्षतैः शिवैः ।
संवत्सरन्तु गव्येन पयसा पायसेन वा ॥ ४६ ॥
वार्द्धीनसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ।
खड्गमांसं कालशाकं लोहितच्छागलो(५) मधु ॥ ४७ ॥
महाशल्काश्च वर्षासु मघाश्राद्धमघाचयं(६) ।
मन्त्राध्याय्यग्निहोत्री च शाखाध्यायी षडङ्गवित् ॥ ४८॥
त्रिणाचिकेतः त्रिमधुर्धर्मद्रोणस्य(७) पाठकः ।
त्रिसुपर्णज्येष्ठसामज्ञानी स्युः पङ्क्तिपावनाः ॥ ४९ ॥

---

१ दध्यक्षतवदरांद्या इति ग०, घ० च ।
२ तथा वन्यैरिति ख०, ङ० च ।
३ चतुर रौरवेणायेति घ० ।
४ पञ्चक छागलेन तु इति क० ।
५ लोहितच्छागक इति ग०, घ०, ङ० च ।
६ मघाश्राद्धमिहाचयमिति ख० ।
७ जलद्रोणस्येति ख० ।

काम्यानां कलमाख्यास्ये(१) प्रतिपत्सु धनं बहु ।
स्त्रियः परा द्वितीयायाञ्चतुर्थ्यां धर्मकामदः ॥ ५० ॥
पञ्चम्यां पुत्रकामस्तु षष्ठ्याञ्च श्रैष्ठ्यभागपि(२) ।
कृषिभागी च सप्तम्यामष्टम्यामर्थलाभकः ॥ ५१ ॥
नवम्याञ्च एकशफा(३) दशम्याङ्गोगणो भवेत् ।
एकादश्यां परीवारी द्वादश्यान्धनधान्यकं ॥ ५२ ॥
ज्ञातिश्रैष्ठं त्रयोदश्यां चतुर्दश्याञ्च शस्त्रतः(४) ।
मृतानां श्राद्धं सर्व्वासममावास्यां समीरितं(५) ॥ ५३ ॥
सप्त व्याधा दशारण्ये(६) मृगाः कालञ्जरे गिरौ ।
चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ॥ ५४ ॥
तेऽपि जाताः(७) कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ।
प्रस्थिता दूरमध्वानं यूयन्तेभ्योऽवसीदत ॥ ५५ ॥
श्राद्धादौ पठिते श्राद्धं पूर्णं स्याद्ब्रह्मलोकदं ।
श्राद्धं कुर्य्याच्च पुत्रादिः(८) पितुर्जीवति तत्पितुः ॥५६॥
तत्पितुस्तत्पितुः कुर्य्याज्जीवति प्रपितामहे ।
पितुः पितामहस्याथ परस्य प्रपितामहात्(९) ॥ ५७ ॥

---

१ कालमाख्यास्ये इति ख०, ङ० च ।
२ श्रैष्ठभागपि इति ख०, ग०, घ०, ङ० च । श्रेष्ठभागपि इति ख० ।
३ नवम्यां मे एकशफानिति ख० ।
४ चतुर्दश्याञ्च शस्त्रतः इति ख०, ङ० च ।
५ मृतानां श्राद्धं सर्व्वासममावास्या समीरिता इति ख० ।
६ दशार्णेषु इति ख०, ग०, घ०, ङ० च ।
७ तेऽभिजाता इति ख०, ङ० च ।
८ कुर्य्यात् सुपुत्रोऽपि इति ङ० ।
९ तत्पितुरित्यादिः,प्रपितामहादित्यन्तः पाठो ख० पुस्तके नास्ति ।

एवं मात्रादिकस्यापि तथा मातामहादिके ।
श्राद्धकल्पं पठेद्यस्तु स लभेत् श्राद्धकृत्फलं(१) ॥ ५८ ॥
तीर्थे युगादौ मन्वादौ श्राद्धं दत्तमथाक्षयं ।
अश्वयुक्छुक्लनवमी द्वादशी कार्त्तिके तथा ॥ ५९ ॥
तृतीया चैव माघस्य तथा भाद्रपदस्य च ।
फाल्गुनस्याप्यमावास्या पौषस्यैकादशी तथा ॥ ६० ॥
आषाढस्यापि दशमी माघमासस्य सप्तमी ।
श्रावणे चाष्टमी कृष्णा तथाषाढे च पूर्णिमा ॥ ६१ ॥
कार्त्तिकी फाल्गुनी तद्वज् ज्यैष्ठे पञ्चदशी सिता ।
स्वायम्भुवाद्या मनवस्तेषामाद्याः किलाक्षयाः ॥ ६२ ॥
गया प्रयागो गङ्गा च कुरुक्षेत्रं च नर्म्मदा ।
श्रीपर्वतः प्रभासश्च शालग्रामो वराणसी(२) ॥ ६३ ॥
गोदावरी तेषु श्राद्धं श्रीपुरुषोत्तमादिषु ।

इत्याग्नेये महापुराणे श्राद्धकल्पो नाम सप्तदशाधिकशततमोऽध्यायः ।

## अथाष्टादशाधिकशततमोऽध्यायः ।



### भारतवर्षं ।

अग्निरुवाच । उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणं ।
वर्षं तद् भारतं नाम नवसाहस्रविस्तृतं ॥ १ ॥
कर्म्मभूमिरियं स्वर्गमपवर्गं च गच्छतां ।

---

१ यत्, लभेच्छ्राद्धजं फलमिति ख०, घ०, ङ०,च ।
२ वाराणसी इति ख०, ग०, घ०, छ० च ।

महेन्द्रो मलयः सह्यः शुक्तिमान् हेमपर्वतः(१) ॥ २ ॥
विन्ध्यश्च पारिपात्रश्च सप्तात्र कुलपर्वताः ।
इन्द्रद्वीपः कसेरुश्च ताम्रवर्णो गभस्तिमान् ॥ ३ ॥
नागद्वीपस्तथा सौम्यो गान्धर्वस्त्वथ वारुणः ।
अयं तु नवमस्तेषां द्वीपः सागरसंवृतः ॥ ४ ॥
योजनानां सहस्राणि द्वीपोयं दक्षिणोत्तरात् ।
नव भेदा भारतस्य(२) मध्यभेदेऽथ पूर्वतः ॥ ५ ॥
किराता यवनाश्चापि ब्राह्मणाद्याश्च मध्यतः ।
वेदस्मृतिमुखा नद्यः पारिपात्रोद्भवास्तथा ॥ ६ ॥
विन्ध्याच्च नर्मदाद्याः स्युः सह्यात्तापी पयोष्णिका ।
गोदावरीभीमरथीकृष्णवेणादिकास्तथा ॥ ७ ॥
मलयात् कृतमालाद्यास्त्रिसामाद्या महेन्द्रजाः ।
कुमाराद्याः शुक्तिमतो(३) हिमाद्रेश्चन्द्रभागका ॥ ८ ॥
पश्चिमे कुरुपाञ्चालमध्यदेशादयःस्थिताः ।

इत्याग्नेये महापुराणे भारतवर्षं नामाष्टादशाधिकशततमोऽध्यायः ।

---

## अथैकोनविंशत्यधिकशततमोऽध्यायः ।

—:०:—

### महाद्वीपादि ।

अग्निरुवाच । लक्षयोजनविस्तारं जम्बूद्वीपं समावृतम् ।

---

१ शुक्तिमानृक्षपर्वत इति ख०, ङ० च । शुक्तिमानृक्षपर्वत इति ज० । २ नव भेदा भवन्त्यस्येति भ० । ३ शुक्तिमत इति ख०, ग०, घ०, भ० च ।

लक्षयोजनमानेन चीरोदेन समन्ततः ॥ १ ॥
संवेष्ट्य क्षारमुदधिं प्लक्षद्वीपस्तथा स्थितः(१)।
सप्त मेधातिथेः पुत्राः प्लक्षद्वीपेश्वरास्तथा ॥ २ ॥
स्याच्छान्तभयः शिशिरः सुखोदय इतः परः।
आनन्दश्च शिवः क्षेमो ध्रुवस्तन्नामवर्षकं ॥ ३ ॥
मर्य्यादाशैलो गोमेधश्चन्द्रो नारददुन्दुभी।
सोमकः सुमनाः शैलो वैभ्राजास्तज्जनाः शुभाः ॥४॥
नद्यः प्रधानाः सप्तात्र प्लक्षाच्छाकान्तिकेषु च।
जीवनं पञ्चसाहस्रं धर्म्मो वर्णाश्रमात्मकः(२) ॥५॥
आर्य्यकाः कुरवश्चैव विविंशा भाविनश्च ते।
विप्राद्यास्तैश्च सोमोऽर्च्यो द्विलक्षश्चाब्धिलक्षकः ॥६॥
मानेनेक्षुरसोदेन वृतो द्विगुणशाल्मलः।
वपुष्मतः सप्त पुत्राः शाल्मलेशास्तथाऽभवन् ॥७॥
श्वेतोऽथ हरितश्चैव जीमूतो लोहितः क्रमात्।
वैद्युतो मानसश्चैव सुप्रभो नाम वर्षकः ॥८॥
द्विगुणो द्विगुणेनैव सुरोदेन समावृतः।
कुमुदश्चानलश्चैव(३) तृतीयस्तु वलाहकः ॥९॥
द्रोणः कंकोऽथ(४) महिषः ककुद्मान् सप्त निम्नगाः।
कपिलाश्चारुणाः पीताः कृष्णाः स्युर्ब्राह्मणादयः ॥१०
वायुरूपं यजन्ति स्म सुरोदेनायमावृतः(५)।

---

१ द्वीपस्तथा स्मृत इति ख०।
२ वर्णाश्रमात्मक इति ख०, ग०, ज० च।
३ कुमुदश्चोन्नतश्चैवेति घ०, ङ०, ख०, ... च।
४ कर्कोऽथेति ख०।
५ सुरोदेन समावृत इति ख०।

ज्योतिष्मतः कुशेशाः स्युरुद्भिज्जो धेनुमान् सुतः ॥११॥
द्वैरथो लंबनो धैर्यः कपिलश्च प्रभाकरः ।
विप्राद्या दधिमुख्यास्तु ब्रह्मरूपं यजन्ति ते ॥१२॥
विद्रुमो(१) हेमशैलश्च द्युतिमान् पुष्पवांस्तथा ।
कुशेशयो हरिः शैलो वर्षार्थं मन्दराचलः ॥१३॥
वेष्टितोऽयं घृतोदेन क्रौञ्चद्वीपेन सोऽप्यथ ।
क्रौञ्चेश्वराः द्युतिमतः पुत्रास्तन्नामवर्षकाः ॥१४॥
कुशलो मनोनुगश्चोष्णः प्रधानोऽथान्धकारकः ।
मुनिश्च दुन्दुभिः सप्त सप्त शैलाश्च निम्नगाः(२) ॥१५॥
क्रौञ्चश्च वामनश्चैव तृतीयश्चान्धकारकः(३) ।
देवावृत् पुण्डरीकश्च दुन्दुभिर्द्विगुणो मिथः ॥१६॥
द्वीपा द्वीपेषु ये शैला यथा द्वीपानि ते तथा ।
पुष्कराः पुष्कला धन्यास्तीर्थ्या(४) विप्रादयो हरिम् ॥१७॥
यजन्ति क्रौञ्चद्वीपस्तु दधिमण्डोदकावृतः ।
संवृतः शाकद्वीपेन हव्याच्छाकेश्वराः सुताः ॥१८॥
जलदश्च कुमारश्च सुकुमारो मणीवकः ।
कुशोत्तरश्चो मोदाकी द्रुमस्तन्नामवर्षकाः ॥१९॥
उदयाख्यो जलधरो रैवतः श्यामकोद्रकौ ।
आम्बिकेयस्तथा रम्यः केशरी सप्त निम्नगाः ॥ २०॥

---

१ वद्राम इति ख॰ । विक्रम इति घ॰, ङ॰ च ।
२ कुमश इत्यादिः, निम्नगा इत्यन्तः पाठो ख॰ पुस्तके नास्ति ।
३ मनोयथानुकारक इति ख॰, भ॰ च ।
४ पुष्कलावत्या तीर्थ्या इति घ॰ ।

मगा मगधमानस्या(१) मन्दगाश्च द्विजातयः(२)।
यजन्ति सूर्य्यरूपं तु(३) शाकः क्षीराब्धिना वृतः ॥ २१ ॥
पुष्करेणावृतः सोऽपि द्वौ पुत्रौ सवनस्य च।
महावीतो धातकिश्च वर्षे द्वे नामचिह्निते(४)। २२ ॥
एकोऽद्रिर्मानसाख्योऽत्र मध्यतो वलयाकृतिः।
योजनानां सहस्राणि विस्तारोच्छ्रायतः समः ॥ २३ ॥
जीवनं दशसाहस्रं सुरैर्ब्रह्मात्र पूज्यते।
स्वादूदकेनोदधिना वेष्टितो द्वीपमानतः ॥ २४ ॥
ऊनातिरिक्तता चापां समुद्रेषु न जायते।
उदयास्तमनेष्विन्दोः पक्षयोः शुक्लकृष्णयोः ॥ २५ ॥
दशोत्तराणि पञ्चैव(५) अङ्गुलानां शतानि वै।
अपां वृद्धिक्षयौ दृष्टौ सामुद्रीणां(६) महामुने ॥ २६ ॥
स्वादूदका बहुगुणा(७) भूर्हैमी जन्तुवर्ज्जिता।
लोकालोकस्ततः शैलो योजनायुतविस्तृतः ॥ २७ ॥
लोकालोकस्तु तमसावृतोऽथाण्डकटाहतः।
भूमिः साण्डकटाहेन पञ्चाशत्कोटिविस्तरा(८) ॥ २८ ॥

इत्याग्नेये महापुराणे द्वीपादिवर्णनं नामैकोनविंशत्यधिकशततमोऽध्यायः ॥

---

१ मागाग्यमगमानसा इति ख०, घ० च। ६ समुद्राणामिति ग०, ङ०, छ० च।
२ द्विजाद्य इति क०, ख०, ङ०, ग० छ०। ७ स्वादूदका द्विदिग्गुणेति घ०, ङ० च
३ सूर्य्यरूपन्तु इति ग०, ज० च। स्वादूदका तु द्विगुणेति घ०, ज० च।
४ वर्षे द्वे नामचिह्निते इति ङ०। स्वादूदका तु त्रिगुणेति ग०, छ० च।
५ प्रधावेति ग०, छ० च। ८ पञ्चाशत्कोटिविस्तृतेति ङ०।

# अथ विंशत्यधिकशततमोऽध्यायः ।



## भुवनकोषः ।

अग्निरुवाच । विस्तारस्तु स्मृतो भूमेः सहस्राणि च सप्ततिः ।
उच्छ्रायो दशसाहस्रं पातालञ्चैकमेककं ॥ १ ॥
अतलं वितलञ्चैव नितलञ्च गभस्तिमत् ।
महाख्यं सुतलञ्चाग्र्यं पातालञ्चापि सप्तमं ॥ २ ॥
कृष्णपीतारुणाः शुक्लशर्कराशैलकाञ्चनाः ।
भूमयस्तेषु रम्येषु सन्ति दैत्यादयः सुखं ॥ ३ ॥
पातालानामधश्चास्ते शेषो विष्णुश्च तामसः ।
गुणानन्त्यात्स चानन्तः शिरसा धारयन्महीं ॥ ४ ॥
भुवोऽधो नरका नैके न पतेत्तत्र वैष्णवः ।
रविणा भासिता पृथ्वी यावत्तावन्नभो मतं ॥ ५ ॥
भूमेर्योजनलक्षन्तु वशिष्ठरविमण्डलं ।
रवेर्लक्षेण चन्द्रश्च लक्षान्नाक्षत्रमिन्दुतः ॥ ६ ॥
द्विलक्षाद्भाद्बुधश्चास्ते बुधाच्छुक्रो द्विलक्षतः ।
द्विलक्षेण कुजः शुक्राद्भौमाद् द्विलक्षतो गुरुः ॥ ७ ॥
गुरोर्द्विलक्षतः सौरिर्लक्षात्सप्तर्षयः शनेः ।
लक्षाद् ध्रुवो ह्यृषिभ्यस्तु त्रैलोक्यश्चोच्छ्रयेण च ॥ ८ ॥
ध्रुवात् कोट्या महर्लोको यत्र ते कल्पवासिनः ।

जनो द्विकोटितस्तस्मायत्रासन्(१) सनकादयः ॥ ८ ॥
जनात्तपश्चाष्टकोट्या वैराजा यत्र देवताः ।
षण्णवत्या तु कोटीनान्तपसः सत्यलोककः ॥ १० ॥
अपुनर्मारका यत्र ब्रह्मलोको हि स स्मृतः ।
पादगस्थस्तु भूर्लोको भुवः सूर्य्यान्तरः स्मृतः ॥ ११ ॥
स्वर्गलोको ध्रुवान्तस्तु नियुतानि(२) चतुर्दश ।
एतदण्डकटाहेन वृतो ब्रह्माण्डविस्तरः ॥ १२ ॥
वारिवह्ननिलाकाशैस्ततो भूतादिना बहिः ।
वृतं दशगुणैरण्ड भूतादिर्महता तथा ॥ १३ ॥
दशोत्तराणि शेषाणि एकैकस्यान्महामुने ।
महान्तञ्च समावृत्य प्रधानं समवस्थितं ॥ १४ ॥
अनन्तस्य न तस्यान्तः सङ्ख्यानं नापि विद्यते(३) ।
हेतुभूतमशेषस्य प्रकृतिः सा परा मुने ॥ १५ ॥
असङ्ख्यातानि चाण्डानि तत्र जातानि चेदृशां ।
दारुण्यग्निर्यथा तैलं तिले तद्वत् पुमानिति(४) ॥ १६ ॥
प्रधाने च स्थितो(५) व्यापी चेतनात्मात्मवेदनः ।
प्रधानञ्च पुमांश्चैव सर्व्वभूतात्मभूतया(६) ॥ १७ ॥
विष्णुशक्त्या महाप्राज्ञ वृतौ संश्रयधर्म्मिणौ ।
तयोः(७) सैव पृथक्भावे कारणं संश्रयस्य च ॥ १८ ॥

---

१ यत्र वै इति ङ० ।
२ अयुतानि इति ज० ।
३ सङ्ख्यानं नैव विद्यते इति ग०, ख०, घ । सङ्ख्यानं न च विद्यते इति ग० ।
४ पुमानपि इति ग०, ङ० च ।
५ प्रधानेऽवस्थित इति ख०, ग०, ङ० च ।
६ सर्व्वभूतानुभूतया इति ङ० ।
७ द्वयोरिति ङ० ।

क्षोभकारणभूतश्च सर्गकाले महामुने ।
यथा शैत्यं जले वातो बिभर्त्ति कणिकागतं ॥ १९ ॥
जगच्छक्तिस्तथा विष्णोः प्रधानप्रतिपादिका ।
विष्णुशक्तिं समासाद्य देवाद्याः सम्भवन्ति हि ॥ २० ॥
स च विष्णुः स्वयं ब्रह्म यतः सर्व्वमिदं जगत् ।
योजनानां सहस्राणि भास्करस्य रथो नव ॥ २१ ॥
ईषादण्डस्तथैवास्य द्विगुणो मुनिसत्तम ।
सार्द्धकोटिस्तथा सप्त नियुतान्यधिकानि वै ॥ २२ ॥
योजनानान्तु तस्याक्षस्तत्र चक्रं प्रतिष्ठितं ।
त्रिनाभिमति पञ्चारं षण्नेमि द्व्ययनात्मकं ॥ २३ ॥
संवत्सरमयं कृत्स्नं कालचक्रं प्रतिष्ठितं ।
चत्वारिंशत्सहस्राणि द्वितीयाक्षो विवस्वतः ॥ २४ ॥
पञ्चान्यानि तु सार्द्धानि स्यन्दनस्य महामते ।
अक्षप्रमाणमुभयोः प्रमाणन्तद्युगार्द्धयोः ॥ २५ ॥
ह्रस्वोऽक्षस्तद्युगार्द्धञ्च ध्रुवाधारं रथस्य वै ।
हयाश्च सप्त छन्दांसि गायत्र्यादीनि सुव्रत ॥ २६ ॥
उदयास्तमनं ज्ञेयं दर्शनादर्शनं रवेः ।
यावन्मात्रप्रदेशे तु वशिष्ठोऽवस्थितो ध्रुवः ॥ २७ ॥
स्वयमायाति तावत्तु भूमेराभूतसम्प्लवे(१) ।
ऊर्द्ध्वोत्तरमृषिभ्यस्तु ध्रुवो यत्र व्यवस्थितः ॥ २८ ॥
एतद्विष्णुपदं दिव्यं तृतीयं व्योम्नि भास्वरं ।
निर्धूतदोषपङ्कानां यतीनां स्थानमुत्तमं ॥ २९ ॥

---

१ भूमेराहृतसम्प्लवे इति घ०, ञ० च ।

ततो गङ्गा प्रभवति स्मरणात् पापनाशनी[1]।
दिवि रूपं हरेर्ज्ञेयं शिशुमाराकृति प्रभो॥ ३०॥
स्थितः पुच्छे ध्रुवस्तत्र भ्रमन् भ्रामयति ग्रहान्।
स रथोऽधिष्ठितो देवैरादित्यैरृषिभिर्वरैः[2]॥ ३१॥
गन्धर्वैरप्सरोभिश्च ग्रामणीसर्पराक्षसैः[3]।
हिमोष्णवारिवर्षाणां कारणं भगवान् रविः॥ ३२॥
ऋग्वेदादिमयो विष्णुः स शुभाशुभकारणं।
रथस्त्रिचक्रः सोमस्य कुन्दाभास्तस्य वाजिनः[4]॥ ३३॥
वामदक्षिणतो युक्ता दश तेन चरत्यसौ।
त्रयस्त्रिंशत्सहस्राणि त्रयस्त्रिंशच्छतानि च॥ ३४॥
त्रयस्त्रिंशत्तथा देवाः पिबन्ति क्षणदाकरं[5]।
एकां कलाञ्च पितर एकामारश्मिसंस्थिताः॥ ३५॥
वायुग्निद्रव्यसम्भूतो रथश्चन्द्रसुतस्य च।
अष्टाभिस्तुरगैर्युक्तो बुधस्तेन चरत्यपि॥ ३६॥
शुक्रस्यापि रथोऽष्टाश्वो भौमस्यापि रथस्तथा।
बृहस्पते रथोऽष्टाश्वः शनेरष्टाश्वको रथः॥ ३७॥
स्वर्भानोश्च रथोऽष्टाश्वः केतोश्चाष्टाश्वको रथः।
यद्रूप वैष्णवः कायस्ततो विप्र वसुन्धरा॥ ३८॥

---

१ सर्वपापप्रणाशिनीति ख०।
२ ऋषिभी रवेरिति क०, घ०, ङ०, छ० च।
३ गन्धर्व इत्यादि, राक्षसैरित्यन्त पाठ ख० पुस्तके नास्ति।
४ कुन्दाभास्तु वाजिन इति क०, घ०, ङ० च।
५ क्षणदाकरमिति ख०।

पद्माकारा समुद्भूता पर्वताद्यादिसंयुता ।
ज्योतिर्भुवनमद्यद्रिसमुद्रवनकं हरिः ॥ ३९ ॥
यदस्ति नास्ति तद्विष्णुर्विष्णुर्ज्ञानविजृम्भित(१) ।
न विज्ञानमृते किञ्चिज् ज्ञानं विष्णुः परम्पदं ॥ ४० ॥
तत् कुर्य्याद् येन विष्णुः स्यात् सत्यं ज्ञानमनन्तकं ।
पठेद् भुवनकोषं हि यः सोऽवाप्तसुखात्मभाक् ॥ ४१ ॥
ज्योतिःशास्त्रादिविद्यासु शुभाशुभाधिपो हरिः(२) ।

इत्याग्नेये महापुराणे भुवनकोषो नाम विंशत्यधिक-
शततमोऽध्यायः ॥

---

## अथैकविंशाधिकशततमोऽध्यायः ।

### ज्योतिःशास्त्रं ।

अग्निरुवाच । ज्योतिःशास्त्रं प्रवक्ष्यामि शुभाशुभविवेकदं ।
चातुर्लक्षस्य सारं यत् तज् ज्ञात्वा सर्व्वविद्भवेत् ॥ १ ॥
षड्टके(३) विवाहो न न च द्विद्वादशे स्त्रियाः ।
न त्रिकोणे त्वथ प्रीतिः(४) शेषे च समसप्तके ॥ २ ॥

---

१ ज्ञानविज्ञानजृम्भितमिति ज० ।
२ शुभाशुभात्मको हरिरिति ख०, ङ० च ।
३ षट्काष्टके इति ख०, ग०, घ०, ङ०, ज० च ।
४ न त्रिकोणेषु प्रीति स्यादिति ज० ।

द्विद्वादशे त्रिकोणे च मैत्रोचेन्नपयोर्यदि।
भवेदेकाधिपत्यञ्च ताराप्रीतिरथापि वा ॥ ३ ॥
तथापि कार्य्यः संयोगो न तु षट्काष्टके पुनः।
जीवे भृगौ चास्तमिते म्रियते च पुमान् स्त्रिया ॥ ४ ॥
गुरुक्षेत्रगते सूर्य्ये सूर्य्यक्षेत्रगते गुरौ।
विवाहं न प्रशंसन्ति कन्यावैधव्यक्रद्भवेत् ॥ ५ ॥
अतिचारे त्रिपक्षं स्याद्वक्रे मासचतुष्टयं।
व्रतोद्वाहौ न कुर्व्वीत गुरोर्वक्रातिचारयोः ॥ ६ ॥
चैत्रे पौषे न रिक्तासु हरौ सुप्ते कुजे रवौ।
चन्द्रक्षये चाशुभं स्यात् सन्ध्याकालः शुभावहः ॥ ७ ॥
रोहिणी चोत्तरा मूलं स्वाती हस्तोऽथ रेवती।
तुले न मिथुने शस्तो विवाहः परिकीर्त्तितः ॥ ८ ॥
विवाहे कर्णवेधे च व्रते पुंसवने तथा।
प्राशने चाद्यचूड़ायां विद्धर्चञ्च विवर्ज्जयेत्([१]) ॥ ९ ॥
श्रवणे मूलपुष्ये च सूर्य्यमङ्गलजीवके।
कुम्भे सिंहे च मिथुने कर्म्म पुंसवनं स्मृतं ॥ १० ॥
हस्ते मूले मृगे पौष्णे बुधे शुक्रे च निष्कृतिः।
अर्केन्दुजीवभृगुले मूले ताम्बूलभक्षणं ॥ ११ ॥
अन्नस्य प्राशनं शुक्रे जीवे मृगे च मीनके([२])।
हस्तादिपञ्चके पुष्ये कृत्तिकादित्रये तथा ॥ १२ ॥

---

१ विद्धर्च विवर्जयेत् इति ख०, ग०, २ जीवे मकरमीनके इति क०। ॥
॥ घ०, ङ०, ज०, ञ० च।

अश्विन्यामथ रेवत्यां नवान्नफलभक्षणं ।
पुष्या हस्ता तथा ज्येष्ठा रोहिणी श्रवणाश्विनी ॥ १३ ॥
स्वातिसौम्ये च भैषज्यं कुर्य्यादन्यत्र वर्जयेत् ।
पूर्वात्रयं(१) मघा याम्यं पावनं(२) श्रवणत्रयं ॥ १४ ॥
भौमादित्यशनैर्वारे स्नातव्यं रोगमुक्तितः ।
पार्थिवे चाष्टक्लींकारं मध्ये नाम च दिक्षु च ॥ १५ ॥
क्रोंपुटं पार्थिवे दिक्षु क्लीं विदिक्षु लिखेद्वसून् ।
गोरोचनाकुङ्कुमेन भूर्जे बद्धे गले धृतं ॥ १६ ॥
अश्ववो वशमायान्ति मन्त्रेणानेन निश्चितं ।
ओं क्लीं सम्पुटं नाम श्रीं क्रों पत्राष्टके क्रमात् ॥ १७ ॥
गोरोचनाकुङ्कुमेन भूर्जेऽथ सुभगाहृते ।
गोमध्यवाग्गमः पत्रे हरिद्राया रसेन च ॥ १८ ॥
शिलापट्टेऽरीन् स्तम्भयति भूमावधोमुखीकृत । [॥ १९ ॥
ओं ह्रं स.(३) सम्पुटनाम श्रीं ह्रं स (४) पत्राष्टके क्रमात् ।
गोरोचनाकुङ्कुमेन भूर्जे शल्यनिवारणं ।
एकपञ्चनवप्रीत्यै(५) द्विषट्द्वादशयोगकाः ॥ २० ॥
त्रिषष्ठैकादशी लाभो वेदाष्टद्वादशे रिपुः ।
तनुर्धनञ्च सहजः सुहृत् सुतो रिपुस्तथा ॥ २१ ॥
जाया निधनधर्म्मौ च कर्म्मायव्ययकाः क्रमात् ।

---

१ पूर्वात्रिकमिति ख० ।
२ पावकमिति ख० ।
३ ओं ह्रंस इति ख० ।
४ ओं ज्रू स इति ख० । ओं ह्रं स इति घ० ।
५ एकपञ्चनवमास्यं इति ज० ।

स्फुटं मेषादिलग्नेषु नवताराबलं वदेत् ॥ २२ ॥
जन्म सम्पद्विपत् क्षेमं प्रत्यरिः साधकः क्रमात् ।
निधनं मित्रपरममित्रं ताराबलं विदुः ॥ २३ ॥
वारे भृगुबुधेज्यानां सूर्याचन्द्रमसोस्तथा ।
माघादिमासषट्के तु चौरमाद्यं प्रशस्यते ॥ २४ ॥
कार्णवेधो बुधे जीवे पुष्ये श्रवणचित्रयोः ।
पञ्चमेऽब्दे चाध्ययनं षष्ठीं प्रतिपदं त्यजेत् ॥ २५ ॥
रिक्तां पञ्चदशीं भौमं प्राच्यं वारुणं हरिं श्रियं ।
माघादिमासषट्के तु[१] मेखलाबन्धनं शुभं ॥ २६ ॥
चूडाकरणकार्यञ्च न्यावपादौ न शस्यते ।
अस्तं याते गुरौ शुक्रे क्षीणे च शशलाञ्छने ॥ २७ ॥
उपनीतस्य विप्रस्य मृत्युं जाड्यं विनिर्द्दिशेत् ।
चौरर्क्षे शुभवारे च समावर्त्तनमिष्यते ॥ २८ ॥
शुभवेले विलग्नेषु शुभयुक्तेक्षितेषु च ।
अश्विनीमघाचित्रासु स्वातीयाम्योत्तरासु च ॥ २९ ॥
हेतर्म्मसौ तथा पुष्ये धनुर्वेदः प्रशस्यते ।
भरण्यार्द्रा मघाश्लेषा वह्निभगर्क्षयोस्तथा ॥ ३० ॥
जिमीविषुर्न कुर्व्वीत वस्त्रप्रावरण नरः ।
गुरौ शुक्रे बुधे वस्त्रं विवाहादौ न भाद्रिकं ॥ ३१ ॥
रेवत्यश्विधनिष्ठासु हस्तादिषु च पञ्चसु ।
शङ्खविद्रुमरत्नानां परिधानं प्रशस्यते ॥ ३२ ॥

---

[१] माघादिमासषट्केषु इति ख॰ ।

याम्यमपंधनिष्ठासु(१) त्रिषु पूर्व्वेषु वारुणे(२) ।
क्रीतं हानिकरं द्रव्यं विक्रीतं लाभकृद्भवेत् ॥ ३३ ॥
अश्विनीस्वातिचित्रासु रेवत्यां वारुणे हरौ ।
क्रीतं लाभकरं द्रव्यं विक्रीतं हानिकृद्भवेत् ॥३४ ॥
भरणी त्रीणि पूर्वाणि आर्द्राश्लेषा मघानिलाः ।
वह्निज्येष्ठाविशाखासु स्वामिनो नोपतिष्ठते ॥ ३५ ॥
द्रव्यं दत्तं प्रयुक्तं वा यत्र निक्षिप्यते धनं ।
उत्तरे श्रवणे शाक्रे कुर्याद्राजाभिषेचनं ॥ ३६ ॥
चैत्रं ज्येष्ठं तथा भाद्रमाश्विनं पौषमेव च ।
माघं चैव परित्यज्य शेषमासे गृहं शुभं ॥ ३७ ॥
अश्विनी रोहिणी मूलमुत्तरात्रयमैन्दवं ।
स्वाती हस्तानुराधा च गृहारम्भे प्रशस्यते ॥ ३८ ॥
आदित्यभौमवर्जन्तु सर्व्ववारास्तथा ।
सिंहराशिगते जीवे गुर्व्वादित्ये मलिम्लुचे ॥ ३९ ॥
बाले वृद्धेऽस्तगे शुक्रे गृहकर्म्म विवर्जयेत् ।
अग्निदाहो भयं रोगो राजपीडा धनक्षतिः ॥ ४० ॥
सङ्ग्रहे तृणकाष्ठानां कृते श्रवणपञ्चके ।
गृहप्रवेशनं कुर्य्यात्‌ हमित्रोत्तरवारुणे ॥ ४१ ॥
नौकाया घटने द्विविपश्चमसप्तयोदशी ।
रूपदर्शी धनिष्ठासु हस्तापौष्णाश्विनीषु च ॥ ४२ ॥
पूर्वात्रयधनिष्ठार्द्रा वह्निः सौम्यविशाखयोः ।

---

१ दग्धपूर्वविशाखासु इति ख०, ञ० च । २ पूर्वेषु वासवे इति क०, ख०, ङ०, च० ।

अश्लेषा चाश्विनी चैव यात्रासिद्धिस्तु सम्पदा(१) ॥ ४३ ॥
त्रियूत्तरेषु रोहिण्यां सिनीवाली चतुर्दशी।
श्रवणा चैव हस्ता च चित्रा च वैष्णवी तथा॥ ४४ ॥
गोष्ठयाश्च न कुर्वीत प्रवेशं नैव कारयेत्।
अनिलोत्तररोहिण्यां मृगमूलपुनर्वसौ॥ ४५ ॥
पुष्यश्रवणहस्तेषु कृषिकर्म समाचरेत्(२)।
पुनर्वसूत्तरास्वातीभगमूलेन्द्रवारुणे(३) ॥ ४६ ॥
गुरोः शुक्रस्य वारे वा वारे च(४) सोमभास्वतोः।
वृषलग्ने च कर्त्तव्यकन्यायां मिथुने तथा॥ ४७ ॥
द्वितयश्च(५) दशमी सप्त तृतीया च त्रयोदशी।
रेवतीरोहिणीन्द्राग्निहस्तमैत्रोत्तरेषु(६) च॥ ४८ ॥
मन्दारपर्व्वं बीजानि वापयेत् सम्पदर्थेपि(७)।
रेवतीहस्तमूलेषु श्रवणे भगमैत्रयोः ॥ ४९ ॥
पितृदैवे तथा सौम्ये धान्यच्छेदं प्रशस्यते।
हस्तचित्रादितिस्वातौ रेवत्यां श्रवणत्रये ॥ ५० ।
स्थिरे लग्ने (८) गुरोर्वारे अथ(९) भार्गवसौम्ययोः।
याम्यादितिमघाज्येष्ठासूत्तरेषु प्रवेशयेत् ॥ ५१ ॥

---

१ यात्रासिद्धिषु सम्पद इति ग०, ज० च।
२ समारभेदिति घ०, ङ० च।
३ भगमूले च वारुणे इति ख०, ङ० च।
४ वारे वा इति ज०।
५ द्वितयेति ज०।
६ हस्तमैत्रोत्तरासु इति क०।
७ वापयेत् सयतोपि चेति ख०, ङ०, ज० च।
८ चरे लग्ने इति क०।
९ गुरोर्वारेथवा इति घ०, ज० च।

ओँ धनदाय(१) सर्व्वधनेशाय देहि मे धनं स्वाहा(२)।
ओँ नवे वर्षे इलादेवि लोकसंवर्द्धनि कामरूपिणि देहि
मे धनं स्वाहा॥

पत्रस्थं लिखितं धान्यराशिस्थं धान्यवर्द्धनं।
त्रिपूर्व्वासु विशाखायां धनिष्ठावारुणेऽपि च॥ ५२॥
एतेषु षट्सु विज्ञेयं धान्यनिष्क्रमणं बुधैः।
देवतारामयाग्यादिप्रतिष्ठोदङ्मुखे रवौ॥ ५३॥
मिथुनस्थेरवौ दर्शाद्यदि स्याद् द्वादशी तिथिः।
सदा तत्रैव कर्त्तव्यं शयनं चक्रपाणिनः॥ ५४॥
सिंहतौलिङ्गते(३) चार्के दर्शाद्द्वादशीद्वयं।
आदाविन्द्रसमुत्थानं प्रबोधय हरिं क्रमात्॥ ५५॥
तथा कन्यागते भानौ(४) दुर्गोत्थाने तथाष्टमी।
त्रिपादेषु च ऋक्षेषु यदा भद्रा तिथिर्भवेत्॥ ५६॥
भौमादित्यशनैश्चारि विज्ञेयं तत् त्रिपुष्करं।
सर्वकर्मण्यपाद्या विशुद्धियन्त्रतारयो(५)॥ ५७॥
जन्माश्रितस्त्रिपञ्च सप्तमो दशमस्तथा।
एकादशः शुभो ज्ञेयास्तेषामेव शुभं वदेत्॥ ५८॥
शुक्लपक्षे द्वितीयश्च पञ्चमो नवमः शुभः।
मित्रातिमित्रसाधकसम्पत्क्षेमादितारकाः॥ ५९॥

---

१ ॐ श्री धनदायेति ख०।
२ "नवे वर्षे सुतोवाटे चध भार्गवसौम्ययो" इत्यधिको ख० पुस्तकेऽधिकोऽस्ति।
३ सिंहतौलिगते इति ख०।
४ कन्याराशिगते भानौ इति ख०।
५ विशुद्धियन्त्रमूर्द्धयोरिति ख०।

जन्मना मृत्युमाप्नोति विपदा धनसञ्चयं ।
प्रत्यरौ मरणं विद्यान्निधने याति पञ्चतां ॥ ६० ॥
कृष्णाष्टमीदिनादूर्द्ध्वं यावच्छुक्लाष्टमीदिनं(१) ।
तावत् कालं शशी क्षीणः पूर्णस्तचोपरि स्मृतः ॥ ६१ ॥
वृषे च मिथुने भानौ जीवे चन्द्रेन्द्रदैवते(२) ।
पौर्णमासी गुरोर्वारे महाज्यैष्ठी प्रकीर्त्तिता ॥ ६२ ॥
ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा ।
पूर्णिमा ज्यैष्ठमासस्य महाज्यैष्ठी प्रकीर्त्तिता ॥ ६३ ॥
स्वात्यन्तरे यम्मनिष्ठे शक्रस्योत्थापयेद् ध्वजं ।
हर्म्याग्रपादे(३) चाश्विन्यां सप्ताहान्ते विसर्जयेत् ॥ ६४ ॥
सर्वं हेमसमन्दानं सर्वे ब्रह्मसमा द्विजाः ।
सर्वं गङ्गासमन्तोयं राहुग्रस्ते दिवाकरे ॥ ६५ ॥
ध्वाङ्क्षी महोदरी घोरा मन्दा मन्दाकिनी द्विजा(४)।
राक्षसी च क्रमेणार्काल्लङ्क्रान्तिर्नामभिः स्मृता ॥ ६६ ॥
वालवे कौलवे नागे तैतिले करणे यदि ।
उत्तिष्ठन् सङ्क्रमत्यर्कस्तदा लोकः(५) सुखी भवेत् ॥ ६७ ॥
गरे वणे वणिग्विष्टौ किन्तुघ्ने शकुनौ व्रजेत् ।
रात्रौ दोषेण लोकोऽप्यम्पीड्यते सम्पदा समं ॥ ६८ ॥
"सतुषातिहिष्ट्यापिण्ढे "गधिस "सङ्गमेष्ट्रवि "।

---

१ कृष्णाष्टमीदिनादूर्द्ध्वं यावच्छुक्लाष्टमीदिनमिति ङ० ।
२ जीवे चन्द्रेन्द्रदैवतमिति ज० ।
३ हर्म्याग्रपादे इति ख०, ग० च । हर्य्याग्रपादे इति ङ० ।
४ मन्दाकिनी तथेति ख०, घ०, ङ० च । मन्दाकिनीति चेति ज० ।
५ तथा लोक इति ख० ।

दुर्भिक्षं राजमङ्गो रामो दम्पत्योः संशयो भवेत् ॥ ६९ ॥
आधाने जन्मनक्षत्रे व्याधौ क्लेशादिकं भवेत्।
कृत्तिकायामवदिनन्त्रिरात्रं रोहिणीषु च ॥ ७० ॥
मृगशिरःपञ्चरात्र आर्द्रासु(१) प्राणनाशनं।
पुनर्वसौ च पुष्ये च सप्तरात्र विधीयते ॥ ७१ ॥
नवरात्र तथाश्लेषा श्मशानान्त मघासु च।
द्वौ मासौ पूर्वफाल्गुन्यामुत्तरासु त्रिपञ्चकम्(२) ॥ ७२ ॥
हस्ते तु दृश्यते चित्रा अर्द्धमासन्तु पीडनम्।
मासद्वयन्तथा स्वातिर्विंशाखा विंशतिर्दिनं ॥ ७३ ॥
मैत्रे चैव दशाहानि ज्येष्ठास्वेवार्द्धमासकम्।
मूले न जायते मोक्षः पूर्वाषाढा त्रिपञ्चकम्(३) ॥ ७४ ॥
उत्तरा दिनविंशत्या द्वौ मासौ श्रवणेन च।
धनिष्ठा चार्द्धमासञ्च शतभे च दशाहकम् ॥ ७५ ॥
न च भाद्रपदे मोक्ष उत्तरासु त्रिपञ्चकम्।
रेवती दशरात्रञ्च अहोरात्रन्तथाश्विनी ॥ ७६ ॥
भरण्यां प्राणहानिः स्याद् गायत्रीहोमतः शुभं।
पञ्चधान्यतिलाज्याद्यैर्धेनुदानन्द्विजे शमं ॥ ७७ ॥
दशा सूर्य्यस्य षडाब्दा इन्दोः पञ्चदशैव तु।
अष्टौ वर्षाणि भौमस्य दशसप्तदशा बुधे ॥ ७८ ॥

---

१ आर्द्रायामिति ग०, ञ० च।
२ उत्तरासु त्रिरात्रकमिति ञ०। हस्ते तु दृश्यते इत्यादि, पूर्वाषाढा त्रिपञ्चकमित्यन्त पाठ ङ०, छ०, पुस्तक(द्वये) नास्ति।
३ पूर्वाषाढादिपञ्चकमिति ज०।

दशाब्दानि दशा पञ्चीकृनविंशद्रवीदशा।
राहोरष्टादशवर्षाणि भार्गवस्यैकविंशतिः॥ ७८ ॥

इत्याग्नेये महापुराणे ज्योतिःशास्त्रसारो नाम एकविंशत्यधिकशततमोऽध्यायः॥

## अथ द्वाविंशत्यधिकशततमोऽध्यायः।

---

### कालगणनं।

अग्निरुवाच। कालः समागणो वक्ष्ये गणितं कालबुद्धये।
कालः समागणोऽर्कघ्नो(१) मासैश्चैत्रादिभिर्युतः॥ १ ॥
त्रिघ्नो द्विष्ठः सवेदः स्यात् पञ्चाङ्गाष्टयुतो गुणः(२)।
त्रिष्ठो मध्यो वसुगुणः पुनर्वेदगुणश्च सः॥ २ ॥
अष्टरन्ध्राग्निहीनः(३) स्यादधः सैकरसाष्टकैः।
मध्यो हीनः षष्टिहृतो(४) लब्धयुक्तस्तयोपरि॥ ३ ॥
न्यूनः सप्तहृतो वारस्त्वधस्तिथिनाडयः।
सगुणो द्विगुणयोर्द्धं विभिक्तो गुणः पुनः॥ ४ ॥
अधः खरामसंयुक्तो रसार्काष्टफलैर्युतः।
अष्टाविंशच्छेषपिण्डस्तिथिनाडश अधः स्थितः॥ ५ ॥

---

१ समागणोऽर्काब्द इति ख०, ङ० च।　२ पञ्चदशयुतो गुण इति ज०।
३ अष्टचन्द्राग्निहीन इति ज०।　४ षष्टिहत इति ङ०।

गुणस्त्रिस्त्रिभिरूनोर्द्ध द्वाभ्यां च गुणयेत् पुनः।
मध्ये षड्गुणः कार्य्यो ह्यधः सैको मवाग्निभिः (१) ॥ ६ ॥
लब्धहीनो(२) भवेन्मध्यो द्वाविंशतिविवर्ज्जितः।
षष्टिशेषे ऋणं ज्ञेयं लब्धमूर्द्ध विनिक्षिपेत् ॥ ७ ॥
सप्तविंशतिशेषस्तु ध्रुवो नक्षत्रयोगयोः।
मासि मासि क्षिपेद् द्वारन्द्वाविंशद्घटिकास्त्रियो ॥ ८ ॥
द्वे पिण्डे द्वे च नक्षत्रे नाडय एकादश स्मृते।
वारस्थाने तिथिन्दद्यात् सप्तभिर्भागमाहरेत् ॥ ९ ॥
शेषवाराय सूर्याद्या घटिकास्तु च पातयेत्।
पिण्डकेषु तिथिन्दद्याद्धरेच्चैव चतुर्द्दश ॥ १० ॥
ऋणं धनं धनमृणं क्रमात् ज्ञेयं चतुर्द्दशे।
प्रथमे त्रयोदशे पञ्च द्वितीयद्वादशे दश ॥ ११ ॥
पञ्चदशस्तृतीये च तथाचैकादशे स्मृतं।
चतुर्थ दशमं चैव भवेदेकोनविंशतिः ॥ १२ ॥
पञ्चमे नवमे चैव द्वाविंशतिरुदाहृताः।
षष्ठाष्टमे त्रयष्ठाः स्यात्तु विंशतिरेव च ॥ १३ ॥
सप्तमे पञ्चविंशः स्यात् खण्डशः पिण्डकाद्‌ भवेत्(३)।
कर्कटादौ हरेच्छागिस्सुवेदत्रयैः क्रमात् ॥ १४ ॥
तुलादौ प्रातिलोम्येन त्रयो वेदरसाः क्रमात्।

१ षैकेन षड्भेरिति ख०, ञ० च। ２ षष्ठक पिण्डकाद्भवेदिति ख०, ञ०,
२ ऋतुशेष इति ख०। ३ ष०, ग०, घ०, ञ० च।

मकरादौ दीयते च रसवेदत्रयः क्रमात् ॥ १५ ॥
मेषादौ प्रातिलोम्येन त्रयो वेदरसाः क्रमात्([1]) ।
खेषवः खयुगा मेत्रं मेषादौ विकला धनम् ॥ १६ ॥
कर्कटे प्रातिलोम्यं स्याद्दणमेतत् तुलादिके।
चतुर्गुणा तिथिर्ज्ञेया विकलायेह सर्वदा ॥ १७ ॥
हन्यात्रिभागतार्गामिपिण्डसङ्ख्याफलान्तरैः।
पश्चात् प्रथमोच्चार्य्ये हानौ देयन्धने धनम् ॥ १८ ॥
द्वितीयोच्चरिते वर्गे वैपरीत्यमिति स्थितिः ।
तिथिर्द्विगुणिता कार्य्या षड्भागपरिवर्ज्जिता ॥ १९ ॥
रविकर्म्मविपरीता तिथिनाडीसमायुता ।
ऋणे शुद्धे तु नाड्यः स्युर्ऋणं शुध्येत नो यदा ॥ २० ॥
सषष्टिकं प्रदेयन्तत् षष्ठ्याधिक्ये च तत्त्यजेत्([2]) ।
नक्षत्रं तिथिमिश्रं स्याच्चतुर्भिर्गुणिता तिथिः ॥ २१ ॥
तिथिस्त्रिभागसंयुक्ता ऋणेन च तथान्विता ।
तिथिरत्र चिता कार्य्या तद्वेदाद्योगशोधनं ॥ २२ ॥
रविचन्द्रौ समौ कृत्वा योगो भवति निश्चलः ।
एकोना तिथिर्द्विगुणा सप्तभिन्ना कृतिर्द्विधा([3]) ॥ २३ ॥
तिथिश्च द्विगुणैकोना कृताङ्कैः करणानि हि ।

---

[1] मकरादौ इत्यादि, वेदरसाः क्रमादित्यन्तः पाठः क० पुस्तके नास्ति ।

[2] सन्त्यजेदिति ख० ।

[3] सप्तभिन्ना प्रनिर्दिशेति ख० । सप्तच्छिन्ना कृतिर्द्विधेति ग०, ज० च ।

कृष्णाचतुर्दश्यन्ते शकुनिः पर्वणीह चतुष्पदं ॥ २४ ॥
प्रथमे तिथ्यर्द्धतो हि किन्तुघ्नं प्रतिपन्मुखे ।
इत्याग्नेये महापुराणे कालगणनं नाम द्वाविंशत्यधिक-
शततमोऽध्यायः ॥

## अथ त्रयोविंशत्यधिकशततमोऽध्यायः ।

युद्धजयार्णवीयनानायोगाः ।

अग्निरुवाच । वक्ष्ये जयप्रभावार्थं सारं युद्धजयार्णवे ।
अइउएओ स्वराः स्युः क्रमाचन्द्रादिका तिथिः ॥ १ ॥
कादिहान्ता भौमरवी ज्ञसोमौ गुरुभार्गवौ ।
शनिर्हर्षिणनाड्यान्तु भौमार्कशनयः परे ॥ २ ॥
स्वार्णवः स्वरसैर्गुण्यो वह्नैर्भागं समाहरेत् ।
रमाहतन्तु तत् कृत्वा पूर्वभागेन भाजयेत् ॥ ३ ॥
षड्भिर्भागहृतं कृत्वा(१) रूपस्तेनैव निक्षिपेत् ।
स्पन्दनं नाडयः पलानि मध्यागस्पन्दनं पुनः ॥ ४ ॥
अनेनैव तु मानेन उदयन्ति दिने दिने ।
स्फुरणैस्त्रिभिरुच्छ्वास उच्छ्वासैस्तु पलं स्मृतम् ॥ ५ ॥

१ षड्भिर्भिक्षुरूप कृत्वा इति क० ।

षष्टिभिश्च पलैर्लिप्ता लिप्तापष्टिस्त्वहर्निशं।
पञ्चमार्द्धोदये बालकुमारयुवबृद्धकाः ॥ ६ ॥
मृत्युर्येनोदयस्तेन चास्तमेकादशांशकैः।
कुलागमे भवेद्व्रङ्गः सस्तत्वः पञ्चमोऽपिवा ॥ ७ ॥

स्वरोदयचक्रं।

शनिचक्रे चार्द्धमासञ्च ्हाणामुदयः क्रमात्।
विभागैः पञ्चदशभिः शनिभागस्तु मृत्युदः॥ ८ ॥

शनिचक्रं।

दशकोटिसहस्राणि अर्वुदान्यर्वुदं हरेत्([1])।
चयोदशे च लक्षाणि प्रमाणं कूर्म्मरूपिणः ॥ ६ ॥
मघादौ कृत्तिकाद्यन्तस्तद्देशान्तः शनिस्थितौ।

कूर्म्मचक्रं।

राहुचक्रे च सप्तोर्द्धमधः सप्त च संलिखेत्([2]) ॥ १० ॥
वायुव्योयैव नैर्ऋत्ये पूर्णिमाग्नेयभागतः।
अमावास्यां वायवे च राहुर्वै तिथिरूपकः॥ ११ ॥
रकारं दक्षभागे तु हकारं वायवे लिखेत्।
प्रतिपदादौ ककारादीन् सकारं नैर्ऋते पुनः॥ १२ ॥
राहोर्मुखे तु भङ्गः स्यादिति राहुरुदाहृतः।
विष्टिरग्नौ([3]) पौर्णमास्यां करालीन्द्रे तृतीयकं॥ १३ ॥
घोरा याम्यान्तु सप्तम्यां दशम्यां रौद्रसौम्यगा।
चतुर्दश्यान्तु वायव्ये चतुर्थ्यां वरुणालये॥ १४ ॥

---

[1] अर्वुदान्यर्वुद क्रमादिति ख०। [2] विष्टिरङ्गौ इति ग०।
[3] सप्तरक्षांल्लिखेदिति ख०।

शुक्लाष्टम्यां दक्षिणे च एकादश्यां भ्रमन्त्यजेत् ।
रौद्रश्चैव तथा श्वेतो मैत्रः सारभटस्तथा ॥ १५ ॥
सावित्रो विरोचनश्च जयदेवोऽभिजित्तथा(१) ।
रावणो विजयश्चैव नन्दी वरुण एव च ॥ १६ ॥
यमसौम्यो भवश्चान्ते दशपञ्चमुहूर्त्तकाः ।
रौद्रे रौद्राणि कुर्वीत श्वेते स्नानादिकं चरेत् ॥ १७ ॥
मैत्रे कन्याविवाहादि शुभं सारभटे चरेत् ।
सावित्रे स्थापनाद्यं वा विरोचने नृपक्रिया ॥ १८ ॥
जयदेवे जय कुर्य्याद् रावणे रणकर्म च(२) ।
विजये कृषिवाणिज्यं पटबन्धं च नन्दिनि ॥ १९ ॥
वरुणे च तडागादि नाशकर्म यमे चरेत् ।
सौम्ये सौम्यादि कुर्वीत भवेल्लग्नमहर्द्दिवा ॥ २० ॥
योगा नाम्ना विरुद्धाः स्युर्योगा नाम्नैव शोभनाः ।
राहुरिन्द्रात्समीरञ्च वायोर्द्दक्ष यमाच्छ्रियम्(३) ॥ २१ ॥
शिवाद्याप्यग्नाद्निरन्ते : सौम्यस्तत्त्रयम् ।
तत्र सङ्क्रमं हन्ति चतस्रो घटिकाभ्रमन् ॥ २२ ॥

राहुचक्रं ।

चण्डीन्द्राणी वाराही च मुशली गिरिकर्णिका ।
धना चातिघ्ना सौरी सल्लिकाजातियूथिकाः ॥ २३ ॥
यमाभ्याभं पारजेताः श्वेतार्कश्च शतावरी ।
गृह्णी वागुरी दिव्या चौपध्यो धारिता जये ॥ २४ ॥

१ [illegible], [illegible] २ [illegible] ।
[illegible] पुस्तके नास्ति । ३ [illegible] ।

ओं नमो भैरवाय[१] खड्गपरशुहस्ताय ओं ह्रूं[२]
विघ्नविनाशाय ओं ह्रूं[२] फट् ।
अनेनैव तु मन्त्रेण शिखाबन्धादिकञ्चरेत् ।
तिलकञ्चाञ्जनञ्चैव धूपलेपनमेव च ॥ २५ ॥
स्नानपानानि तैलानि योगधूलिमतः शृणु ।
सुभगा मनःशिला तालं लाक्षारससमन्वितं ॥ २६ ॥
तरुणीक्षीरसंयुक्तो ललाटे तिलको वशी ।
विष्णुक्रान्ता च सर्पाक्षी सहदेवस्(४) रोचना ॥ २७ ॥
अजादुग्धेन संपिष्टं तिलकोवश्यकारकः ।
प्रियङ्गु कुङ्कुमं कुष्ठं मोहनी तगरं घृतं ॥ २८ ॥
तिलको वश्यकश्च रोचना रक्तचन्दनं ।
निशा मनःशिला तालं प्रियङ्गु सर्षपास्तथा ॥ २९ ॥
मोहनी हरिता क्रान्ता सहदेवी शिखा तथा ।
मातुलङ्गरसैः पिष्टं ललाटे तिलको वशी ॥ ३० ॥
सेन्द्राः सुरा वशं यान्ति किं पुनः क्षुद्रमानुषाः ।
मञ्जिष्ठा चन्दनं रक्तं कट्कन्दा विलासिनी ॥ ३१ ॥
पुनर्नवासमायुक्तो लेपोऽयं भास्करो वशी ।
चन्दनं नागपुष्पञ्च मञ्जिष्ठा तगरं वचा(५) ॥ ३२ ॥
लोध्रप्रियङ्गु रजनीमांसीतैलं वशङ्करं ।

इत्याग्नेये महापुराणे नानायोगा नाम त्रयोविंशत्यधिकशततमोऽध्यायः ॥

---

१ ओं नमो भगवते भैरवायेति ख॰, घ॰ च ।
२,२ ओं ह्रमिति घ॰, अ॰ च ।
४ सहदेवा चेति ख॰ ।
५ मञ्जिष्ठा तगरञ्चैवेति क॰ । मञ्जिष्ठा भद्रक वचेति ङ॰ ।

# अथ चतुर्विंशत्यधिकशततमोऽध्यायः ।

---

## युद्धजयार्णवीयज्योतिःशास्त्रसारः ।

अग्निरुवाच । ज्योतिःशास्त्रादिसारञ्च वक्ष्ये युद्धजयार्णवे ।
विना मन्त्रौषधाद्यञ्च यथोमामीश्वरोऽब्रवीत्(१) ॥ १ ॥
देव्युवाच । देवैर्जिता दानवाश्च(२) येनोपायेन तद्वद ।
शुभाशुभविवेकाद्यं ज्ञानं युद्धजयार्णवं ॥ २ ॥
ईश्वर उवाच । मूलदेवेच्छया जाता शक्तिः पश्चाद्दशाम्बरा ।
चराचरं ततो जातं यामाग्न्याखिलार्थवित्(३) ॥ ३ ॥
मन्त्रपीठं प्रवक्ष्यामि पञ्चमन्त्रसमुद्भवं ।
ते मन्त्राः सर्वमन्त्राणां जीविते मरणे स्थिताः ॥ ४ ॥
ऋग्यजुःसामाथर्वाख्यवेदमन्त्राः क्रमेण ते ।
सद्योजातादयो मन्त्रा ब्रह्मा विष्णुश्च रुद्रकः ॥ ५ ॥
ईशः सदाशिवा देवाः शक्राद्याः पञ्च च स्वराः ।
अइउएओ कलाय मूलं प्रक्षोति कीर्तितं ॥ ६ ॥
काष्ठमध्ये यथा वह्निरप्रबुद्धो न दृश्यते ।
विद्यमाना तथा देहे शिवशक्तिर्न दृश्यते ॥ ७ ॥
आदौ शक्तिः समुत्पन्ना ओङ्कारस्वरभूषिता ।
ततो विन्दुर्महादेवि एकारेण व्यवस्थितः ॥ ८ ॥

---

१ ईश्वरोऽवदत् इति ख० ।
२ दानवाद्या इति ख० ।
३ यामाद्याखिलार्थविदिति ख०, ग०, घ० ।

जातो नाद उकारस्तु नदते हृदि संस्थितः ।
अर्द्धचन्द्र इकारस्तु मोक्षमार्गस्य बोधकः ॥ ९ ॥
अकारो व्यक्त उत्पन्नो भोगमोक्षप्रदः परः(१) ।
अकार ऐश्वरे भूमिर्निवृत्तिश्च कला स्मृता ॥ १० ॥
गन्धोनबीजः प्राणाख्य इडाशक्तिः स्थिरा स्मृता ।
इकारश्च प्रतिष्ठाख्यो रसो पाशश्च पिङ्गला ॥ ११ ॥
क्रूरा शक्तिरीबीजः स्यादुरबीजोऽग्निरूपवान् ।
विद्या समाना गान्धारी शक्तिश्च दहनी स्मृता ॥ १२ ॥
प्रशान्तिर्वायुपस्पर्शौ यथोदानयुता क्रिया ।
ओङ्कारः शान्त्यतीताख्यः खपञ्चपूषपाविनः ॥ १३ ॥
पञ्च वर्गाः स्वरा जाताः कुजज्ञगुरुभार्गवाः ।
शनिः क्रमादकाराद्याः ककाराद्यास्त्वधः स्थिताः ॥१४॥
एतन्मूलमतः सर्वं ज्ञायते सचराचरं ।
विद्यापीठं प्रवक्ष्यामि प्रणवः शिव ईरितः ॥ १५ ॥
उमा सोमः स्वयं शक्तिर्वामा ज्येष्ठा च रौद्र्यपि ।
ब्रह्मा विष्णुः क्रमाद्रुद्रो गुणाः सर्गादयस्त्रयः ॥ १६ ॥
रक्तनाडीत्रयञ्चैव(२) स्थूलः सूक्ष्मः परोऽपरः ।
चिन्तयेच्छ्रुतवर्णन्तं सुषमानं परामृतं ॥ १७ ॥
प्लाव्यमानं यथात्मानं चिन्तयेत्तं दिवानिशं ।
अजरत्वं भवेद्देवि शिवत्वमुपगच्छति(३) ॥ १८ ॥

---

१ भोगमोक्षप्रदः शुभ इति ञ० ।
२ ब्रह्मनाडीत्रयञ्चैवेति ख०, ङ० च ।
३ शिवत्वमधिगच्छतीति ञ० ।

अङ्गुष्ठादौ न्यसेदङ्गान्वितं मध्येऽथ देहके ।
मृत्युञ्जयं ततः प्राच्यां रणादौ विजयो भवेत् ॥ १९ ॥
शून्यो निरालयः शब्दः स्पर्शं तिर्यङ्नतं स्पृशेत् ।
रूपस्योर्द्ध्वंगतिः प्रोक्ता जलस्याधः समाश्रिता ॥ २० ॥
सर्वस्थानविनिर्मुक्तो गन्धो मध्ये च मूलकः ।
नाभिमूले(१) स्थितं कन्दं शिवरूपन्तु मण्डितं ॥ २१ ॥
शक्तिव्यूहेन सोमोऽर्क्को हरिस्तत्र व्यवस्थितः ।
दशवायुसमोपेत पञ्चतन्मात्रमण्डितं ॥ २२ ॥
कालानलसमाकारं प्रस्फुरन्तं शिवात्मकं ।
तज्जीवं जीवलोकस्य(२) स्थावरस्य चरस्य च ॥ २३ ॥
तस्मिन्नष्टे(३) हतं मन्ये मन्त्रपीठेऽनिलात्मकं ।

इत्याग्नेये महापुराणे युद्धजयार्णवे ज्योतिःशास्त्रसारो नाम चतुर्विंशत्यधिकशततमोऽध्यायः ॥

---

## अथ पञ्चविंशत्यधिकशततमोऽध्यायः ।

——:०००:——

युद्धजयार्णवीयनानामन्त्राणि ।

ईश्वर उवाच । ओं ह्रीं कर्णमोटनि बहुरूपे बहुदंष्ट्रे ह्रूं,

---

१ नाभ्यधोमूले इति ख० ।
२ अत्र जीव जीवनार्थेति ख०, ग० च ।
तच्च जीव जीवलोक इति ग० ।
३ तस्मिन्नष्टे इति ख० ।

फट्:(१) ओं ह. ओं ग्रस ग्रस क्रन्त क्रन्त छक छक फ्रूं फट(१) नमः।

पठ्यमानो ह्ययं मन्त्रः क्रुद्धः संरक्तलोचनः।
मारणे पातने वापि मोहनोच्चाटने भवेत् ॥ १ ॥
कर्णमोटी महाविद्या सर्ववर्णेषु रक्षिका।

नानाविद्या।

पक्षोद्दग्र प्रवक्ष्यामि स्वरोदयसमाश्रितं ॥ २ ॥
नाभिहृद्यन्तरं यावत्तावच्चरति मारुतः।
उच्चाटयेद्रणादौ तु कर्णावोपि प्रभेदयेत् ॥ ३ ॥
करोति साधकः क्रुद्धो जपहोमपरायणः।
हृदयात्पायुकं कण्ठं ज्वरदाहादिमारणे(१) ॥ ४ ॥
कण्ठोद्भयो रमो वायुः शान्तिकं पौष्टिकं रसं।
दिव्यं स्तम्भं समाकर्षं गन्धो नासान्तिको भ्रुवः ॥ ५ ॥
गन्धलीनं मनः कृत्वा स्तम्भयेदात्र संशयः।
स्तम्भनं कीलनाद्यञ्च करोत्येव हि साधकः ॥ ६ ॥
चण्डघण्टा करालो च सुमुखी दुर्मुखी तथा।
रेवती प्रथमा घोरा वायुचक्रेषु ता यजेत् ॥ ७ ॥
उच्चाटकारिका देव्यः स्थितास्तेजसि संस्थिताः।
सौम्या च भीषणो देवी जया च विजया तथा ॥ ८ ॥
अजिता चापराजिता महाकोटी च रौद्र्या।
शुष्ककाया प्राणहरा रसचक्रे स्थिता यमूः ॥ ९ ॥

---

१,१ श्रो द्रु फडिति घ०। ४ ज्वरदाहविमारणे इति घ०।

विरूपाक्षी परा दिव्यास्तथा चाकाशमातरः।
संहारी जातहारी च दंष्ट्राला शुष्करेवती ॥ १० ॥
पिपीलिका पुष्टिहरा महापुष्टिप्रवर्द्धना।
भद्रकाली सुभद्रा च भद्रभीमा सुभद्रिका ॥ ११ ॥
स्थिरा च निष्ठुरा दिव्या निष्कम्पा गदिनी तथा।
द्वात्रिंशन्मातरश्चक्रे अष्टाष्टक्रमशः स्थिताः ॥ १२ ॥
एक एव रविश्चन्द्र एकश्चैकैकशक्तिका।
भूतभेदेन तीर्थानि(१) यथा तोयं महीतले ॥ १३ ॥
प्राण एको मण्डलेषु भिद्यते भूतपञ्चरे।
वामदक्षिणयोगेन दशधा सम्प्रवर्त्तते ॥ १४ ॥
बिन्दुमुण्डविचित्रञ्च तत्त्वयन्त्रेण वेष्टितं।
ब्रह्माण्डेन(२) कपालेन पिबेत परमामृतं ॥ १५ ॥
पञ्चवर्गबलाद्युद्धे जयो भवति तच्छृणु।
अआकचटतपयाः श आद्यो वर्ग ईरितः ॥ १६ ॥
इईखछठथफराः षो वर्गश्च द्वितीयकः।
उऊगजडदबलाः सो वर्गश्च तृतीयकः ॥ १७ ॥
एऐघझढधभवा हो वर्गश्च चतुर्थकः।
ओ औ अं अः ङञणनमा मो वर्गः पञ्चमो भवेत् ॥ १८ ॥
वर्णाद्याभ्युदये नॄणां चत्वारिंशच्च पञ्च च।
बालः कुमारो युवा स्यात् वृद्धो मृत्युश्च नामतः ॥ १९ ॥

---

१ भूतभेदेन भिन्नानि इति ख०। २ ब्रह्मरन्ध्रे इति ख०।
जाति भेदेन भिन्नानि इति ग०।

आत्मपीडा शोषकः स्यादुदासीनश्च कालकः ।
कृत्तिका प्रतिपद्भौम आत्मनो लाभदः स्मृतः ॥ २० ॥
षष्ठी भौमो मघा पीड़ा आर्द्रा चैकादशी कुजः ।
मृत्युर्मघा द्वितीया ज्ञो लाभश्चार्द्रा च सप्तमी ॥ २१ ॥
बुधे हानिर्भरणी ज्ञः श्रवणं काल ईदृशः ।
जीवो लाभाय च भवेत्तृतीया पूर्वफल्गुनी ॥ २२ ॥
जीवोऽष्टमी(१) धनिष्ठार्द्रा जीवोऽश्लेषा त्रयोदशी ।
मृत्यौ शुक्रश्चतुर्थी स्यात् पूर्व्वभाद्रपदा श्रिये ॥ २३ ॥
पूर्व्वाषाढ़ा च नवमी शुक्रः पीड़ाकरो भवेत् ।
भरणी भूतजा शुक्रो यमदण्डो हि हानिकृत् ॥ २४ ॥
कृत्तिका पञ्चमी मन्दो लाभाय तिथिरीरिता ।
अश्लेषा दशमी मन्दो योगः पीड़ाकरो भवेत्(२) ॥ २५ ॥
मघा शनिः पूर्णिमा च योगो मृत्युकरः स्मृतः ।

१ तिथियोगः ।

पूर्व्वोत्तराग्निनैर्ऋत्यदक्षिणानिलचन्द्रमाः(३) ॥ २६ ॥
ब्रह्माद्याः सृष्टद्यः सृः(४) प्रतिपन्नवमीमुखाः ।
राशिभिः सहिता दृष्टा ब्रह्माद्याः सिद्धये स्मृताः ॥ २७ ॥
मेषाद्याश्चतुरः कुम्भा जयः पूर्णोऽन्यथा मृतिः ।
सूर्य्यादिरिक्ता पूर्णा च क्रमादेवम्प्रदापयेत् ॥ २८ ॥

---

१ जीवोऽष्टमीति घ० ।
२ भरण्यत्यादि, पीड़ाकरो भवेदित्यन्तः पाठः ङ० पुस्तके नास्ति ।
३ दक्षाग्न्यानिलचन्द्रमा इति घ० ।
४ ब्रह्माद्याः सृष्टिदृष्टा सृरिति घ० ।

रणे सूर्यं फलं नास्ति सोमे भङ्गः प्रणश्यति।
कुजेन कलहं विद्याद् बुधः कामाय वै गुरुः॥ २८॥
जयाय सनम्(१) शुक्रो मन्दे भङ्गो रणे भवेत्।
देयानि पिङ्गलाचक्रे सूर्यगानि च भानि हि॥ ३०॥
मुखे नेत्रे ललाटेऽथ शिरोहस्तोरुपादके।
पादे मृतिस्त्रिकस्थे स्याच्छ्रोणि पचेऽर्थनाशनम्॥ ३१॥
मुखस्थे च भवेत्पीड़ा शिरस्थे कार्यनाशनम्।
कुक्षिस्थिते फलं स्याच राहुचक्रं वदाम्यहम्॥ ३२॥
इन्द्राच नैर्ऋतं गच्छेन्नैर्ऋतात्सौममेव च।
सौमाद्धुताशनं वन्हेराप्यमाप्याच्छिवालयं॥ ३३॥
रुद्रादयं यमादायुं वायोश्चन्द्रं व्रजेत् पुनः।
भुङ्क्ते चतस्रो नाड्यस्तु राहुपृष्ठे जयी रणे॥ ३४॥
अग्रतो मृत्युमाप्नोति तिथिराहुं वदामि ते।
आग्नेयादिशिवान्तं च पूर्णिमामादितः प्रिये॥ ३५॥
पूर्व्वे कृष्णाष्टमीं यावत् राहुदृष्टो भयो भवेत्।
ऐशान्याग्नेयनैर्ऋत्यवायव्ये फणिराहुकः॥ ३६॥
मेषाद्या दिशि पूर्व्वादौ यत्रादित्योऽग्रतो मृतिः।
तृतीया कृष्णपक्षे तु सप्तमी दशमी तथा॥ ३७॥
चतुर्दशी तथा शुक्ले चतुर्थ्येकादशी तिथिः।
पञ्चदशी विष्टयस्तु पूर्णिमाग्नेयवायवे॥ ३८॥
अकचटतपयशा वर्गाः सूर्यादयो ग्रहाः।

१ सकले इति ख०, ठ० च।

गृध्रोलूकश्येनकाय पिङ्गलः कौशिकः क्रमात्॥ ३८॥
मारमथ मयूरय गोरङ्कुः पञ्चिमः स्मृताः।
आदौ साध्यो हुतो मन्त्र(१) उच्चाटे पल्लवः स्मृतः॥ ४०॥
वश्ये ज्वरे तथाकर्षे प्रयोगः सिद्धिकारकः।
शान्तौ प्रीतौ नमस्कारो वौषट् पुष्टौ वशादिषु॥ ४१॥
हुं मन्त्रौ(२) प्रीतिसन्धाये विद्वेषोच्चाटने च फट्।
वषट् सुते च दीप्त्यादौ(३) मन्त्राणां जातयश्च षट्॥ ४२॥
ओषधीः सम्प्रवक्ष्यामि संहाररक्षाविधायिनीः।
महाकाली तथाचण्डी वाराही चेश्वरी तथा॥ ४३॥
सुदर्शना तथेन्द्राणी गात्रस्था रक्षयन्ति तम्।
बला चातिबला भीरुमुसली सहदेव्यपि॥ ४४॥
जाती च मल्लिका यूथी गारुडी भृङ्गराजकः।
चक्ररूपा महौषध्यो धारिता विजयादिदाः॥ ४५॥
ग्रहणे च महादेवि उद्धृताः शुभदायिकाः।
शदा तु कुम्भरङ्कुला सर्वलक्षणलक्षितम्॥ ४६॥
तस्य पादतले कृत्वा साध्येच्छत्रुमात्मनः।
नगरे चैवाहवे च वज्राहतप्रदेशके॥ ४७॥
वल्मीकमृदमाहृत्य मातरौ योजयेत्ततः।

*ओँ नमो महाभैरवाय विकृतदंष्ट्रोग्ररूपाय पिङ्गलाक्षाय* त्रिशूलखड्गधराय(४) वौषट्।

---

१ आदौ कृताग्नौ मन्त्र इति ख०। ज०। च।

२ ॐ मन्त्रौ इति ख०।

३ वषट् भामे च दीप्त्यादाविति ग०, ङ० च। त्रिशूलिने खड्गखट्वाङ्गधरायेति ज०।

४ त्रिशूलखट्वाङ्गधरायेति ख०, ङ०, च०,

पूजयेत् कर्द्दमं देवि स्तम्भयेच्छस्त्रजालकम् ॥ ४८ ॥
अग्निकार्य्यं प्रवक्ष्यामि रणादौ जयवर्द्धनम्।
श्मशाने निशि कान्नाग्नौ नग्नो मुक्तशिखो नरः ॥ ४९ ॥
दक्षिणास्यस्तु जुहुयान्मांसं रुधिरं विषम्।
तुषास्थिखण्डमिश्रन्तु शत्रुनाम्ना शताष्टकम् ॥ ५० ॥

श्रीं नमो भगवति कौमारि लल लल लालय लालय घण्टादेवि अमुकं मारय मारय सहसा नमोऽस्तुते भगवति विद्ये स्वाहा।

अनया विद्यया होमाद्वन्धत्वञ्जायते रिपोः(१)।

श्रीं वज्रकाय वज्रतुण्ड कपिलपिङ्गल करालवदन ऊर्द्ध्वकेश महाबल रक्तमुख(२) तडिज्जिह्व महारौद्र दंष्ट्रोत्कट कह कह करालिन महादृढप्रहार लङ्केश्वरसेतुबन्ध शैलप्रवाह गगनचर एह्येहि भगवन्महाबलपराक्रम भैरवो ज्ञापयति एह्येहि महारौद्र दीर्घलाङ्गूलेन अमुकं वेष्टय वेष्टय जम्भय जम्भय खन खन वैते हूं फट्(३)।

अष्टत्रिंशच्छतन्देवि हनुमान् सर्व्वकर्म्मकृत् ॥ ५१ ॥
पटे हनूमन्तमन्दर्श्य शाद्गमायान्ति शत्रवः।

इत्याग्नेये महापुराणे युद्धजयार्णवे नानामन्त्राणि नाम पञ्चविंशत्यधिकशततमोऽध्यायः॥

---

१ हन्यन्ते [illegible] इति ख०, ग० च।
२ वज्रमुख इति ख०।
३ ओं चटिति ख०।

## अथ षड्विंशत्यधिकशततमोऽध्यायः ।

—•○••○○—

### नक्षत्रनिर्णयः ।

ईश्वर उवाच । नक्षत्रात्मकं पिण्डं शुभाशुभविवृद्धये ।
यस्मिन्नृक्षे भवेत् सूर्यस्तदाद्यो वोऽपि मूर्द्धनि[1] ॥ १ ॥
एकाम्स्ये द्वयन्नेत्रे हस्तपादे चतुष्टयं ।
हृदि पञ्च स्मृति जानी ग्रायुहीदि विचिन्तयेत् ॥ २ ॥
शिरःस्थे तु भवेद्राज्यं पिण्डतो वक्ष्ययोगतः ।
नेत्रयोः कान्तसौभाग्यं हृदये द्रव्यसङ्ग्रहः ॥ ३ ॥
हस्ते हृतं तस्करत्वञ्च तात्तरध्वगः[2] पदे ।
कुम्भाष्टके भानि लिख्य[3] सूर्यकुम्भस्तु दिक्षकः ॥ ४ ॥
अशुभः सूर्यकुम्भः स्यात्कुभः पूर्वादिसंस्थितः ।
फणिराट्[4] प्रवक्ष्यामि जयाजयविवेकदं ॥ ५ ॥
अष्टाविंशत्रिरेखेदिन्दून् पुनर्भाव्यस्त्रिभिस्त्रिभिः ।
अथ ऋक्षाणि चत्वारि रेखास्तत्रैव दापयेत् ॥ ६ ॥
यस्मिन्नृक्षे स्थितो राहुस्तदृक्षं फणिमूर्द्धनि[5] ।
तदादि विन्यसेद् भानि सप्तविंशक्रमेण तु ॥ ७ ॥
वक्त्रे समगते ऋक्षे म्रियते सर्व आहवे ।

---

१ चोऽपि मस्तके इति ङ० | घ ।
२ गतापुरध्वग पदे इति ख० ।
३ भानि लिखेदिति घ०, ङ० ।
४ कालराहुमिति ङ० ।
५ कालमूर्द्धनीति ङ०, ज० घ ।

स्कन्धे भङ्गं विजानीयात्सम्भेषु च मध्यतः ॥ ८ ॥
उदरस्थेन(१) पूजा च जयश्चैवात्मनस्तथा ।
कटिदेशे स्थिते योध आहवे हरते परान् ॥ ९ ॥
पुच्छस्थितेन कीर्त्तिः स्याद्राहुदृष्टे च मे मृतिः ।
पुनरन्यं प्रवक्ष्यामि रविराहुबलन्तव ॥ १० ॥
रविः शुक्रो बुधश्चैव सोमः सौरिर्गुरुस्तथा(२) ।
लोहितः सहिकश्चैव एते यामार्द्धभागिनः ॥ ११ ॥
सौरिं रविञ्च राहुञ्च कृत्वा यत्नेन पृष्ठतः ।
स जयेत् सैन्यसङ्घातं द्यूतमध्वानमाहवं ॥ १२ ॥
रोहिणी चोत्तरास्तिस्रो मृगः पञ्च स्थिराणि हि ।
अश्विनी रेवती स्वाती धनिष्ठा शततारका ॥ १३ ॥
क्षिप्राणि पञ्चभान्येव यात्रार्थी चैव(३) योजयेत् ।
अनुराधाहस्तमूल मृगः पुष्यं पुनर्वसुः ॥ १४ ॥
सर्वकार्येषु चैतानि ज्येष्ठा चित्रा विशाखया ।
पूर्वास्तिस्रोऽग्निभरणी मघार्द्राश्लेषादारुणाः ॥ १५ ॥
स्थावरेषु स्थिरं शूर्पं यात्रायां क्षिप्रमुत्तमम् ।
सौभाग्यार्थे मृदून्येव उग्रेषूग्रन्तु कारयेत् ॥ १६ ॥
दारुणे दारुणं कुर्य्यादूर्ध्वे चाधोमुखादिकं ।
कृत्तिका भरण्याश्लेषा विशाखा पितृनैर्ऋतम् ॥ १७ ॥

---

१ उदरस्थे चेति ख. ।
२ कटिदेश इत्यादि, सौरिर्गु- नकश्चेत्यन्त पाठ घ. पुस्तके नास्ति ।
३ यात्राध्वगि चेति ख., ङ. च ।

पूर्व्वात्रयमधोवक्त्रं कर्म्म चाधोमुखञ्चरेत्(१) ।
एषु कूपतड़ागादि विद्याकर्म्म भिषक्क्रिया ॥ १८ ॥
स्थापननौकाभूयादिविधानं(२) खननन्तथा ।
रेवती चाश्विनी चित्रा हस्ता स्वाती पुनर्वसुः ॥ १९ ॥
अनुराधा मृगो ज्येष्ठा नव वै पार्श्वतोमुखाः ।
एषु राज्याभिषेकञ्च पट्टबन्धञ्च जाङ्गयोः ॥ २० ॥
आरामस्तम्भप्रासादं प्राकारं चैव तोरणं ।
ध्वजचिह्नपताकाश्च(३) सर्व्वान्येतांश्च कारयेत् ॥ २१ ॥
द्वादशी सूर्य्यदग्धा तु चन्द्रे चैकादशी तथा ।
भौमेन दशमी दग्धा तृतीया वै बुधेन च ॥ २२ ॥
षष्ठी च गुरुणा दग्धा द्वितीया भृगुणा तथा ।
सप्तमी सूर्य्यपुत्रेण त्रिपुष्करमथो वदे ॥ २३ ॥
द्वितीया द्वादशी चैव सप्तमी वै तृतीयया(४) ।
रविर्भौमस्तथा(५) शौरिः षडेतास्तु त्रिपुष्कराः(६) ॥ २४ ॥
विशाखा कृत्तिका चैव उत्तरे द्वे पुनर्व्वसुः ।
पूर्व्वभाद्रपदा चैव षडेते तु त्रिपुष्कराः ॥ २५ ॥
लाभो हानिर्यो वृद्धिः पुत्रजन्म तथैव च ।
नष्टं भ्रष्टं विनष्टं वा तत्सर्व्वन्त्रिगुणं(७) भवेत् ॥ २६ ॥

---

१ चाधोमुखमथेदिति ख० ।
२ नौकाधूतादिविधानमिति ग०, घ०, ङ० च ।
३ ध्वजचिह्नपताकाश्चेति ङ० ।
४ तृतीयकेति ङ०, ञ० च ।
५ रुद्रभौमस्तथेति क०, ग०, घ०, ङ० च ।
६ षडेतास्त्रिषु पुष्करा इति क०, ख०, ङ०, ह० च ।
७ तत्सर्वं द्विगुणमिति ख०, ङ० च ।

अश्विनी भरणी चैव अश्लेषा पुष्यमेव च।
स्वातियैव विशाखा च श्रवणं सप्तमं पुनः॥ २७॥
एतानि दृढचक्षूंषि पश्यन्ति च दिशो दश।
यात्रासु दूरगस्यापि आगमः पुरुगोचरे॥ २८॥
आषाढे रेवती चित्रा केकराणि पुनर्वसुः।
एषु पञ्चसु कर्कषेषु(१) निर्गतस्यागमो भवेत्॥ २९॥
कृत्तिका रोहिणी सौम्यं फल्गुनी च मघा तथा।
मूलं ज्येष्ठानुराधा च धनिष्ठा शततारका:॥ ३०॥
पूर्वभाद्रपदा चैव चिपिटानि च तानि हि(२)।
अध्वानं व्रजमानस्य पुनरेवागमो भवेत्॥ ३१॥
हस्त उत्तरभाद्रश्च आर्द्रापाढा तथैव च।
नष्टार्थायैव दृश्यन्ते सङ्ग्रामो नैव विद्यते॥ ३२॥
पुनर्वक्ष्यामि गण्डान्तमन्तमध्ये यथा स्थितम्।
रेवत्यन्ते चतुर्नाडी(३) अश्विन्यादिचतुष्टयम्॥ ३३॥
उभयोर्यामतान्तु वर्जयेत्तत् प्रयत्नतः।
अश्लेषान्ते मघादौ तु घटिकानां चतुष्टयम्॥ ३४॥
द्वितीयं गण्डमाख्यातं तृतीयं भैरवि शृणु।
ज्येष्ठामूलयोर्मध्ये उग्ररूपन्तु यामकम्॥ ३५॥

---

१ कैकरेषु च कर्कषेषु इति ख०।
२ चिपिटानि च भानि हि इति घ०, ङ० च।
३ रेवत्यन्ते चतुष्कान्त इति ख०, ग०, ङ०, झ०, ञ० च।

न कुर्य्याच्छुभकर्म्माणि यदीच्छेदात्मजीवितम्।
दारके जातकाले च(१) म्रियेते पितृमातरौ॥ ३६॥

इत्याग्नेये महापुराणे नक्षत्रनिर्णयो नाम षड्विंशत्यधिक-
शततमोऽध्यायः।

## अथ सप्तविंशत्यधिकशततमोऽध्यायः।



### नानाबलानि।

ईश्वर उवाच(२)। विष्कुम्भे घटिकास्तिस्रः शूले पञ्च विवर्जयेत्(३)।
षट् षट्(४) गण्डेऽतिगण्डे च नव व्याघातवज्रयोः॥ १॥
परिघे च व्यतीपाते उभयोरपि तद्दिनम्।
वैधृते तद्दिनञ्चैव यात्रायुद्धादिकर्म्म्यजेत्॥ २॥
ग्रहैः शुभाशुभं वक्ष्ये देवि मेषादिराशितः(५)।
चन्द्रशुक्रौ च जन्मस्थौ वर्जितौ शुभदायकौ॥ ३॥

---

१ जातके चापीति ख०।
२ अग्निरुवाचेति ङ०।
३ पञ्च च वर्जयेदिति ख०, ग०, घ०, ङ० च।
४ षट् च गण्डेऽतिगण्डे चेति ग०, घ०, ङ० च। सप्त गण्डेऽतिगण्डे चेति ग०, ङ० च।
५ मेषादिराशिभिरिति ज०।

द्वितीयो मङ्गलोऽथार्कः सौरिश्चैव तु मैत्रिकः ।
द्रव्यनाशमलाभञ्च आहवे भङ्गमादिशेत् ॥ ४ ॥
सोमो बुधो भृगुर्जीवो द्वितीयस्थाः शुभावहाः ।
तृतीयस्थो यदा भानुः शनिर्भौमो भृगुस्तथा ॥ ५ ॥
बुधश्चैवेन्दू राहुश्च सर्वे ते फलदा ग्रहाः ।
बुधशुक्रौ चतुर्थौ तु शेषाश्चैव भयावहाः ॥ ६ ॥
पञ्चमस्थो यदा जीवः शुक्रः सौम्यश्च चन्द्रमाः ।
ददेत(¹) चेप्सितं लाभं षष्ठे स्थाने शुभी रविः ॥ ७ ॥
चन्द्रः सौरिश्चाङ्गलश्च ग्रहा देवि-स्वराशितः ।
बुधश्च शुभदः षष्ठे त्यजेत् षष्ठं गुरुं भृगुं ॥ ८ ॥
सप्तमोऽर्कः शनिर्भौमो राहुर्हान्यै सुखाय च ।
जीवो भृगुश्च सौम्यश्च बुधशुक्रौ चाष्टमौ शुभौ ॥ ९ ॥
शेषा ग्रहास्तथा हान्यै त्वभृगू नवमो शुभौ ।
शेषा हान्यै च लाभाय दशमो भृगुभास्करौ ॥ १० ॥
शनिर्भौमश्च राहुश्च चन्द्रः सौम्यः शुभावहः ।
शुभायैकादशे सर्व्वे वर्जयेद्दशमे(²) गुरुम् ॥ ११ ॥
बुधशुक्रौ द्वादशस्थौ शेषान् द्वादशगांस्त्यजेत् ।
अहोरात्रे द्वादश स्यू राशयस्तान् वदाम्यहम् ॥ १२ ॥
मीनो मेषोऽथ मिथुनश्चतस्रो नाडयो वृषः ।
षट् कर्कसिंहकन्याश्च तुला पञ्च च वृश्चिकः ॥ १३ ॥
धनुर्नक्रो घटश्चैव सूर्यगो राशिरायकः ।

---

१ ददातीति ख० । ग० च ।
२ वर्जयेद्दशममिति ख०, ङ०, घ०,

चरस्थिरद्विःस्वभावा मेषाद्याः स्युर्यथाक्रमम् ॥ १४ ॥
कुलीरो मकरश्चैव तुलामेषादयश्चराः ।
चरकार्य्यं जयं काममाचरेच्च शुभाशुभम् ॥ १५ ॥
स्थिरो हषो हरिः कुम्भो हश्चिकः स्थिरकार्य्यके ।
शीघ्रः समागमो नास्ति रोगार्त्तो नैव मुच्यते ॥ १६ ॥
मिथुनं कन्यका मीनो धनुश्च द्विःस्वभावकः ।
द्विःस्वभावाः शुभास्तेते सर्वकार्य्येषु नित्यशः ॥ १७ ॥
यात्रावाणिज्यसङ्ग्रामे विवाहे राजदर्शने ।
हृद्धिं जयस्तथा लाभं युद्धे जयमवाप्नुयात् ॥ १८ ॥
अश्विनी त्रिंशताराश्च तुरगस्याकृतिर्यथा ।
यद्यत्र कुरुते हष्टिमेकरात्रं प्रवर्षति ॥ १९ ॥
यमभे तु यदा हष्टिः पञ्चमेकन्तु वर्षति ।

इत्याग्नेये महापुराणे युद्धजयार्णवे नानायलानि नाम
सप्तविंशत्यधिकशततमोऽध्यायः ॥

---

## अथ अष्टाविंशत्यधिकशततमोऽध्यायः ।

कोटचक्रम् ।

ईश्वर उवाच । कोटचक्रं प्रवक्ष्यामि चतुरस्रं पुरं लिखेत् ।
चतुरस्रं पुनर्मध्ये तन्मध्ये चतुरस्रकम् ॥ १ ॥

नाडीत्रितयविन्यस्ता मेषाद्याः पूर्वदिङ्मुखाः ।
कृत्तिका पूर्वभागे तु अश्लेषाग्नेयगोचरे ॥ २ ॥
भरणी दक्षिणे देया विशाखा नैर्ऋते न्यसेत् ।
अनुराधां पश्चिमे च श्रवणं वायुगोचरे ॥ ३ ॥
धनिष्ठाश्चोत्तरे न्यस्य ऐशान्यां रेवतीं तथा ।
बाह्यनाड्यां स्थितान्येव अष्टौ ऋक्षाणि यत्नतः ॥ ४ ॥
रोहिणीपुष्यफल्गुन्यः स्वाती ज्येष्ठा क्रमेण तु ।
अभिजिच्छततारा तु अश्विनी मध्यनाडिका ॥ ५ ॥
कोटमध्ये तु या नाडी कथयामि प्रयत्नतः ।
मृगयाभ्यन्तरे पूर्वं तस्याग्नेये पुनर्वसुः ॥ ६ ॥
उत्तराफल्गुनी याम्ये चित्रा नैर्ऋतसंस्थिता ।
मूलन्तु पश्चिमे न्यस्योत्तराषाढान्तु वायवे ॥ ७ ॥
पूर्वभाद्रपदा सौम्ये रेवती ईशगोचरे ।
कोटस्याभ्यन्तरे नाडी ऋक्षाष्टकसमन्विता ॥ ८ ॥
आर्द्रा हस्ता तथाषाढा चतुष्कञ्चोत्तराश्विकम् ।
मध्ये ऋक्षचतुष्कन्तु दद्यात् कोटस्य कोटरे ॥ ९ ॥
एवं दुर्गस्य विन्यासं वाह्ये स्थानं दिशाधिपात् ।
आगन्तुको यदा योद्धा ऋचवान् स्यात्फलान्वितः ॥ १० ॥
कोटमध्ये ग्रहाः सौम्या यदा ऋचान्विताः पुनः ।
जयं मध्यस्थितानान्तु भङ्गमागामिनो विदुः ॥ ११ ॥
प्रवेशभे प्रवेष्टव्यं निर्गमभे च निर्गमेत् ।
भृगु-सोमसुतध-भौम-रविसुत-सङ्घाल-चन्द्र-"॥ १२ ॥
तदा भङ्गं विजानीयाज्जयमागन्तुकस्य च ।

प्रवेशर्चवतुष्के तु सङ्ग्रामचारमेद् यदा ॥ ११ ॥
तदा सिद्धाति तद्दुर्गं न कुर्य्याच्चैव विस्मयम् ।

इत्याग्नेये महापुराणे युद्धजयार्णवे कोटचक्र नामाष्टा-
विंशत्यधिकशततमोऽध्यायः ॥

## अथोनत्रिंशदधिकशततमोऽध्यायः ।

—०•••०००•०—

### अर्घकाण्डम् ।

ईश्वर उवाच । अर्घमानं प्रवक्ष्यामि उल्कापातोऽयभूयला ।
निर्घातो ग्रहण वेश्मो दिशां दाहो भवेद्यदा ॥ १ ॥
तच्चयेन्मासि मासेवं यदेते स्युश्च चैत्रके ।
अलङ्कारादि सङ्ग्रह्य षड्भिर्मासैश्चतुर्गुणम् ॥ २ ॥
वैशाखे चाष्टमे मासि षड्गुणं सर्वसङ्ग्रहं ।
ज्येष्ठे मासि तथाषाढे यवगोधूमधान्यके ॥ ३ ॥
श्रावणे घृततैलाद्यैराश्विने वस्त्रधान्यके ।
कार्त्तिके धान्यकैः क्रीतैर्मासे स्यान्मार्गशीर्षके ॥ ४ ॥
पुष्ये कुङ्कमगन्धाद्यैर्लाभो धान्यैश्च माघके ।
गन्धाद्यैः फाल्गुने क्रीतैरर्घकाण्डमुदाहृतम् ॥ ५ ॥

इत्याग्नेये महापुराणे अर्घकाण्ड नाम ऊनत्रिंशदधिक
शततमोऽध्यायः ।

—

# अथ त्रिंशदधिकशततमोऽध्यायः।

---

घातचक्रं।

ईश्वर उवाच। मण्डलानि प्रवक्ष्यामि चतुर्थोविजयाय हि।
कृत्तिका च मघा पुष्यं पूर्वा चैव तु फल्गुनी ॥ १ ॥
विशाखा भरणी चैव पूर्वभाद्रपदा तथा।
आग्नेयमण्डलं भद्रे तस्य वक्ष्यामि लक्षणं ॥ २ ॥
यदाव चलते वायुर्मण्डलं शशिसूर्ययोः।
भूमिकम्पोऽथ निर्घातो ग्रहणं चन्द्रसूर्ययोः ॥ ३ ॥
धूमज्वाला दिशां दाहः केतोश्चैव प्रदर्शनं।
रक्तवृष्टिश्चोपतापः पाषाणपतनन्तथा ॥ ४ ॥
नेत्ररोगोऽतिसारश्च अग्निश्च प्रबलो भवेत्।
अल्पक्षीरास्तथा गावः स्वल्पपुष्पफला द्रुमाः ॥ ५ ॥
विनाशश्चैव शस्यानां स्वल्पवृष्टिं विनिर्दिशेत्।
चातुर्वर्ण्याः प्रपीडान्ते क्षुधार्त्ता अखिला नराः ॥ ६ ॥
सैन्धवा यामुनाश्चैव गुर्ज्जरा भोजवाह्लिकाः।
जालन्धरं च काश्मीरं सासमश्चोत्तरापथम् ॥ ७ ॥
देशाश्चैते विनश्यन्ति तस्मिन्नुत्पातदर्शने।
हस्ता चित्रा मघा स्वाती मृगो वाथ पुनर्वसुः ॥ ८ ॥
उत्तराफल्गुनी चैव अश्विनी च तथैव च।

यदात्र भवते(१) किञ्चिद्वायव्यन्तं विनिर्द्दिशेत् ॥ ९ ॥
नष्टधर्म्माः प्रजाः सर्व्वा हाहाभूता विचेतसः।
डाहल कामरूपञ्च कलिङ्ग कोशलस्तथा ॥ १० ॥
अयोध्या च अवन्ती च नश्यन्ते कोङ्कणाम्बुकाः।
अश्लेषा चैव मूलन्तु पूर्व्वाषाढा तथैव च ॥ ११ ॥
रेवती वारुण सूचस्तथा भाद्रपदोत्तरा।
यदात्र चलते(२) किञ्चिद्वारुणं तं विनिर्द्दिशेत् ॥ १२ ॥
बहुक्षीरघृता गावो बहुपुष्पफला द्रुमाः।
आरोग्य तत्र जायेत बहुशस्या च मेदिनी ॥ १३ ॥
धान्यानि च समर्घानि सुभिक्षं पार्थिव भवेत्।
परस्परं नरेन्द्राणां सङ्ग्रामो दारुणो भवेत् ॥ १४ ॥
ज्येष्ठा च रोहिणी चैव अनुराधा च वैष्णवम्।
धनिष्ठा चोत्तराषाढा अभिजित् सप्तमस्तथा ॥ १५ ॥
यदात्र चलते(३) किञ्चित् माहेन्द्रं तं विनिर्द्दिशेत्।
प्रजाः समुदितास्तस्मिन् सर्व्वरोगविवर्ज्जिताः ॥ १६ ॥
सन्धिं कुर्व्वन्ति राजानः सुभिक्षं पार्थिवं शुभम्।
यामस्तु द्विविधो ज्ञेयो सुखदुःखकरो महान् ॥ १७ ॥
चन्द्रो राहुस्तथादित्य एकराशौ यदि स्थितः(४)।
सुखयामस्तु विज्ञेयो वामित्रे दुःख उच्यते ॥ १८ ॥

---

१ यदात्र भवते इति ख०।    ४ यदा स्थिता इति ख०, ग०, घ०, ङ०, ज० च।
२,३ यदात्र चलते इति ङ०। यदा स्थित इति ज०, ख० च।

भानोः पञ्चदशे ऋक्षे यदा चरति चन्द्रमाः।
तिथिच्छेदे[1] तु सम्भासे सोमग्रामं विनिर्दिशेत्॥ १८॥

इत्याग्नेये महापुराणे युद्धजयार्णवे मण्डलं नाम त्रिंशदधिकशततमोऽध्यायः॥

## अथैकत्रिंशदधिकशततमोऽध्यायः।



घातचक्रादिः।

ईश्वर उवाच। मद्विषमकारादीन् स्वरान् पूर्व्वादितो लिखेत्।
चैत्राद्यं भ्रमणाचक्रं प्रतिपत् पूर्णिमा तिथिः॥ १॥
चयोदशी चतुर्दशी अष्टम्येका च सप्तमी।
प्रतिपच्चयोदश्यस्ताश्चियथो द्वादश स्मृताः॥ २॥
चैत्रपक्षे तु संसर्गाज्जयलाभादिकं विदुः।
विषमे तु शुभं ज्ञेयं समे चाशुभमीरितम्॥ ३॥
युद्धकाले समुत्पन्ने यस्य नाम समुदाहृतम्।
मात्राष्टकं यथाम चादित्यो गुरुरेव च॥ ४॥

१ तिथिच्छेदे इति ग०।

जयस्तस्य सदाकालं सङ्ग्रामे चैव भीषणे।
ह्रस्वनाम यदा योधो म्रियते ह्यनिवारितः(१) ॥ ५ ॥
प्रथमो दीर्घ आदिस्थो द्वितीयो मध्ये अन्तकः ।
द्वौ मध्येन प्रथमान्तौ जायेते नात्र संशयः ॥ ६ ॥
पुनश्चान्ते यदा चादौ(२) स्वराक्रान्तन्तु दृश्यते ।
ह्रस्वस्य मरणं विद्याद् दीर्घस्यैव जयो भवेत् ॥ ७ ॥
नरचक्रं प्रवक्ष्यामि ऋक्षपिण्डात्मकं यथा ।
प्रतिमामालिखेत् पूर्वं पश्चादृक्षाणि विन्यसेत् ॥ ८ ॥
त्रीणि शीर्षे मुखे चैकं द्वे चक्षे नेत्रयोर्न्यसेत्।
वेदसङ्ख्यानि हस्ताभ्यां कर्णे ऋक्षद्वयं पुनः ॥ ९ ॥
हृदये भूतसङ्ख्यानि षड़ृक्षाणि तु पादयोः ।
नाम ऋक्षं स्फुटं कृत्वा चक्रमध्ये तु विन्यसेत् ॥ १० ॥
नेत्रे शिरोदक्षकर्णे याम्यहस्ते च पादयोः
हृद्ग्रीवावामहस्ते तु पुनर्गुह्ये तु पादयोः ॥ ११ ॥
यस्मिनृक्षे स्थितः सूर्य्यः सौरिर्भौमस्तु सैंहिकः ।
तस्मिन् स्थाने स्थिते विद्याद् घातमेव न संशयः ॥ १२ ॥
जयचक्रं प्रवक्ष्यामि आदिक्षान्तांश्च वै लिखेत्।
रेखास्त्रयोदशालिख्य षड्रेखास्तिर्यगालिखेत् ॥ १३ ॥
दिग् यद्दा मुनयः सूर्य्या ऋत्विग्रुद्रास्तिथिः क्रमात् ।
मूर्च्छनाश्रुतिवेदर्त्तजिना(३) अकडमा ह्यधः ॥ १४ ॥

---

१ म्रियते ह्यविचारित इति ख०, । म्रियते २ यथा चादौ इति क०, ग०, घ०,ङ०च । ह्यविचारत इति ग०, घ०, ङ० च ।  ३ मूर्च्छनाश्रुतिवेदाङ्गजिना इति ख० ।

आदित्याद्याः समस्ते नामान्ते बलिनो ग्रहाः ।
आदित्यसौरिभौमाख्या जये सौम्याश्च सन्धये ॥ १५ ॥
रेखा द्वादश चोद्धृत्य षट् च याम्यास्तथोत्तराः ।
मनुष्यैव तु(१) कक्षाणि नेत्रे च रविमण्डलं ॥ १६ ॥
तिथयश्च रसा वेदा अग्निः सप्तदशाश्चवा ।
वसुरन्ध्राः समाख्याता अकटपानघो न्यसेत् ॥ १७ ॥
एकैकमक्षरन्यस्त्वा शेषाण्येवं क्रमान् न्यसेत् ।
नामाक्षरकृतं पिण्डं वसुभिर्भाजयेत्ततः ॥ १८ ॥
वायसान्मण्डलोऽप्यग्रो मण्डलाद्रासभो वरः ।
रासभाद्वृषभः श्रेष्ठो वृषभात् कुञ्जरो वरः ॥ १९ ॥
कुञ्जराच्च पुनः सिंहः सिंहाच्चैव खरवरः ।
खरोऽप्येव बली धूम्र एवमादि बलाबलं ॥ २० ॥

इत्याग्नेये महापुराणे घातचक्रादिर्नामैकत्रिंशदधिकशततमोऽध्यायः ॥

## अथ द्वात्रिंशदधिकशततमोऽध्यायः ।

### सेवाचक्रं ।

ईश्वर उवाच । सेवाचक्रं प्रवक्ष्यामि लाभालाभानुसूचकं(२) ।
पिता माता तथा भ्राता दम्पती च विशेषतः ॥ १ ॥

---

१ मनुष्यैव तु इति ख०,घ०,ज०,ञ०च । २ लाभालाभायसूचकमिति ज०,ञ०च ।

तस्मिंश्चक्रे तु विज्ञेयं यो यस्माल्लभते फलं।
षडूर्द्धाः स्थापयेद्रेखा भिन्नायाष्टौ तु तिर्य्यगाः॥ २॥
कोष्ठकाः पञ्चत्रिंशच्च तेषु वर्णान् समालिखेत्।
स्वरान् पञ्च समुद्धृत्य स्पर्शान् पश्चात् समालिखेत्॥ ३॥
ककारादिहकारान्तान् हीनाङ्गांस्त्रीन्विवर्ज्जयेत्।
सिद्धः साध्यः सुसिद्धश्च अरिर्मृत्युश्च नामतः॥ ४॥
अरिर्मृत्युश्च द्वावेतौ वर्जयेत् सर्वकर्म्मसु।
एषां मध्ये यदा नाम लक्षयेत्तु प्रयत्नतः॥ ५॥
आत्मपक्षे[१] स्थिताः सत्त्वाः सर्वे ते शुभदायकाः।
द्वितीयः पोषकश्चैव तृतीयश्चार्थदायकः॥ ६॥
आत्मनाशश्चतुर्थस्तु[२] पञ्चमो मृत्युदायकः।
स्थानमेवार्थलाभाय मित्रभृत्यादिबान्धवाः॥ ७॥
सिद्धः साध्यः सुसिद्धश्च सर्वे ते फलदायकाः।
अरिर्मृत्युश्च द्वावेतौ वर्जयेत् सर्वकर्म्मसु[३]॥ ८॥
अकारान्तं यथा प्रोक्तं ऋदृलृएओ विदुस्तथा।
पुनश्चैवाङ्गकान् वक्ष्ये वर्गाष्टकसुसंस्कृतान्॥ ९॥
देवा अकारवर्गे तु दैत्याः कवर्गमाश्रिताः।
नागाश्चैव चवर्गाः स्युर्गन्धर्वाश्च टवर्गजाः॥ १०॥

---

१ साध्यपक्षे इति ख०, घ०, ङ०, अ० च। आत्मपक्षे इति क०।
२ साधनाकचतुर्थस्तु इति ख०, घ०, ङ०, ज०, ञ० च।
३ अरिर्मृत्युरित्यादि, सर्वकर्मसु इत्यन्त पाठः क० पुस्तके नास्ति।

तवर्गे ऋषयः प्रोक्ताः पवर्गे राक्षसाः स्मृताः।
पिशाचाश्च यवर्गे च शवर्गे मानुषाः स्मृताः॥ ११॥
देवेभ्यो बलिनो दैत्या दैत्येभ्यः पन्नगास्तथा(१)।
पन्नगेभ्यश्च गन्धर्वा गन्धर्वादृषयो वराः॥ १२॥
ऋषिभ्यो राक्षसाः शूरा राक्षसेभ्यः पिशाचकाः।
पिशाचेभ्यो मानुषाः स्युर्दुर्बलं वर्जयेद्बली॥ १३॥
पुनर्भिन्नविभागन्तु ताराचक्रं क्रमाच्छृणु।
नामाद्यक्षरऋक्षन्तु स्फुटं कृत्वा तु पूर्वतः॥ १४॥
ऋक्षे तु संस्थितास्तारा नवत्रिका यथाक्रमात्।
जन्म सम्पद्विपत् क्षेमं नामधाँस्तारका इमाः॥ १५॥
प्रत्यरा धनदा षष्ठी नैधनामैत्रके परे।
परमैत्रास्त्विमा तारा जन्मतारा त्वशोभना॥ १६॥
सम्पत्तारा महाश्रेष्ठा विपत्तारा तु निष्फला।
क्षेमतारा सर्वकार्ये प्रत्यरा अर्थनाशिनी(२)॥ १७॥
धनदा राज्यलाभादि नैधना कार्यनाशिनी।
मैत्रतारा च मित्राय परमैत्रा हितावहा(३)॥ १८॥
ताराचक्रं। मात्रा वै स्वरसङ्ख्या स्याद्ग्राममध्ये क्षिपेत् प्रिये।
विंशत्या च हरेद्भागं यच्छेषं तत् फलं भवेत्॥ १९॥
उभयोर्ग्राममध्ये तु लभयेच्च धनं ध्रुवं।
हीनमात्रा ध्रुवं प्रेष्यमगं मात्राधिकं पुनः॥ २०॥

---

१ पन्नगास्तत इति क०, ख०, घ०, ङ०, छ० च। [illegible] इति ञ०।
२ अथवा चात्मनाशिनी इति क०।
३ हिताय चेति ङ०।

धनेन मित्रता नृणां क्षणेनैव ह्यदामता ।
सेवाचक्रमिदं प्रोक्तं लाभालाभादिदर्शकं ॥ २१ ॥
मेषमिथुनयोः प्रीतिर्मैत्री मिथुनसिंहयोः ।
तुलासिंहौ महामैत्री एवं धनुर्घटे पुनः ॥ २२ ॥
मित्रसेवां न कुर्व्वीत मित्रौ मीनवृषौ मतौ ।
वृषकर्कटयोर्मैत्री कुलीरघटयोस्तथा ॥ २३ ॥
कन्यावृश्चिकयोरेवन्तथा मकरकीटयोः ।
मीनमकरयोर्मैत्री तृतीयैकादशे स्थिता ॥ २४ ॥
तुलामेषौ महामैत्री विशिष्टौ वृषवृश्चिकौ ।
मिथुनधनुषोः प्रीतिः कर्कटमकरयोस्तथा ॥ २५ ॥
मृगकुम्भकयोः प्रीतिः कन्यामीनौ तथैव च ।

इत्याग्नेये महापुराणे युद्धजयार्णवे सेवाचक्रं नाम द्वात्रिं-
शदधिकशततमोऽध्यायः ॥

---

## अथ त्रयस्त्रिंशदधिकशततमोऽध्याय. ।



### नानावलानि ।

ईश्वर उवाच । गर्भजातस्य वक्ष्यामि चेत्राधिपस्वरूपकं ।
नातिदीर्घः कृशः स्थूलः समाङ्गो गौरपैत्तिकः ॥ १ ॥

रक्ताचो गुणवान् शूरो गृहे सूर्य्यस्य जायते।
सौभाग्यो मृदुसारश्च जातश्चन्द्रगृहोदये॥ २॥
वाताधिकोऽतिरूक्षादिर्जातो भूमिभुवो गृहे।
बुद्धिमान् सुभगो मानी जातः सौम्यगृहोदये॥ ३॥
बहुक्रोधश्च सुभगो जातो गुरुगृहे नरः।
त्यागी भोगी च सुभगो जातो भृगुगृहोदये॥ ४॥
बुद्धिमान्दुर्भगो मानी जातश्चार्किगृहे नरः।
सौम्यलग्ने तु सौम्यः स्यात् क्रूरः स्यात् क्रूरलग्नके॥ ५॥
दशाफलञ्चैव वक्ष्ये नामराशौ तु संस्थितं।
गजाश्वधनधान्यानि राज्ययोर्विपुला भवेत्॥ ६॥
पुनर्धनागमश्चापि दशायां भास्करस्य तु।
दिव्यस्त्रीदा चन्द्रदशा भूमिलाभः सुखं कुजे॥ ७॥
भूमिधान्यं धनं बौधे गजाश्वादिधनं गुरौ।
खाद्यपानधनं शुक्रे शनौ व्याध्यादिसंयुतः॥ ८॥
स्थानभ्रंशादिनाशानं वाणिज्यं राहुदर्शने।
वामनाडीप्रवाहे स्याद्यान चेद्विषमाक्षरं॥ ९॥
तदा जयति सङ्ग्रामे शनिभौमसैंहिकाः।
दक्षनाडीप्रवाहेर्के वाणिज्ये चैव निष्फला॥ १०॥
सङ्ग्रामे जयमाप्नोति समनामा नरो ध्रुवं।
ऋधवारे जयं विद्याद्वृहद्वारे रणे मृतिं॥ ११॥

ओं ह्रूं ओं ह्रूं ओं स्फें ग्रस मोटय(१) ओं चूर्णय २ ओं
सर्व्वशत्रुं मर्द्दय २ ओं ह्रूं ओं ह्रः फट्।

१ मोचयेति ख०, ङ० च।

सप्तवारमभिमन्त्र्य ध्यात्वात्मानन्तु भैरवं ।
चतुर्भुजन्दशभुजं विंशद्बाह्वात्मकं शुभं ॥ १२ ॥
शूलखट्वाङ्गहस्तन्तु खड्गकट्टारिकोद्यतं ।
भक्षणं परसैन्यानामात्मसैन्यपराङ्मुखं ॥ १३ ॥
सम्मुखं शत्रुसैन्यस्य शतमष्टोत्तरं जपेत् ।
जयाड्डमरुकाच्छब्दाच्छत्रुं त्यक्त्वा पलायते ॥ १४ ॥
परसैन्यं शृणु भङ्गं प्रयोगेण पुनर्वदे ।
श्मशानाङ्गारमादाय विष्ठाश्चोलूककाकयोः ॥ १५ ॥
कर्पटे प्रतिमां लिख्य साध्यस्यैवाक्षरं यथा ।
नामाय नवधा लिख्य रिपोश्चैव यथाक्रमं ॥ १६ ॥
मूर्ध्नि वक्त्रे ललाटे च हृदये गुह्यपादयोः ।
पृष्ठे तु बाहुमध्ये तु(१) नाम वै नवधा लिखेत् ॥ १७ ॥
मोटयेद्युद्धकाले तु(२) उच्चरित्वा तु विद्यया ।
तार्क्ष्यचक्रं प्रवक्ष्यामि जयार्थं त्रिमुखाक्षरं(३) ॥ १८ ॥
क्षिप ॐ स्वाहा तार्क्ष्यात्मा यत्र रोगविषादिहृत् ।
दुष्टभूतग्रहार्त्तस्य व्याधितस्यातुरस्य च ॥ १९ ॥
करोति यादृगङ्गं तादृशं सिध्यते क्षणात् ।
स्थावरं जङ्गमञ्चैव भूताय कृत्रिमं विषं ॥ २० ॥
तत्सर्वं नाशमायाति(४) साधकस्यावलोकनात् ।

---

१ बाहुमूले तु इति ख० ।
२ मोचयेद्युद्धकाले तु इति ख०, ङ० च ।
३ जयार्थं भूमुखाक्षरमिति घ०, ङ०, ख०, ढ०, ज०, झ०, ञ० च ।
४ नाशमायातीति ख० ।

पुनर्ध्यायेन्महाताक्ष्यं द्विपक्षं मानुषाकृतिं ॥ २१ ॥
द्विभुजं वक्रचञ्चुं च(१) गजकूर्म्मधरं प्रभुं ।
असङ्ख्योरगपादस्थमागच्छन्तं खमध्यतः ॥ २२ ॥
ग्रसन्तश्चैव खादन्तं तुदन्तं चाहवे रिपून् ।
चञ्च्वाहताश्च द्रष्टव्याः केचित्पादैश्च चूर्णिताः ॥ २३ ॥
पक्षपातैश्चूर्णिताश्च केचिन्नष्टा दिशो दश ।
तार्क्ष्यध्यानान्वितो यश्च त्रैलोक्ये ह्यजयो भवेत्(२) ॥२४॥
पिच्छिकान्तु प्रवक्ष्यामि मन्त्रसाधनजां क्रियां ।

ओं हूं पक्षिन् क्षिप ओं हूं सः महाबलपराक्रम सर्वसैन्यं भक्षय२ ओं मर्दय२ ओं चूर्णय२ ओं विद्रावय२ ओं हूं खः ओं भैरवो ज्ञापयति स्वाहा ।

अमुं चन्द्रग्रहणे तु जप्त्वा तु पिच्छिकां ॥ २५ ॥
मन्त्रयेद् भ्रामयेत्सैन्यं सम्मुखं गजसिंहयोः ।
भ्रामाद्द्रवान् मर्दयेच्च सिंहारूढो मृगाधिकान् ॥ २६ ॥
अथाङ्कं प्रवक्ष्यामि दूरं मन्त्रेण(३) बोधयेत् ।
आहूया चरकं दद्यात् कालरात्र्या विशेषतः ॥ २७ ॥
श्मशानभस्मसंयुक्तं मालती चामरी तथा(४) ।
कार्पाससूत्रमाबध्य तेन दूरस्थं बोधयेत् ॥ २८ ॥

ओं पक्षे वै महेन्द्रि पक्षे महेन्द्रि अधः स्थि ओं जहि महामंटि पाहि पाहि क्षिसि क्षिसि ओं हुं फट् ।

---

१ वक्रपक्षं चेति ख., घ., ङ., ज. च । क., ज., झ. च ।
२ चवरी मर्देदिति ख., ग., ङ. च । ३ मालती चामरी मर्देदिति क., ज. च ।
४ पारक्ष्यो चेति ज. । मन्त्रमन्त्रे चेति क.,

अरेखांशं दूरमभ्द्राज्जमया भङ्गविद्यया।

अपराजिता च धुस्तूरस्ताभ्यान्तु तिलकेन हि॥ २८॥

ओं किलि किलि विकिलि इच्छाकिलि भूतहनि शङ्खिनि उमे दण्डहस्ते रौद्रि माहेश्वरि उल्कामुखि ज्वालामुखि शङ्कुकर्णे शुष्कजङ्घे अलम्बुषे हर ओं सर्वदुष्टान् खन ओं यन्मामिदीक्षयेद्देवि तांस्तान् मोहय ओं रुद्रस्य हृदये स्थिता रौद्रि सौम्येन भावेन आत्मरक्षान्ततः कुरु स्वाहा।

वाह्यतो मातृः संलिख्य सकलाक्षतिवेष्टिताः।

नागपत्रे (१) लिखेद्दिव्यां सर्वकामार्थसाधनीं॥ ३०॥

इन्द्राद्यैर्धारिता पूर्वं ब्रह्मरुद्रेन्द्रविष्णुभिः।

गुरुसङ्ग्रामकाले तु विद्यया रक्षिताः सुराः॥ ३१॥

रक्षया नारसिंह्या च भैरव्या शक्तिरूपया।

सर्वं त्रैलोक्यमोहिन्या गौर्या देवासुरे रणे॥ ३२॥

वीजसम्पुटितं नाम कर्णिकायां दलेषु च।

पूजाक्रमेण चाङ्गानि रक्षायन्त्र(२) मूलं शुभे॥ ३३॥

मृत्युञ्जयं प्रवक्ष्यामि नामसंस्कारमध्यग।

कलाभिर्वेष्टितं पश्चात् सकारेण निबोधितं॥ ३४॥

जकारं विन्दुसंयुक्तं ओङ्कारेण समन्वितं।

धकारोदरमध्यस्थं वकारेण निबोधितं(३)॥ ३५॥

---

१ नामपत्रे इति क०, ख० च। थकारोदरमध्यस्थं थकारेणेति क०,
२ रक्षामन्त्रमिति ख०, ग०, घ०, ङ० च। ग० च०। धकारोदरमध्यस्थं इका-
३ धकारोदरमध्यस्थं धकारेणेति ख०। रेणेति घ०, ङ० च।

चन्द्रसम्पुटमध्यस्थं सर्व्वदुष्टविमर्द्दकम्(१)।
अथवा कर्णिकायाञ्च लिखेन्नाम च कारणम् ॥ २६ ॥
पूर्व्वे दले तथोङ्कार सद्दचे चोत्तरे लिखेत्।
आग्नेय्यादौ च ह्रङ्कारन्दले षोडशके स्वरान्॥ ३७ ॥
चतुस्त्रिंशद्दले काद्यान् वाह्ये मन्त्रश्च मृत्युजित्।
लिखेद्वै भूर्ज्जपत्रे तु रोचनाकुङ्कुमेन च॥ ३८ ॥
कर्पूरचन्दनाभ्याञ्च श्वेतसूत्रेण वेष्टयेत्।
सिक्थकेन परिच्छाद्य कलशोपरि पूजयेत् ॥ ३९ ॥
यन्त्रस्य(२) धारणाद्रोगाः शाम्यन्ति रिपवो मृतिः।
विद्यान्तु भेलखीं वक्ष्ये विप्रयोगमृतेर्हरीं (३) ॥४०॥
ओं वातले वितले विडालमुखि इन्द्रपुत्रि उद्भवो वायुदेवे न खीखि आजौ हाजा मयि वाह इत्यादि दुःखनित्यकण्ठोश्वेसुं हृतोम्यया अह मां यस्मह उपाडि ओं भेलखि ओं स्वाहा।
नवदुर्गासप्तजप्तास्तु खङ्गश्चो सुखस्थितात्।
ओं चण्डि ओं हूं फट् स्वाहा।
गृहीत्वा सप्तजप्तं तु खङ्गयुद्धेऽपराजितः ॥ ४१ ॥

इत्याग्नेये महापुराणे युद्धजयार्णवे नानाबलानि नाम त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥

---

१ सर्व्वदुष्टविमर्द्दकमिति ख०।
२ मन्त्रस्येति क०, ख०, ग०, घ० च।
३ रिपुरोगमृतेर्हरीमिति ग०,घ०, ङ०, ज०, झ०, ञ० च।

## अथ चतुस्त्रिंशदधिकशततमोऽध्यायः ।



### त्रैलोक्यविजयविद्या ।

ईश्वर उवाच । त्रैलोक्यविजयां वक्ष्ये सर्व्वयन्त्रविमर्द्दिनीं(१) ।

ओं हूं क्षूं ह्रूं ओं नमो भगवति दंष्ट्रिणि भीमवक्त्रे महोग्ररूपे हिलि हिलि रक्तनेत्रे किलि किलि महानिस्वने कुलु ओं विद्युज्जिह्वे कुलु ओं निर्म्मांसे कट कट गोनसाभरणे चिलि चिलि शवमालाधारिणि द्रावय ओं महारौद्रि सार्द्रचर्म्मकृताच्छदे(२) विजृम्भ ओं नृत्य असिलताधारिणि भृकुटीकृतापाङ्गे विषमनेत्रकृतानने वसामेदोविलिप्तगात्रे कह २ ओं हस २ क्रुद्ध २ ओं नीलजीमूतवर्णे अभ्रमालाकृताभरणे विस्फुर ओं घण्टारवाकीर्णदेहे ओं सिंहसिंहे अरुणवर्णे ओं ह्रां ह्रीं ह्रूं रौद्ररूपे हूं ह्रीं क्लीं ओं ह्रीं हूं ओं आकर्ष ओं धून २ ओं हे हः खः वज्रिणि हूं क्षूं क्षां क्रोधरूपिणि प्रज्वल २ ओं भीमभीषणे भिन्द ओं महाकाये छिन्द ओं करालिनि किटि २ महाभूतमातः सर्व्वदुष्टनिवारिणि जये ओं विजये ओं त्रैलोक्यविजये हूं फट् स्वाहा ।

---

१ सर्वमन्त्रविमर्द्दिनीमिति ख० । २ सार्द्रचर्मकृतम्बरे इति ग० ।

नीलवर्णां प्रेतसंस्थां विंशहस्तां यजेत्स्त्रियः ॥ १ ॥
न्यासं कृत्वा तु पश्चाद्वै रक्तपुष्पाणि होमयेत् ।
सङ्ग्रामे सैन्यभङ्गः स्यात् त्रैलोक्यविजयापठात् ॥ २ ॥

ओं बहुरूपाय स्तम्भय स्तम्भय ओं मोहय ओं सर्व्वशत्रून् द्रावय ओं ब्रह्माणमाकर्षय विष्णुमाकर्षय ओं माहेश्वरमाकर्षय ओं इन्द्रं टालय ओं पर्वतान् चालय ओं सप्तसागरान् शोषय ओं छिन्द छिन्द बहुरूपाय नमः।

भुजङ्गनामसम्मूर्त्तिसंस्थं विद्यादरिन्ततः ।

इत्याग्नेये महापुराणे युद्धजयार्णवे त्रैलोक्यविजयविद्या नाम चतुस्त्रिंशदधिकशततमोऽध्यायः ॥

---

## अथ पञ्चत्रिंशदधिकशततमोऽध्यायः ।

सङ्ग्रामविजयविद्या ।

ईश्वर उवाच । सङ्ग्रामविजयां विद्यां पदमालां वदाम्यहं । ओं ह्रीं चामुण्डे श्मशानवासिनि खट्वाङ्गकपालहस्ते[1]

---

[1] खड्गकपालहस्ते इति ख० ।

महाप्रेतसमारूढे महाविमानसमाकुले कालरात्रि महागणपरिवृते महामुखे बहुभुजे घण्टाडमरुकिङ्किणीअट्टाट्टहासे किलि किलि ओं हूं फट् दंष्ट्राघोरान्धकारिणि नादशब्दबहुले गजचर्मप्रावृतशरीरे मांसदिग्धे लेलिहानोग्रजिह्वे महाराक्षसि रौद्रदंष्ट्राकराले भीमाट्टाट्टहासे स्फुरद्विद्युत्प्रभे चल चल ओं चकोरनेत्रे चिलि चिलि ओं ललज्जिह्वे ओं भीं भ्रुकुटीमुखि हुङ्कारभयत्रासनिकपालमालावेष्टितजटामुकुटशशाङ्कधारिणि अट्टाट्टहासे किलि किलि ओं ह्रूं दंष्ट्राघोरान्धकारिणि सर्वविघ्नविनाशिनि इदं कर्म साधय२ ओं शीघ्रं कुरु२ ओं फट् ओं अङ्कुशेन शमय प्रवेशय ओं रङ्ग रङ्ग कम्पय२ ओं चालय ओं रुधिरमांसमद्यप्रिये हन२ ओं कुट्ट२ ओं छिन्द ओं मारय ओं अनुक्रमय ओं वज्रशरीरम्पातय(१) ओं त्रैलोक्यगतन्दुष्टमदुष्टं वा गृहीतमगृहीतं वा आवेशय ओं नृत्य ओं वन्द ओं कोटराक्षि ऊर्द्ध्वकेशि उलूकवदने करङ्किणि ओं करङ्कमालाधारिणि दह ओं पच२ ओं गृह्ण ओं मण्डलमध्ये प्रवेशय ओ किं विलम्बसि ब्रह्मसत्येन विष्णुसत्येन रुद्रसत्येन ऋषिसत्येन आवेशय ओं किलि किलि ओं खिलि खिलि विलि विलि ओं विकृतरूपधारिणि कृष्णभुजङ्गवेष्टितशरीरे सर्वग्रहावेशनि प्रलम्बोष्ठिनि भ्रूभङ्गलग्ननासिके विकटमुखि कपिलजटे ब्राह्मि भञ्ज(२) ओं ज्वालामुखि(३)

---

१ वज्रशरीरं पातयेति क०। वज्रशरीर पातयेति ख०, ग०-घ।

२ कपिलजटाधारिणि अत्र भक्षेति ङ०।

३ ज्वालामुखि इति क०, ख०, ग०, ग०-घ।

स्तन ओं पातय ओं रक्षाचि घूर्णय भूमिं पातय ओं गिरो गृह्ण चक्षुर्मीलय ओं हस्तपादौ गृह्ण मुद्रां स्फोटय ओं फट् ओं विदारय ओं त्रिशूलेन च्छेदय ओं वज्रेण हन ओं दण्डेन ताडय२ ओं चक्रेण च्छेदय२ ओं शक्त्या भेदय दंष्ट्रया कीलय ओं कर्णिकया पाटय ओं अङ्कुशेन गृह्ण ओं शिरोक्षिज्वरमैकाहिकं द्व्याहिकं त्र्याहिकञ्चातुर्थिकं डाकिनीस्कन्दग्रहान् मुञ्च मुञ्च ओं पच ओं उत्सादय ओं भूमिं पातय ओं गृह्ण ओं ब्रह्माणि एहि ओं माहेश्वरि एहि ओं कौमारि एहि ओं वैष्णवि एहि ओं वाराहि एहि ओं ऐन्द्रि एहि ओं चामुण्डे एहि ओं रेवति एहि ओं आकाशरेवति एहि ओं हिमवच्चारिणि एहि ओं रुरुमर्द्दिनि असुरक्षयङ्करि आकाशगामिनि पाशेन बन्ध बन्ध अङ्कुशेन कट२ समयं तिष्ठ ओं मण्डलं प्रवेशय ओं गृह्ण मुखं बन्ध ओं चक्षुर्बन्ध हस्तपादौ च बन्ध दुष्टग्रहान् सर्व्वान् बन्ध ओं दिशो बन्ध ओं विदिशो बन्ध अधस्ताद्बन्ध ओं सर्व्वं बन्ध ओं भस्मना पानीयेन वा मृत्तिकया सर्षपैर्वा सर्वानावेशय ओं पातय ओं चामुण्डे किलि किलि ओं विच्चे हुं फट् स्वाहा।

पदमाला जयाख्येयं सर्व्वकर्म्मप्रसाधिका ॥ १ ॥
सर्व्वदा होमजप्याद्यैः पाठाद्यैश्च रणे जयः।
अष्टाविंशभुजा ध्येया असिखेटकवत्करौ(१) ॥ २ ॥
गदादण्डयुतो(२) चान्यौ शरचापधरौ परौ।

---

१ असिखेटकसंयुतकराविति ख०। असिखेटकधृक्करौ इति ग०।　　२ गदादण्डयुतौ इति ख०।

मुष्टिमुद्गरयुक्तौ च(१) शङ्खखड्गयुतौ परौ ॥ ३ ॥
ध्वजवज्रधरौ चान्यौ सचक्रपरशू परौ।
डमरुदर्पणाढ्यौ च शक्तिकुन्तधरौ परौ ॥ ४ ॥
हलेन मुषलेनाढ्यौ पाशतोमरसंयुतौ।
ढक्कापणवसंयुक्तौ अभयमुष्टिकान्वितौ(२) ॥ ५ ॥
तर्जयन्तौ च महिषं घातनौ होमतोऽरिजित्।
त्रिमध्वाक्ततिलैर्होमो न देया यस्य कस्य चित् ॥ ६ ॥

इत्याग्नेये महापुराणे युद्धजयार्णवे सङ्ग्रामविजयविद्या नाम पञ्चत्रिंशदधिकशततमोऽध्यायः ॥

---

## अथ षट्त्रिंशदधिकशततमोऽध्यायः।



नक्षत्रचक्रं।

ईश्वर उवाच। अथ चक्रं प्रवक्ष्यामि यात्रादौ च फलप्रदम्।
अश्विन्यादौ लिखेच्चक्रं त्रिनाडीपरिभूषितं ॥ १ ॥
अश्विन्यार्द्रादिभिः पूर्वा ततश्चोत्तरफल्गुनी।
हस्ता ज्येष्ठा तथा मूलं वारुणं चाप्यजैकपात् ॥ २ ॥

---

१ मुष्टिमुद्गरसंयुक्तौ इति ज०। अहि-　ख०, ग० च।　अभयमुष्टिकान्वि
मुद्गरयुक्तौ चेति ग०।　तौ इति ज०।

२ अभयमुष्टिकान्वितौ इति घ, ख०, ङ०,

नाडीयं प्रथमा चान्या याम्यं मृगशिरस्तथा ।
पुष्यं भाग्यन्तथा चित्रा मैत्रचाप्यं च वासवं ॥ ३ ॥
अहिर्बुध्नं तृतीयाथ कृत्तिका रोहिणी ह्यहिः ।
चित्रा स्वाती विशाखा च श्रवणा रेवती च भं ॥ ४ ॥
नाड़ीत्रितयसंजुष्टयद्दाज् ज्ञेयं शुभाशुभं ।
चक्रम्फणीश्वरन्तत्तु(१) त्रिनाड़ीपरिभूषितं ॥ ५ ॥
रविभौमार्कराहुश्चमशुभं स्याच्छुभं परं ।
देशग्रामयुता भ्रातृभार्य्याद्या एकशः शुभाः ॥ ६ ॥

अ,भ,कृ,रो,मृ,आ,पु,पु,अ,म,पू,उ,ह,चि,स्वा,वि,अ,ज्ये,मू,पू,उ,श्र,ध,श,पू,उ,रे । अत्र सप्तविंशतिनक्षत्राणि ज्ञेयानि ।

इत्याग्नेये महापुराणे युद्धजयार्णवे नक्षचक्रं नाम षट्‌विंशदधिकशततमोऽध्यायः ॥

---

## अथ सप्तत्रिंशदधिकशततमोऽध्यायः ।

—०ः००ः—

### महामारीविद्या ।

ईश्वर उवाच । महामारीं प्रवक्ष्यामि विद्यां शत्रुविमर्दिनीं ।

---

१ चक्रम्फणीश्वरमाहत् इति ख०, ग०, घ०, ङ०, ञ० च ।

ओं ह्रीं महामारि रक्ताक्षि कृष्णवर्णे यमस्याज्ञाकारिणि सर्व्वभूतसंहारकारिणि अमुकं हन२ ओं दह२ पच२ ओं छिन्द२ ओं मारय२ ओं उत्सादय२ ओं सर्व्वसत्त्ववशङ्करि सर्व्वकामिके हुं फट् स्वाहेति।

ओं मारि हृदयायनमः। ओं महामारि शिरसे स्वाहा। ओं कालरात्रि शिखायै वौषट्। ओं कृष्णवर्णे खः कवचाय हुं। ओं तारकाक्षि विद्युज्जिह्वे सर्व्वसत्त्वभयङ्करि रक्ष२ सर्व्वकार्य्येषु ह्रं त्रिनेत्राय वषट्। ओं महामारि सर्व्वभूतदमनि महाकालि अस्त्राय हुं फट्।

एष न्यासो महादेवि कर्त्तव्यः साधकेन तु ॥ १ ॥
शवादिवस्त्रमादाय चतुरस्रन्त्रिहस्तकं।
कृष्णवर्णां त्रिवक्त्रञ्च चतुर्बाहुं समालिखेत् ॥ २ ॥
पटे विचित्रवर्णैश्च धनुः शूलञ्च कर्त्तृकां(¹)।
खट्वाङ्गन्धारयन्तीं च कृष्णाभं पूर्व्वमाननं ॥ ३ ॥
तस्य दृष्टिनिपातेन भक्षयेदग्रतो नरं।
द्वितीयं याम्यभागे तु रक्तजिह्वं भयानकं ॥ ४ ॥
लेलिहानं करालं च दंष्ट्रोत्कटभयानकं।
तस्य दृष्टिनिपातेन भक्ष्यमाणं हयादिकं ॥ ५ ॥
तृतीयं च मुखं देव्याः श्वेतवर्णं गजादिनुत्।
गन्धपुष्पादिभक्ष्याज्यैः पश्चिमाभिमुखं यजेत् ॥ ६ ॥

---

¹ १७ चषकशूलकर्त्तृकामिति क०, ख०, ग०, घ०, ङ०, छ० च।

मन्त्रधृतेरद्विरोगशिरोरोगादि नश्यति।
वश्याः स्वयंवरद्वाय नाशमायान्ति शत्रवः ॥ ७ ॥
समिधो निम्बवृक्षस्य ह्यजारक्तविमिश्रिताः।
मारयेत् क्रोधसंयुक्तो होमादेव न संशयः ॥ ८ ॥
परसैन्यमुखो भूत्वा सप्ताहं जुहुयाद्यदि।
व्याधिभिर्गृह्यते सैन्यभङ्गो भवति वैरिणः ॥ ९ ॥
समिधोऽष्टसहस्रन्तु यस्य नाम्ना तु होमयेत्।
अचिरात् म्रियते सोऽपि ब्रह्मणा यदि रक्षितः ॥ १० ॥
उन्मत्तसमिधो रक्तविषयुक्तसहस्रकं।
दिनत्रयं ससैन्यश्च नाशमायाति वै रिपुः ॥ ११ ॥
राजिकालवणैर्होमाद्भङ्गोऽरेः स्याद् दिनत्रयात्।
खररक्तसमायुक्तहोमादुच्चाटयेद्रिपुं ॥ १२ ॥
काकरक्तसमायोगाद्धोमादुत्सादनं हरेः।
वधाय कुरुते सर्व्वं यत् किञ्चिन्मनसेप्सितं ॥ १३ ॥
अथ यद्ध प्रासमये गजारूढन्तु साधकः।
कुमारीद्वयसंयुक्तो मन्त्रसन्नद्धविग्रहः ॥ १४ ॥
दूरगड्डादिवाद्यानि विद्यया ह्यभिमन्त्रयेत्।
महामायापटं दृष्ट्वा उच्छ्रेतव्यं रणाजिरे ॥ १५ ॥
परसैन्यमुखो भूत्वा दर्शयेत महापटं।
कुमारीर्भोजयेत्तत्र पयापिण्डीश्च भ्रामयेत् ॥ १६ ॥
साधकश्चिन्तयेत्सैन्यमपाषाणमिव निश्चलं।
निश्चेष्टं भिन्नमन्त्रं मुह्यमानञ्च भावयेत् ॥ १७ ॥
एष रक्षा मया प्रोक्ता न देयो यस्य कस्य चित्।

त्रैलोक्यविजया माया दुर्गैवं भैरवी तथा ॥ १८ ॥
कुब्जिका भैरवो रुद्रो नारसिंहपटादिना।

इत्याग्नेये महापुराणे युद्धजयार्णवे महामारी नाम
सप्तत्रिंशदधिकशततमोऽध्यायः ॥

## अथाष्टत्रिंशदधिकशततमोऽध्यायः।



### षट्कर्माणि।

ईश्वर उवाच। षट्कर्माणि प्रवक्ष्यामि सर्व्वमन्त्रेषु तच्छृणु।
आदौ साध्यं लिखेत् पूर्वं चान्ते मन्त्रसमन्वितं ॥ १ ॥
पल्लवः स तु विज्ञेयो महोच्चाटकरः परः।
आदौ मन्त्रः ततः साध्यो मध्ये साध्यः पुनर्मनुः ॥ २ ॥
योगाख्यः सम्प्रदायोऽयद्धुलोत्सादेषु योजयेत्।
आदौ मन्त्रपदन्तस्यान्मध्ये साध्यं नियोजयेत् ॥ ३ ॥
पुनश्चान्ते निखेन्मन्त्रं साध्यं मन्त्रपदं पुनः।

रोधकः सम्प्रदायस्तु स्तम्भनादिषु योजयेत् ॥ ४ ॥
अधोर्द्ध्वं याम्यवामे तु(१) मध्ये साध्यन्तु योजयेत् ।
सम्पुटः स तु विज्ञेयो वश्याकर्षेषु योजयेत् ॥ ५ ॥
मन्त्राक्षरं यदा साध्यं ग्रथितन्त्वक्षराक्षरं ।
ग्रथनः सम्प्रदायः स्यादाकृष्टिवशकारकः ॥ ६ ॥
मन्त्राक्षरद्वयं लिख्य एकं साध्याक्षरं पुनः ।
विदर्भः स तु विज्ञेयो वश्याकर्षेषु योजयेत् ॥ ७ ॥
आकर्षणादि यत् कर्म्म वसन्ते चैव कारयेत् ।
तापज्वरे तथा वश्ये स्वाहा चाकर्षणे शुभं ॥ ८ ॥
नमस्कारपदञ्चैव शान्तिवृद्धौ प्रयोजयेत् ।
पौष्टिकेषु वषट्कारमाकर्षे वशकर्म्मणि ॥ ९ ॥
विद्वेषोच्चाटने मृत्यौ फट् स्यात् खण्डीकृतौ शुभे ।
लाभादौ मन्त्रदीक्षादौ वषट्कारस्तु सिद्धिदः ॥ १० ॥
यमोऽसि यमराजोऽसि कालरूपोऽसि धर्म्मराट् ।
मयादत्तमिमं शत्रुमचिरेण निपातय ॥ ११ ॥
निपातयामि यत्नेन निर्द्वन्द्वो भव साधक ।
संहृष्टमनसा(२) ब्रूयाद्दैयिकोऽरिप्रसूदनः ॥ १२ ॥
पञ्चे ग्रक्षे यमं प्रार्थ्य होमादेतत् प्रसिद्ध्यति ।
आध्यानभैरवं ध्यात्वा ततो मध्ये कुलेश्वरीं ॥ १३ ॥
रात्रौ वार्त्तां विजानाति आत्मनश्च परस्य च ।

---

१ अध ऊर्द्ध्वं याम्यवामे इति ख० । २ वैरव्यासमर्पयेति ङ० ।

दुर्गे दुर्गे रक्षणीति दुर्गां प्राचार्योरिहा भवेत् ॥ १४ ॥
जप्त्वा इमघमलवरयुभैरवीं घातयेदरिं ।

इत्याग्नेये महापुराणे युद्धजयार्णवे षट्कर्माणि नामाष्ट-
त्रिंशदधिकशततमोऽध्यायः ॥

---

## अथोनचत्वारिंशदधिकशततमोऽध्यायः ।

—०—

### षष्टिसंवत्सराः ।

ईश्वर उवाच । षष्ट्यब्दानां प्रवक्ष्यामि शुभाशुभमतः शृणु ।
प्रभवे यज्ञकर्म्माणि विभवे सुखिनो जनाः ॥ १ ॥
शुक्ले च सर्वशस्यानि प्रमोदेन प्रमोदिताः ।
प्रजापतौ प्रवृद्धिः स्यादङ्गिरा भोगवर्द्धनः ॥ २ ॥
श्रीमुखे वर्द्धते लोको भावे भावः प्रवर्द्धते ।
पूरणो पूरते शक्रो धाता सर्व्वौषधीकरः ॥ ३ ॥
ईश्वरः चेमु आरोग्यबहुधान्यसुभिक्षदः ।
प्रमाथी मध्यवर्षन्तु विक्रमे शस्यसम्पदः ॥ ४ ॥
वृषो हृष्यति सर्वांश्च चित्रभानुश्च चित्रतां ।

सर्भानुः क्षेममारोग्यं तारणे जलदाः शुभाः ॥ ५ ॥
पार्थिवे शस्यसम्पत्तिरतिवृष्टिस्तथा जयः।
सर्वजित्युत्तमा वृष्टिः सर्वधारी सुभिक्षदः ॥ ६ ॥
विरोधी जलदान् हन्ति विकृतश्च भयङ्करः।
खरे भवेत् पुमान् वीरो नन्दने नन्दते प्रजा ॥ ७ ॥
विजयः शत्रुहन्ता च शत्रुरोगादि मर्दयेत्।
ज्वरार्त्तो मन्मथे लोको दुष्करे दुष्करा प्रजाः ॥ ८ ॥
दुर्मुखे दुर्मुखो लोको(१) हेमलम्बे न सम्पदः।
संवत्सरो महादेवि विलम्बस्तु सुभिक्षदः ॥ ९ ॥
विकारी शत्रुकोपाय विजये सर्वदा क्वचित्।
प्लवे प्लवन्ति तोयानि शोभने शुभकृत्प्रजा ॥ १० ॥
राक्षसे निष्ठुरो लोको विविधस्यान्यमानने।
सद्दृष्टिः पिङ्गले क्वापि काले ह्यतो धनक्षयः॥ ११ ॥
सिद्धार्थे सिद्ध्यते सर्वं रौद्रे रौद्रं प्रवर्त्तते।
दुर्मती मध्यमा वृष्टिर्दुन्दुभिः क्षेमधान्यकृत् ॥ १२ ॥
स्रवन्ते रुधिरोद्गारी रक्ताक्षः क्रोधनो जयः।
क्षये क्षीणधनोलोकः(२) षष्टिसंवत्सराणि ॥ ॥ १३ ॥

इत्याग्नेये महापुराणे युद्धजयार्णवे षष्टिसंवत्सराणि नाम
ऊनचत्वारिंशदधिकशततमोऽध्यायः ॥

---

१ दुर्मुखे मुखरो लोक इति ख०, ग०, ङ०, ज० च।

२ क्षीणधनो लोक इति क०। क्षीणजनो लोक इति ज०

# अथ चत्वारिंशदधिकशततमोऽध्यायः।

## वश्यादियोगाः।

ईश्वर उवाच। वश्यादियोगान् वक्ष्यामि लिखेद् द्वाष्टपदे त्विमान्।
भृङ्गराजः सहदेवी[1] मयूरस्य शिखा तथा ॥ १ ॥
पुत्रञ्जीवकृतञ्जली ह्यधःपुष्पा रुदन्तिका।
कुमारी रुद्रजटा[2] स्याद्विष्णुक्रान्ता शितोऽर्ककः ॥ २ ॥
लज्जालुका मोहलता कृष्णधुस्तूरसञ्ज्ञिता[3]।
गोरक्षः कर्कटी चैव मेषशृङ्गी स्नुही तथा ॥ ३ ॥
ऋत्विजो१६ वह्नयो३ नागाः८ पक्षौ२ मुनि३मनु१४ शिवः ११।
वसवो८ दिक्१०रसा६ वेदा४ग्रह९र्तु६ रवि१२ चन्द्रमाः१ ॥ ४ ॥
तिथयश्च१५ क्रमाज्ज्ञेया ओषधीनां प्रदक्षिणं।
प्रथमेन चतुष्केण धूपयोद्वर्त्तनं परं ॥ ५ ॥
तृतीयेनाञ्जनं कुर्य्यात् स्नानं कुर्य्याच्चतुष्कतः।
भृङ्गराजानुलोमाच्च चतुर्द्धा लेपनं स्मृतं ॥ ६ ॥
मुनयो दक्षिणे पार्श्वे युगाद्याश्चोत्तराः स्मृताः।
भुजगाः पादसंस्थाश्च ईश्वरा मूर्ध्नि संस्थिताः ॥ ७ ॥
मध्येन सार्कशशिभिर्धूपः स्यात् सर्वकार्य्यके।
एतैर्विलिप्तदेहस्तु त्रिदशैरपि पूज्यते[4] ॥ ८ ॥

---

१ सहदेवा इति ख॰, घ, ङ॰, झ॰ च। २ कृष्णधुस्तूरसञ्ज्ञिकेति घ०।
३ कुमारी वज्रजटा इति ख॰। ४ त्रिदशैरपि प्रकाशे इति ख॰, ङ॰ च।

धूपस्तु षोडशाद्यस्तु गृहाद्युद्वर्त्तने स्मृतः ।
युगाद्याश्चाञ्जने प्रोक्ता वाणाद्याः स्नानकर्म्मणि ॥ ९ ॥
रुद्राद्या भक्षणे प्रोक्ताः पक्षाद्याः पानके स्मृताः ।
ऋत्विग्वेदर्त्तुनयनैस्तिलकं लोकमोहनं ॥ १० ॥
सूर्य्यविंशपक्षैश्च शैलैः स्त्री लेपतो वशा ।
चन्द्रेन्द्रफणिरुद्रैश्च योनिलेपाद्वशाः स्त्रियः ॥ ११ ॥
तिथिदिग्युगवाणैश्च गुटिका तु वशङ्करी ।
भक्ष्ये भोज्ये तथा पाने दातव्या गुटिका वशे ॥ १२ ॥
ऋत्विग्पक्षाब्धिशैलैश्च गर्भस्तम्भो मुखे धृता ।
शैलेन्द्रवेदरन्ध्रैश्च पद्मलेपाज्जले वसेत् ॥ १३ ॥
वाणाब्धिमनुरुद्रैश्च गुटिका भूतपादिशुत् ।
तिथ्यङ्गाद्रिवाणैर्लेपात् स्त्री दुर्भगा शुभा ॥ १४ ॥
त्रिदशाब्धिदिशानेत्रैर्लेपात् क्रीडेव पन्नगैः ।
त्रिदशाष्टभुजङ्गैर्लेपात् स्त्री स्रवते सुखं ॥ १५ ॥
सप्तदिङ्मुनिरन्ध्रैश्च धूतजिह्वस्य लेपतः ।
त्रिदशाब्धिमुनिभिर्ध्वजलेपात्(१) रतो सुतः ॥ १६ ॥
पक्षाब्धिसर्प्पविंशैर्गुटिका स्याद् वशङ्करी ।
ऋत्विक्पदस्थितौषध्याः प्रभावः प्रतिपादितः ॥ १७ ॥

इत्याग्नेये महापुराणे युद्धजयार्णवे षोड़शपदका नाम
चत्वारिंशदधिकशततमोऽध्यायः ॥

---

१ त्रिदश चाब्धिमनुभिर्ध्वजलेपादिति ग०, घ०, ङ०, ञ० च ।

# अथैकचत्वारिंशदधिकशततमोऽध्यायः ।

—••—••—

## षट्त्रिंशत्पदकज्ञानं ।

ईश्वर उवाच । षट्त्रिंशत्पदसंस्थानामोषधीनां वदे फलं ।
अमरीकरणं नृणां ब्रह्मरुद्रेन्द्रसेवितं ॥ १ ॥
हरीतक्यक्षधात्र्यश्च मरीचम्पिप्पलीशिफा ।
वह्निः शुण्ठी पिप्पली च गुडूचीवचनिम्बकाः(१) ॥ २ ॥
वासकः शतमूली च सैन्धवं सिन्धुवारकं ।
कण्टकारी गोक्षुरका विल्वम्पौनर्नवं बला ॥ ३ ॥
एरण्डमुण्डी रुचकी भृङ्गः क्षारोऽथ पर्पटः ।
धन्याकी जीरकश्चैव शतपुष्पी यवानिका ॥ ४ ॥
विडङ्गः खदिरश्चैव कृतमालो हरिद्रया ।
वचा सिद्धार्थं एतानि षट्त्रिंशत्पदगानि हि ॥ ५ ॥
कुमारिकादिसम्प्राप्तानि ह्यौषधानि महान्ति हि ।
सर्वरोगहराणि स्युरमरीकरणानि च ॥ ६ ॥
वलीपलितभेत्तृणि(२) सर्वकोष्ठगतानि तु ।
एषां चूर्णञ्च वटिका रसेन परिभाविता ॥ ७ ॥
अवलेहः कषायो वा मोदको गुडखण्डकः ।

---

१ धर्वनिम्बका इति ख०, ग० च । २ वलीपलितभेदीनीति_ङ० ।

मधुतो घृततो वापि घृतन्तैलमथापि वा ॥ ८ ॥
सर्व्वात्मनोपयुक्तं हि मृतसञ्जीवनम्भवेत् ।
कर्षार्द्धं कर्षमेकं वा पलार्द्धं पलमेककं ॥ ९ ॥
यथेष्टाचारनिरतो([1]) जीवेद्वर्षशतत्रयं ।
मृतसंञ्जीवनीकल्पे योगो नास्मात् परोऽस्ति हि ॥ १० ॥
प्रथमात्त्र्यकाद्योगात् सर्वरोगैः प्रमुच्यते ।
द्वितीयाच्च तृतीयाच्च चतुर्थान्मुच्यते रुजः ॥ ११ ॥
एवं षट्काच्च प्रथमाद् द्वितीयाच्च तृतीयतः ।
चतुर्थात्पञ्चमात् षष्ठात्तथा नवचतुष्कतः ॥ १२ ॥
एकद्वित्रिचतुःपञ्चषट्सप्ताष्टमतोऽनिलात् ।
अग्निभास्करषड्विंशसप्तविंशैश्च पित्ततः ॥ १३ ॥
बाणर्तुशैलवसुभिस्तिथिभिर्मुच्यते कफात् ।
वेदाग्निभिर्बाणगुणैः षड्गुणैः स्याद्द्वये धृते ॥ १४ ॥
पञ्चादिपक्षणात्सैव सर्वैरेव विमुच्यते ।
एकद्वित्रिरसैः शैलैर्वसुपक्षशिवैः क्रमात् ॥ १५ ॥
द्वात्रिंशत्तिथिसूर्य्यैश्च नात्र कार्य्या विचारणा ।
षट्त्रिंशत्पदकज्ञानं न देयं यस्य कस्य चित् ॥ १६ ॥

इत्याग्नेये महापुराणे युद्धजयार्णवे षट्त्रिंशत्पदकज्ञानं नाम एकचत्वारिंशदधिकशततमोऽध्यायः ॥

---

[1] यथेष्टाचाररनिरत इति ख० ।

## अथ द्विचत्वारिंशदधिकशततमोऽध्यायः ।

मन्त्रौषधादिः ।

ईश्वर उवाच । मन्त्रौषधानि चक्राणि(१) वक्ष्ये सर्व्वप्रदानि च ।
चौरनाम्नो वर्णगुणो द्विघ्नो मात्राश्चतुर्गुणाः ॥ १ ॥
नाम्ना हृते भवेच्छेषमचौरोऽथ जातकं वदे ।
प्रश्ने ये विषमा वर्णास्ते गर्भे पुत्रजन्मदाः ॥ २ ॥
नामवर्णैः समैः काणो वामेऽक्षि विषमैः पुनः ।
दक्षिणाक्षि भवेत् काणं स्त्रीपुंसामाचरस्य च ॥ ३ ॥
मात्रावर्णाश्चतुर्निघ्ना वर्णपिण्डे गुणे कृते ।
समे स्त्री विषमे ना स्यादिशेषे च(२) मृतिः स्त्रियाः ॥ ४ ॥
प्रथमं शून्यशून्येऽथ प्रथमं म्रियते पुमान् ।
प्रश्नं सूक्ष्माक्षरैर्गृह्य द्रव्यैर्भागेऽखिले मतम् ॥ ५ ॥
शनिचक्रं प्रवक्ष्यामि तस्य दृष्टिं परित्यजेत् ।
राशिस्थः सप्तमे दृष्टिश्चतुर्दशशतेर्द्धिका ॥ ६ ॥
एकद्वादशपञ्चमः पाददृष्टिश्च तं त्यजेत् ।
दिनाधिपः प्रहरभाक् शेषा यामार्द्धभागिनः(३) ॥ ७ ॥

---

१ मन्त्रौषधादिचक्राणीति घ०, ङ० च ।
२ विशेषेणेति ङ० ।
३ यामार्द्धभोगिन इति क०, ग०, घ०, ङ० च ।

शनिभागन्त्यजेद्युद्धे दिनराहुं वदामि ते ।
रवौ पूर्वेऽनिले मन्दे गुरौ याम्येऽनले भृगौ ॥ ८ ॥
अग्नौ कुजे भवेत् सौम्ये स्थिते राहुर्बुधे सदा ।
फणिराहुस्तु प्रहरमैशे वह्नौ च राक्षसे ॥ ९ ॥
वायौ संवेष्टयित्वा च शत्रुं हन्तीशसम्मुखः ।
तिथिराहुं प्रवक्ष्यामि पूर्णिमाग्नेयगोचरे ॥ १० ॥
अमावास्या वायवे च राहुः सम्मुखशत्रुहा ।
काद्या आन्ताः सम्मुखे स्युः चाद्या दान्ताश्च दक्षिणे ॥११॥
धान्ते त्यजेत् कुजगुणान् धाद्या मान्ताश्च पूर्वतः ।
याद्या हान्ता उत्तरे स्युस्तिथिदृष्टिं विवर्जयेत् ॥ १२ ॥
पूर्वाश्च दक्षिणास्तिस्रो रेखा वै मूलभेदके ।
सूर्यराश्यादि संलिख्य दृष्टौ हानिर्जयोऽन्यथा ॥ १३ ॥
विष्टिराहुं प्रवक्ष्यामि अष्टौ रेखास्तु पातयेत् ।
शिवाद्यमं यमाद्वायुं वायोरिन्द्रं ततोऽम्बुपं ॥ १४ ॥
नैर्ऋताच्च नयेच्चन्द्रं चन्द्रादग्निं ततो जले ।
जलादीशे चरेद्राहुर्विष्टया सह महाबलः ॥ १५ ॥
ऐशान्यां च तृतीयादौ सप्तम्यादौ च याम्यके ।
एवं हस्ते स्थिते पक्षे वायौ राहुश्च हन्त्यरीन् ॥ १६ ॥
इन्द्रादीन् भैरवादींश्च ब्रह्माण्यादीन् ग्रहादिकान् ।
चराष्टकञ्च पूर्वादौ याम्यादौ वातयोगिनीं ॥ १७ ॥
यान्दिशं वहते वायुस्तस्यां घातयेदरीन् ।
ह्रीकारचममाख्ये कण्ठे बाह्यादिधारिता ॥ १८ ॥
पूर्वाद्रूपा काञ्चमम्भ धारयेत् गरपुष्पिका ।

तथा पराजिता पाठा ताभ्यां खड्गं निवारयेत्॥ १८॥

ओं नमो भगवति वज्रशृङ्खले हन२ ओं भक्ष२ ओं खाद ओं अरे रक्तं पिव कपालेन रक्ताक्षि रक्तपटे भस्माङ्गि भस्मलिप्तशरीरे वज्रायुधे वज्रप्राकारनिचिते पूर्वां दिशं बन्ध२ ओं दक्षिणां दिशम्बन्ध२ ओं पश्चिमां दिशम्बन्ध२ उत्तरां दिशम्बन्ध२ नागान् बन्ध२ नागपत्नीर्बन्ध२ ओं असुरान् बन्ध२ ओं यक्षराक्षसपिशाचान् बन्ध२ ओं प्रेतभूतगन्धर्वादयो ये केचिदुपद्रवास्तेभ्यो रक्ष२ ओं ऊर्द्ध्वं रक्ष२ अधो रक्ष२ ओं क्षुरिक बन्ध२ ओं ज्वल महाबले घटि२ ओं मोटि२ सटावलिवज्राग्निवज्रप्राकारे हुं फट् ह्रीं ह्रूं श्रीं फट् ह्रौं हः फूं फें फः सर्वग्रहेभ्यः सर्वव्याधिभ्यः सर्वदुष्टोपद्रवेभ्यो ह्रीं अशेषेभ्यो रक्ष२।

ग्रहज्वरादिभूतेषु सर्वकर्मसु योजयेत्।

इत्याग्नेये महापुराणे युद्धजयार्णवे मन्त्रौषधादिर्नाम द्विचत्वारिंशदधिकशततमोऽध्यायः॥

---

## अथ त्रिचत्वारिंशदधिकशततमोऽध्यायः।

—:०:—

### कुब्जिकापूजा।

ईश्वर उवाच। कुब्जिकाक्रमपूजाञ्च(१)वक्ष्ये सर्वार्थसाधनीं।
यया जिताः सुरा दैत्यैः शस्त्राद्यै राज्यसंयुतैः॥ १॥

---

१ कुब्जिकाक्रमपूजार्थेति क॰, ख॰ च।

मायावीजं च गुह्याङ्गे षट्कमस्त्रं करे न्यसेत् ।
क्लां कालीति हृदयं दुष्टचाण्डालिका शिरः ॥ २ ॥
ह्रौं स्फें ह स ख क छ ड औं कारो भैरवः शिखा ।
भेलखी कवचं दूती नेत्रास्त्रा रक्तचण्डिका ॥ ३ ॥
ततो गुह्यकुब्जिकास्त्रं मण्डले स्थानके यजेत् ।
अग्नौ कूर्चशिरो रुद्रे नैर्ऋत्येऽथ शिखानिले ॥ ४ ॥
कवचञ्चाप्यतो नेत्रं मध्येन्दिषु च मण्डले ।

द्वात्रिंशता कर्णिकायां स्त्रौं ह्सक्षमलवरयऊं ह्सक्षमलवरयईं बीजकं ॥ ५ ॥

ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा ।
वाराही चैव माहेन्द्री चामुण्डा चण्डिकेन्द्रकात् ॥ ६ ॥
यजेद्रवलकसहान् शिवेन्द्राग्नियमेऽग्निपे ।
जले तु कुसुममालामद्रिकार्णां च पञ्चक ॥ ७ ॥
जालन्धरं पूर्णगिरिं कामरूपं क्रमाद्यजेत् ।
मरुदीशाग्निनैर्ऋत्ये मध्ये वै वज्रकुब्जिकां ॥ ८ ॥
अनादिविमलः पूज्यः सर्व्वज्ञविमलस्ततः ।
प्रसिद्धविमलश्चाथ संयोगविमलस्ततः ॥ ९ ॥
समयाख्योऽथ विमल एतद्विमलपञ्चकं ।
मरुदीशाग्निनैर्ऋत्ये वह्नौ चोत्तरशृङ्गके ॥ १० ॥
कुलार्थं खिंखिनी पश्चा सोपश्वा सुस्थिरा तथा ।
रत्नसुन्दरी चेशाने शृङ्गे चाष्टादिनायकाः ॥ ११ ॥
मिश्र चोड्डीशषष्ठाख्यो वर्णा चाप्यथपेऽनिले ।
अपेद्गगनरत्नं स्याद्याप्ये कवचरत्नक ॥ १२ ॥

त्रुं मन्त्रैः पञ्चनामाख्यो(१) मकरौशानतङ्गिणः ।
याम्याग्नेये पञ्चरत्नं ज्येष्ठा रौद्री तथाऽन्तिका ॥ १३ ॥
तिस्रो ह्यासां महाहृद्याः पञ्चप्रणवतोऽखिलाः ।
सप्तविंशत्यष्टविंशभेदात् सम्पूजनं द्विधा ॥ १४ ॥
ओं ऐं गूं क्षमगणपतिं प्रणवं वटुकं यजेत् ।
चतुरस्रे मण्डले च दक्षिणे गणपं यजेत् ॥ १५ ॥
वामे च वटुकं कोणे गुरून् षोड़शनायकान् ।
तथय्यादौ षाष्ट दश प्रतिषट्कोणके ततः ॥ १६ ॥
ग्रह्माद्याद्याष्ट परितस्तन्मध्ये च नवात्मकः ।
कुब्जिका कुलटा चैव क्रमपूजा तु सर्वदा ॥ १७ ॥

इत्याग्नेये महापुराणे युद्धजयार्णवे कुब्जिकाक्रमपूजा नाम त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥

## अथ चतुश्चत्वारिंशदधिकशततमोऽध्यायः ।

—:०:—

### कुब्जिकापूजा ।

ईश्वर उवाच । श्रीमतीं कुब्जिकां वक्ष्ये धर्म्मार्थादिजयप्रदां ।
पूजयेन्मूलमन्त्रेण परिवारयुतेन वा ॥ १ ॥
ओं ऐं ह्रीं श्रीं खें ह्रें हसक्षमलवरयभगवति अम्बिके ह्रां ह्रीं क्षीं क्षौं क्षूं क्रीं कुब्जिके ह्रां ओं ङञनणमे अघोरमुखि ग्रां छ्रां

१ ष मन्त्रौ दृष्टनामाख्य इति ख०।

छ्रीं किलि२ घ्रौं विच्चे स्त्रौं श्रीं क्रौं श्रीं फ्रीं ऐं वज्रकुब्जिनि(¹) स्त्रीं त्रैलोक्यकर्षिणि ह्रीं कामाङ्गद्राविणि ह्रीं स्त्रीं महाक्षोभ-कारिणि ऐं ह्रीं घ्रूं ऐं ह्रौं श्रीं फें घ्रौं नमो भगवति घ्रूं कुब्जिके ह्रौं ह्रीं क्रैं ङञणनमे अघोरमुखि छ्रां छां विच्चे श्रीं किलि२ ।

कृत्वा कराङ्गन्यासञ्च सन्ध्यावन्दनमाचरेत् ।
वामा ज्येष्ठा तथा रौद्री सन्ध्यात्रयमनुक्रमात् ॥ २ ॥
कुलवागीशि विद्महे महाकालीति धीमहि ।
तन्नः कौली प्रचोदयात् ।
मन्त्राः पञ्च प्रणवाद्याः पादुकां पूजयामि च ।
मध्ये नाम चतुर्थ्यन्तं हिनवात्मकबीजकाः ॥ ३ ॥
नमोऽन्ता वाऽथ पञ्चात्तु सर्वे ज्ञेया वदामि तान् ।
कौलीशनाथः सुकला जन्मतः कुब्जिका ततः ॥ ४ ॥
श्रीकण्ठनाथः कौलेशो गगनानन्दनाथकः ।
चट्ला देवी मैत्रीशो कराली तूर्णनायकः ॥ ५ ॥
अतलदेवी श्रीचन्द्रा देवोत्पन्नास्ततस्त्विमे ।
भगात्मपुङ्गणदेवमोहनी पादुकां यजेत् ॥ ६ ॥
अतीतभुवनानन्दरत्नाढ्यां पादुकां यजेत् ।
ब्रह्मज्ञानाऽथ कमला परमा विद्यया सह ॥ ७ ॥
विद्यादेवीगुरुत्वहित्विग्रहिं प्रवदामि ते ।
गगनश्चट्ली चात्मा पद्मानन्दो मणिः कला ॥ ८ ॥

---

१ वह्निकुब्जिनि इति ख०, ज० च ।

कमलो माणिक्यकण्ठो गगनः कुमुदस्ततः ।
श्रीपद्मो भैरवानन्दो देव. कमल इत्यतः ॥ ८ ॥
शिवो भवोऽथ कृष्णश्च नवसिद्धाश्च षोडश ।
चन्द्रपूरोऽथ गुल्मश्च शुभः कामोऽतिमुक्तकः(१) ॥ १० ॥
कण्ठो वीरः(२) प्रयोगोऽथ कुमारी देवभोगकः ।
विश्वदेवः खड्गदेवो रुद्रो धाताऽसिरेव च ॥ ११ ॥
मुद्रास्फोटो वंशपूरो भोजः षोडश सिद्धकाः ।
समयान्यस्तु देहस्तु षोढान्यासेन यस्थितः ॥ १२ ॥
प्रविश्य मण्डले पुष्पं मण्डलान्यथ पूजयेत् ।
अनन्तश्च महान्तश्च सर्वदा शिवपादुका ॥ १३ ॥
महाव्यामिश्च शून्यश्च पञ्चतत्त्वात्ममण्डलं ।
श्रीकण्ठनाथपादुकां शङ्करानन्तको यजेत् ॥ १४ ॥
सदाशिवः पिङ्गलश्च भृग्वानन्दश्च नाथकः ।
लाङ्गूलानन्दसंवर्त्तौ मण्डलस्थानके यजेत ॥ १५ ॥
नैर्ऋत्ये श्रीमकरकालः पिनाकी च महेन्द्रकः ।
खड्गी भुजङ्गो बाणश्च अघासिः शब्दकी वशः ॥ १६ ॥
आशारूपो नन्दरूपो बलिन्दत्वा क्रमं यजेत् ।

ह्रीं खं खं हंसौं बटुकाय अवर२ अर्घं पुष्पं धूपं दीपंगन्धं बलिं पूजां गृह्ण२ नमस्तुभ्यं। ओं क्षां ह्रीं क्रूं चें क्षेत्रपालाय अवतर२ महाकपिलजटाभार भास्वरत्रिनेत्रज्वालामुख एह्येहि गन्धपुष्पबलिपूजां गृह्ण२ खः खः ओं कः ओं लः ओं महाडामराधिपतये(२) स्वाहा ।

---

१ कामोऽथ मुक्तक इति ज०, ख०, ग० च।  २ ममदाधिपतये इति ग०।
२ रुद्रो वीर इति क०, ग० च।  महामामराधिपतये इति ज०।

बलिशेपेऽथ यजेत् फ्रीं फ्रूं ह्रां श्रीं वै त्रिकूटकं ॥ १७ ॥
वामे च दक्षिणे ह्यग्रे याम्ये निशानाथपादुकाः ।
दक्षे तमोरिनाथस्य ह्यग्रे कालानलस्य च ॥ १८ ।
उड्डियाण जालन्धर पूर्णं वै कामरूपकं ।
गगनानन्ददेवस्य स्वर्गानन्दं सवर्गकं(१) ॥ १९ ॥
परमानन्ददेवस्य(२) सत्यानन्दस्य पादुकां(३) ।
नागानन्दस्य वर्गाव्यमुत्तमे रत्नपञ्चकं ॥ २० ॥
सौम्ये शिवे यजेत् षट्कं सुरनाथस्य पादुकां ।
श्रीमत्समयकोटीशं विद्याकोटीश्वरं यजेत् ॥ २१ ॥
कोटीशं विन्दुकोटीशं सिद्धकोटीश्वरन्तथा ।
सिद्धचतुष्कमाग्नेय्यां श्मरीशेश्वरं यजेत् ॥ २२ ॥
षक्कौशनाथ कुरङ्गेशं ह्येशचन्द्रनाथकं(४) ।
यजेद्गन्धादिभिर्वेताम् याम्ये विमलपञ्चकं ॥ २३ ॥
यजेदनादिविमलं सर्व्वज्ञविमलं ततः ।
यजेद्योगीशविमलं सिद्धाख्य समयाख्यकं ॥ २४ ॥
नैर्ऋत्ये चतुरो देवान्(५) यजेत् कन्दर्पनाथकं ।
पूर्वाः षण्मौश सर्वांश(६) कुब्जिकापादुकां यजेत् ॥ २५ ॥

---

१ सर्वानन्दस्य देवकमिति ग०, ख० च। ४ अतीश मन्त्रनायकमिति ख०।
२ परमानन्ददेवचेति ख०। परमा मूलीश मन्त्रनायकमिति घ०।
नन्ददेवकेति ज०। ५ चतुरो वेदानिति ख, ग०, ज० च।
३ सत्यानन्दस्य पादुकामिति क०, ६ पूर्वान् षण्मौल सर्वांश इति ज०, घ०
ग०, ङ० अ, ख० च। च।

नवात्मकेन मन्त्रेण पञ्चप्रणवकेन वा ।
सहस्राक्षमनवद्यं विष्णुं शिवं सदा यजेत्[1] ॥ २६ ॥
पूर्व्वाच्छिवान्तं ब्रह्मादि ब्रह्माणी च महेश्वरी ।
कौमारी वैष्णवी चैव वाराही शक्रशक्तिका ॥ २७ ॥
चामुण्डा च महालक्ष्मीः पूर्व्वादीशान्तमर्च्चयेत् ।
डाकिनी राकिनी पूज्या लाकिनी काकिनी तथा ॥२८॥
शाकिनी याकिनी पूज्या वायव्याद्युग्रपट्सु च ।
यजेद् ध्यात्वा ततो देवीं द्वात्रिंशद्वर्णकात्मकां ॥ २९ ॥
पञ्चप्रणवकेनापि ह्रींकारेणाथवा यजेत् ।
नीलोत्पलदलश्यामा षड्वक्त्रा[2] षट्प्रकारिका ॥ ३० ॥
चिच्छक्तिरष्टादशाख्या बाहुद्वादशसंयुता ।
सिंहासनसुखासीना प्रेतपद्मोपरिस्थिता ॥ ३१ ॥
कुलकोटिसहस्राढ्या कर्कोटो मेखलास्थितः ।
तक्षकेणोपरिष्टाच्च गले हारश्च वासुकिः ॥ ३२ ॥
कुलिकः कर्णयोर्यस्याः कूर्म्मः कुण्डलमण्डलः ।
भ्रुवोः पद्मो महापद्मो वामे नागः कपालकः ॥ ३३ ॥
अक्षसूत्रञ्च खट्वाङ्गं शङ्खं पुस्तञ्च दक्षिणे ।
त्रिशूलन्दर्पणं खड्गं रत्नमालाङ्कुशन्धनु[3] ॥ ३४ ॥
श्वेतमूर्द्ध मुखन्देव्या ऊर्द्ध्वश्वेतन्तथापरं ।
पूर्व्वास्यं पाण्डरं क्रोधि दक्षिणं कृष्णवर्णकं ॥ ३५ ॥

---

१ सदाशिवमथ यजेदिति क०, ख०, ग०, घ० ।
२ षड्वक्त्रेति ख० ।
३ रत्नमालाङ्कुशं धनुरिति ग०, ङ० च ।

हिमकुन्देन्दुभं सौम्यं ब्रह्मा पादतले स्थितः।
विष्णुस्तु जघने रुद्रो हृदि कण्ठे तथेश्वरः ॥ १६ ॥
सदाशिवो ललाटे स्याच्छिवस्तस्योर्द्धतः स्थितः।
आघूर्णिता कुब्जिकैवं ध्येया पूजादिकर्म्मसु ॥ १७ ॥

इत्याग्नेये महापुराणे युद्धजयार्णवे कुब्जिकापूजा नाम चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥

## अथ पञ्चचत्वारिंशदधिकशततमोऽध्यायः।



### मालिनीनानामन्त्राः।

ईश्वर उवाच। नानामन्त्रान् प्रवक्ष्यामि षोढान्यासपुरःसरम्।
न्यासस्त्रिधा तु षोढा स्युः शाक्तशाम्भवयामलाः ॥ १ ॥
शाम्भवे शब्दराशिः षट्पीठग्रन्थिरूपवान्(१)।
त्रिविद्या तद्वद्वो न्यासस्तितत्त्वाभिधानकः ॥ २ ॥
चतुर्थो वनमालायाः श्लोकद्वादशरूपवान्।
पञ्चमो रत्नपञ्चात्मा नवात्मा षष्ठ ईरितः ॥ ३ ॥
शाक्ते पक्षे तु मालिन्यास्त्रिविद्यात्मा द्वितीयकः।

१ षोडशग्रन्थिरूपवानिति ख०।

अघोर्य्यष्टककृपोऽन्यो दाद्याद्ययतुर्थकः ॥ ४ ॥
पञ्चमस्तु षड्ङ्गः स्याच्छक्तिचान्यास्त्रचण्डिका(१) ।
क्लीं क्लौं क्लीं ग्लौं क्रूं फट् अयं स्यात्सूर्याख्यं सर्व्वसाधकं(२)॥५॥
मालिन्या नादिफान्तं स्यात् नादिनी च शिखा स्मृता ।
अग्रसनी(३) शिरसि स्यात् शिरोमालानिवृत्तिः शः ॥ ६ ॥
ट शान्तिश्च शिरो भूयाच् चामुण्डा च त्रिनेत्रगा ।
ढ प्रियदृष्टिर्द्विनेत्रे च नासागा गुह्यशक्तिनी ॥ ७ ॥
न नारायणी द्विकर्णे च दक्षकर्णे त मोहनी ।
ज प्रज्ञा वामकर्णस्था वक्त्रे च वज्रिणी स्मृता ॥ ८ ॥
क करालो दक्षदंष्ट्रा वामांसा ख कपालिनी ।
ग शिवा ऊर्द्ध्वदंष्ट्रा स्याद् घ घोरा वामदंष्ट्रिका ॥ ९ ॥
ङ शिखा दन्तविम्बामा ई माया जिह्वया स्मृता ।
अ स्यान्नागेश्वरी वाचि व कण्ठे शिखिवाहिनी ॥१० ॥
भ भीषणी दक्षस्कन्धे वायुवेगा म वामके ।
ढनामा दक्षबाहौ तु ट वामे च विनायका ॥ ११ ॥
प पूर्णिमा द्विहस्ते तु ओंकाराद्यङ्गुलीयके ।
अं दर्शनी वामाङ्गुल्य अः स्यात्सञ्जीवनी करे ॥ १२ ॥
ट कपालिनी कपाले शूलदण्डे त दीपनी ।
त्रिशूले ज जयन्ती स्याद्वृद्धिः साधनी(४) स्मृता ॥ १३ ॥

---

१ [illegible]न्त्रि स्याद्या चिच्चण्डिका इति ञ० । °शक्तिचान्या चिच्चण्डिकेति ख० ।
२ षड्ङ्ग स्यात् सप्तर्द्धे सर्व्वसाधक मिति ख०, ग० च ।
३ अग्रसनीति ख०, ग० च ।
४ पावनीति ख०, ग० च ।

जीवे श परमाख्या स्याद् ह प्राणे चाम्बिका स्मृता।
दक्षस्तने क्ष शरीरा न वामे पूतना स्तने ॥ १४ ॥
प स्तनक्षीर आ मोटेः लम्बोदर्युदरे च थ।
नाभौ संहारिका च स्यान् महाकाली नितम्बम ॥ १५॥
गुह्ये म कुसुममाला य शुक्रे शुक्रदेविका।
उत्हृदये त ताराख्याद ज्ञाना दक्षजानुनि ॥ १६ ॥
वामे स्यादौ क्रियाशक्तिरो गायत्री च जङ्घगा।
थो सावित्री वामजङ्घा दक्षे दो दोहनी पदे ॥ १७ ॥
फ फेत्कारी वामपादे नवात्मा मालिनी मनुः।
अ श्रीकण्ठः शिखायां स्यादावक्त्रे स्यादनन्तकः ॥ १८ ॥
इ सूक्ष्मो दक्षनेत्रे स्यादी त्रिमूर्त्तिस्तु वामके।
उ दक्षकर्णेऽमरोश ऊ कर्णेऽर्घीशकोऽपरे ॥ १९ ॥
ऋ भावभूतिर्नासाग्रे वामनासा तिथीश ऋ।
ऌ स्थाणुर्दक्षगण्डे स्याद्वामगण्डे हरश्च ॡ ॥ २० ॥
कटीशो दन्तपङ्क्तावे भूतीशश्चोर्ध्वदन्त ऐ।
सद्योजात ओ अधरे जर्ध्वेऽनुग्रहीश औ ॥ २१ ॥
अ क्रूरो घाटकायां स्यादः महासेनजिह्वया।
क क्रोधीशो दक्षस्कन्धे खश्चण्डीशश्च बाहुषु ॥ २२ ॥
पञ्चान्तकः कूर्परे गो घ शिखी दक्षकङ्कणे।
ङ एकपादश्चाङ्गुल्यो वामस्कन्धे च कूर्मकः ॥ २३ ॥
छ एकनेत्रो बाहौ स्याच्चतुर्वक्त्रो ज कूर्परे।
झ राजसः कङ्कणगः ञः सर्वकामदोऽङ्गुली ॥ २४ ॥
ट सोमेशो नितम्बे स्याद्दक्ष ऊरुठं लाङ्गली।

ड दारुको दक्षजानौ जङ्घा ढोऽर्द्धजलेश्वरः ॥ २५ ॥
ण उमाकान्तकोऽङ्गुल्यस्तु आषाढी नितम्बके।
थ दण्डी वाम ऊरौ स्याद् भिटो वामजानुनि ॥ २६ ॥
ध मीनो वामजङ्घायाञ्च मेषश्चरणाङ्गुली।
प लोहितो दक्षकुक्षौ फ शिखी वामकुक्षिगः ॥ २७ ॥
ब गलण्डः पृष्ठवंशे भो नाभौ च हिरण्डकः।
म महाकालो हृदये य वाणीशस्त्वविस्मृतः(१) ॥ २८ ॥
र रक्ते स्याच्छुजङ्गेशो ल पिनाकी च मांसके।
व खड्गीशः स्वात्मनि स्याद्बकश्चास्थिनि शः स्मृतः ॥२९॥
ष श्वेतश्चैव मज्जायां स भृगुः शुक्रधातुके।
, प्राणे ह्रो नकुलीशः स्यात् च संवर्त्तश्च कोपगः ॥ ३० ॥
, रुद्रशक्तीः प्रपूज्य क्लींबीजेनाखिलमाप्नुयात्।

इत्याग्नेये महापुराणे मालिनीमन्त्रादिन्यासो नाम
पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥

## अथ षट्चत्वारिंशदधिकशततमोऽध्यायः।

———:○:———

अष्टाष्टकदेव्यः।

ईश्वर उवाच। त्रिखण्डीं सम्प्रवक्ष्यामि ब्रह्मविष्णुमहेश्वरीं।

---

१ य शर्वीशस्तु विसृत इति क॰।

ओं नमो भगवते रुद्राय नमः। नमश्चामुण्डे नमश्चाकाशमातॄणां सर्व्वकामार्थसाधनीनामजरामरीणां सर्व्वत्राप्रतिहतगतीनां स्वरूपपरिवर्त्तिनीनां सर्व्वसत्त्ववशीकरणोत्सादनोन्मूलनसमस्तकर्म्मप्रवृत्तानां सर्वमातृगुह्यं हृदयं परमसिद्धं परकर्म्मच्छेदनं परमसिद्धिकरमातॄणां वचनं शुभं।

ब्रह्मखण्डपदे रुद्रैरेकविंशाधिकं शतं ॥ १ ॥

तद्यथा, ओं नमश्चामुण्डे ब्रह्माणि अघोरे अमोघे वरदे विच्चे स्वाहा। ओं नमश्चामुण्डे माहेश्वरि अघोरे अमोघे वरदे विच्चे स्वाहा। ओं नमश्चामुण्डे कौमारि अघोरे अमोघे वरदे विच्चे स्वाहा। ओं नमश्चामुण्डे वैष्णवि अघोरे अमोघे वरदे विच्चे स्वाहा। ओं नमश्चामुण्डे वाराहि अघोरे अमोघे वरदे विच्चे स्वाहा। ओं नमश्चामुण्डे इन्द्राणि अघोरे अमोघे वरदे विच्चे स्वाहा। ओं नमश्चामुण्डे चण्डि अघोरे अमोघे वरदे विच्चे स्वाहा। ओं नमश्चामुण्डे ईशानि अघोरे अमोघे वरदे विच्चे स्वाहा[1]।

यथाक्षरपदानां हि विष्णुखण्डन्द्वितीयकं।

ओं नमश्चामुण्डे ऊर्द्ध्वकेशि ज्वलितशिखरे[2] विद्युज्जिह्वे तारकाक्षि पिङ्गलभ्रुवे विकृतदंष्ट्रे क्रुद्धे ओं मांसशोणितसुरासवप्रिये हस २ ओं नृत्य२ ओं विजृम्भय२ ओं मायात्रैलोक्यरूपसहस्रपरिवर्त्तिनीनां ओं बन्ध२ ओं कुट्ट२ चिरि२ हिरि२ भिरि२ त्रासनि२ भ्रामणि२ ओं द्रावणि२ क्षोभणि२

१ ओं नमश्चामुण्डे माहेश्वरीत्यादि, विच्चे स्वाहेत्यन्त पाठः ख० पुस्तके नास्ति।

२ ज्वलितशिख इति ख०, ग०, घ०, ङ० च।

मारयिर संजीवनिर हेरिर गेरिर घेरिर ओं सुरिर ओं नमो मातृगणाय नमो नमो विच्चे ।

एकत्रिंशत्पदं प्रभोः शतमन्त्रैकसप्ततिः ॥ २ ॥
ह्रैं श्रौं पञ्चप्रणवाद्यन्तां त्रिखण्डीञ्च जपेद्‌ यजेत् ।
ह्रैं श्रौं श्रीकुब्जिकाहृदयं पदसन्धौ तु योजयेत् ॥ ३ ॥
अकुलादित्रिमध्यस्थं कुलादेयं त्रिमध्यगं ।
मध्यमादि त्रिमध्यस्थं पिण्डं पादे त्रिमध्यगं ॥ ४ ॥
नवार्णमात्रासंयुक्तं प्रणवाद्यं शिखाशिवां ।

ओं घ्रों शिखाभैरवाय नमः । खौं खौं खें सबीजत्र-यरः ।

क्रां क्रीं क्रें निर्बीजत्र्यर्णं द्वात्रिंशद्वर्णकम्परं ॥ ५ ॥
चाद्यथ ककारान्ता अकुला च कुलक्रमात् ।
शशिनी भानुनी चैव पावनी शिव इत्यतः ॥ ६ ॥
गान्धारी णय पिण्डाक्षी चपला गजजिह्विका ।
म मृषा भयसारा स्यान्मध्यमा फोऽजराय च ॥ ७ ॥
कुमारी कालरात्री न सङ्कटा द ध कालिका ।
फ शिवा भवघोरा ण ट बीभत्सा त विद्युता ॥ ८ ॥
ठ विश्वम्भरा शंसिन्या ढ ज्वालामालया तथा ।
कराली दुर्जया रङ्गी वामा ज्येष्ठा च रौद्रापि ॥ ९ ॥
ख काली क कुलालम्बी अनुलोमा द पिण्डिनी ।
आ वेदिनी इ रूपी वै शान्तिर्मूर्त्तिः कलाकुला ॥ १० ॥
अर खड्गिनी उ बलिता ऌ कुला ॡ तथा यदि ।
सुभगा वेदनाद्न्या कराली अं च मध्यमा ॥ ११ ॥

अः अपेतरया पीठे पूज्याय गतायः क्रमात्।
खां खीं खौं महाभैरवाय नमः।
अक्षोद्या ह्यृक्षकर्णी च राक्षसी चपणक्षया॥ १२॥
पिङ्गाक्षी चाक्षया क्षेमा ब्रह्माण्यष्टकसंस्थिताः।
इला लीलावती नीला लङ्का लङ्केश्वरी तथा॥ १३॥
लालसा विमला माला(१) माहेश्वर्य्यष्टके स्थिताः।
हुताशना विशालाक्षी क्रूङ्कारी वडवामुखी॥ १४॥
हाहारवा तथा क्रूरा क्रोधा बाला खरानना।
कौमार्य्यां देहसम्भूताः पूजिताः सर्वसिद्धिदाः॥ १५।
सर्वज्ञा तरला तारा ऋग्वेदा च हयानना।
सारासारस्वयङ्ग्राहा शाश्वती(२) वैष्णवीकुले॥ १६॥
तालुजिह्वा च रक्ताक्षी विद्युज्जिह्वा करङ्किणी।
मेघनादा प्रचण्डोग्रा कालकर्णी कलिप्रिया॥ १७॥
वाराहीकुलसम्भूताः पूजनीया जयार्थिना।
चम्पा चम्पावती चैव प्रचम्पा ज्वलितानना॥ १८॥
पिशाची पिचुवक्त्रा च लोलुपा ऐन्द्रीसम्भवाः।
पावनी याचनी चैव वामनी दमनी तथा॥ १९॥
बिन्दुवेला बृहत्कुक्षी विद्युता विश्वरूपिणी।
चामुण्डाकुलसम्भूता मण्डले पूजिता जये॥ २०॥
यमजिह्वा जयन्ती च दुर्जया च यमान्तिका(३)।

---

१ कीला इति ज०। २ शाश्विकी इति ज०। ३ जयान्तिकेति ख०।

विडाली रेवती चैव जया च विजया तथा ॥ २१ ॥
महालक्ष्मीकुले जाता अष्टाष्टकमुदाहृतं।

इत्याग्नेये महापुराणे अष्टाष्टकादिर्नाम षट्चत्वारिंश-
दधिकशततमोऽध्यायः॥

---

## अथ सप्तचत्वारिंशदधिकशततमोऽध्यायः।



### त्वरितापूजादिः।

ईश्वर उवाच। ओं गुह्यकुब्जिके हुं फट् मम सर्वोपद्रवान् यन्त्र-मन्त्रतन्त्रचूर्णप्रयोगादिकं येन कृतं कारितं कुरुते करिष्यति कारयिष्यति तान् सर्वान् हनर दंष्ट्राकरालिनि ह्रैं ह्रीं हुं गुह्यकुब्जिकायै स्वाहा। ह्रीं ओं खे(१) वों गुह्यकुब्जिकायै नमः।

ह्रीं सर्वजनक्षोभणी जनानुकर्षिणी ततः।
ओं खें ख्यां(२), सर्वजनवशङ्करी तथा स्यात्मनमोहनी ॥ १ ॥
ओं ख्यौं(३), सर्वजनस्तम्भनी ऐं खं ख्रां क्षोभणी तथा।

---

१ ह्रीं ख च छे क्ष्ौं इति ख०।
२ खों च क्ष्ां इति ख०। खों
स्त्रूं इति ग०।
३ खों च क्ष्ौं इति ख०। खों स्त्रों इति ग०।

ऐं नितत्त्वं बीजं ग्रेष्ठङ्गे पञ्चाचरी तथा ॥ २ ॥

फं ग्रीं घीं ग्रीं क्रीं चें वच्छे चे चे क्रूं फट् क्रीं नमः ।"
ग्रों क्रां चे वच्छे चे चो क्रों फट् नवेयं त्वरिता पुनर्ज्ञयाऽर्चिता जये ।

क्रों सिंहायेत्यासनं स्यात् क्रीं चे हृदयमीरितं ।
वच्छेऽथ शिरसे स्वाहा त्वरितायाः शिवः स्मृतः ॥ ३ ॥
चें क्रीं शिखायै वौषट् स्याद् भवेत् चें कवचाय हुं ।
क्रूं नेत्रत्रयाय वौषट् क्रीमन्तश्च फडन्तकं ॥ ४ ॥
क्रीं कारी(१) खेचरी चण्डा छेदनी चोभणी क्रिया ।
चेमकारी च क्रींकारी फट्कारी नवशक्तयः ॥ ५ ॥
अथ दूतीः प्रवक्ष्यामि पूज्या इन्द्रादिगाश्च ताः ।

क्रीं नखे बहुतुण्डे(२) च खगे क्रीं(३) खेचरे ज्वालिनि ज्वल ख खे छ छे शवविभीषणे(४) च छे चण्डे छेदनि करालि ख खे छे चे खरहाङ्गी क्रीं । चे वचे कपिले ह चे क्रूं क्रूर्त्तेजोवति रौद्रि मातः क्रीं फे वे फे फे वक्रे वरी फे । पुटि पुटि घोरे क्रूं फट्(५) ब्रह्मवेतालि मध्ये ।

गुह्याङ्गानि च तत्त्वानि त्वरितायाः पुनर्वदे ॥ ६ ॥
क्रीं क्रूंहः(६) हृदये प्रोक्तं ह्रीं ह्य शिरः स्मृतं ।
फां ज्वल ज्वलेति च शिखा वर्म्म इले क्रं हुं हुं ॥ ७ ॥

---

१ क्रोंकारी इति ख० ।
२ क्रीं नखे बहुतुण्डे इति ञ० ।
३ चर्गे क्रीमिति ख० ।
४ शरविभीषणे इति ञ० ।
५ क्रूं फट् इति ख० ।
६ क्रीं क्रूं च इति ख० ।

क्रों चूं औं नेत्रमिल्लुक्तं चौं अस्त्रं वै ततश्च फट् हुं
खे वच्छे सः क्षीं चें हुं फट् वा।
हूं शिरश्चैव मध्ये स्यात् पूर्वादौ खे सदाशिवे।
ब ईशः कें मनोन्मानी मध्ये तार्क्षों क्षीं च माधवः॥ ८॥
चें ब्रह्मा हुं तथादित्यो दारुणं फट् स्मृतः सदा।

इत्याग्नेये महापुराणे युद्धजयार्णवे त्वरितापूजादिर्नाम
सप्तचत्वारिंशदधिकशततमोऽध्यायः॥

---

## अथ अष्टचत्वारिंशदधिकशततमोऽध्यायः।

सङ्ग्रामविजयपूजा।

ईश्वर उवाच। ओं डे ख ख्यां सूर्याय सङ्ग्रामविजयाय नमः।
ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः।
षडङ्गानि तु सूर्य्यस्य सङ्ग्रामे जयदस्य हि।
ओं हं खं खगोल्काय स्वाहा। स्फूं हूं हुं क्रूं ओं ह्रीं क्रें।
प्रभूतं विमलं सारमाराध्यं परमं सुखं॥ १॥
धर्म्मज्ञानञ्च वैराग्यमैश्वर्य्याद्यष्टकं यजेत्।
अनन्तासनं सिंहासनं पद्मासनमतः परं॥ २॥

कर्णिकाकेशराख्येव सूर्यसोमाग्निमण्डलं।
दीप्ता सूक्ष्मा(१) जया भद्रा विभूतिर्विमला तथा ॥ ३ ॥
अमोघा विद्युता पूज्या नवमी सर्वतोमुखी।
सत्त्वं रजस्तमश्चैव प्रकृतिं पुरुषं तथा ॥ ४ ॥
आत्मानञ्चान्तरात्मानं परमात्मानमर्च्चयेत्।
सर्व्वे विन्दुसमायुक्ता मायानिलसमन्विताः ॥ ५ ॥
उषा प्रभा च सन्ध्या च साया माया बलान्विता।
विन्दुविष्णुसमायुक्ता(२) द्वारपालास्तथाष्टकं ॥ ६ ॥
सूर्य्यं चण्डं प्रचण्डञ्च पूजयेद्गन्धकादिभिः।
पूजया जपहोमाद्यैर्युद्धादौ विजयो भवेत् ॥ ७ ॥

इत्याग्नेये महापुराणे युद्धजयार्णवे सङ्ग्रामविजयपूजा नाम अष्टचत्वारिंशदधिकशततमोऽध्यायः॥

---

## अथोनपञ्चाशदधिकशततमोऽध्यायः॥

—:०:—

### लक्षकोटिहोमः।

ईश्वर उवाच। होमाद्रणादौ विजयो राज्याप्तिर्विघ्ननाशनं।
कृच्छ्रेण शुद्धिमुत्पाद्य प्राणायामशतेन च ॥ १ ॥

---

१ दीप्ता सूक्ष्मेति ख०। २ विन्दु विन्दु समायुक्ता इति ख०।

अन्तर्जले च गायत्रीं जप्त्वा षोडशधाचरेत्।
प्राणायामांश्च पूर्वाह्णे जुहुयात् पावके हविः॥ २॥
भैक्ष्ययावकभक्षी च फलमूलाशनोऽपि वा।
क्षीरसक्तुघृताहार एकमाहारमाश्रयेत्॥ ३॥
यावत्समाप्तिर्भवति लक्षहोमस्य पार्थिव।
दक्षिणा लक्षहोमान्ते गावो वस्त्राणि काञ्चनं॥ ४॥
सर्वोत्पातसमुत्पत्तौ पञ्चभिर्दशभिर्द्विजैः।
नास्ति लोके स उत्पातो यो ह्यनेन न शाम्यति॥ ५॥
मङ्गल्यं परमं नास्ति यदस्मादतिरिच्यते।
कोटिहोमन्तु यो राजा कारयेत् पूर्ववद्द्विजैः॥ ६॥
न तस्य शत्रवः सङ्ख्ये जातु तिष्ठन्ति कर्हिचित्।
न तस्य मारको देशे व्याधिर्वा जायते क्वचित्॥ ७॥
अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः।
राक्षसाद्याश्च शाम्यन्ति सर्वे च रिपवो रणे॥ ८॥
कोटिहोमे तु वरयेद्ब्राह्मणान्विंशतिं तथा।
शतमथ सहस्रं वा यथेष्टां भूतिमाप्नुयात्॥ ९॥
कोटिहोमन्तु यः कुर्याद् द्विजो भूपोऽथवा च विट्।
यदिच्छेत् प्राप्नुयात्तत्तत् सशरीरो दिवं व्रजेत्॥ १०॥
गायत्र्या ग्रहमन्त्रैर्वा कुष्माण्डीजातवेदसैः।
ऐन्द्रवारुणवायव्ययाम्याग्नेयैश्च वैष्णवैः॥ ११॥
शाक्तेयैः शाम्भवैः सौरैर्मन्त्रैर्होमार्चनात्ततः।
अयुतेनाल्पसिद्धिः स्याल्लक्षहोमोऽखिलार्त्तिनुत्॥ १२॥
सर्वपीडादिनाशाय कोटिहोमोऽखिलार्थदः।

यन्त्रीहितिलक्षीरघृतकुशप्रसातिकाः ॥ १३ ॥
पद्मजोशीरविल्वाम्रदला होमे प्रकीर्त्तिताः।
अष्टहस्तप्रमाणेन कोटिहोमेषु खातकं ॥ १४ ॥
तस्मादर्द्धप्रमाणेन लक्षहोमे विधीयते।
होमोऽयुतेन लक्षेण कोट्याऽज्याद्यैः प्रकीर्त्तितः ॥ १५ ॥

इत्याग्नेये महापुराणे युद्धजयार्णवे अयुतलक्षकोटिहोमो नामो नपञ्चाशदधिकशततमोऽध्यायः ॥

---

## अथ पञ्चाशदधिकशततमोऽध्यायः।

### मन्वन्तराणि।

अग्निरुवाच। मन्वन्तराणि वक्ष्यामि आद्यः स्वायम्भुवो मनुः।
अग्नीध्राद्यास्तस्य सुता यमो नाम तदा सुराः॥ १ ॥
और्वाद्याश्च सप्तर्षय इन्द्रश्चैव शतक्रतुः।
पारावताः सतुषिता देवाः स्वारोचिषेऽन्तरे ॥ २ ॥
विपश्चित्तत्र देवेन्द्र ऊर्जस्तम्भादयो द्विजाः।
चैत्रकिम्पुरुषाः पुत्रास्तृतीयश्चोत्तमो मनुः॥ ३ ॥
सुशान्तिरिन्द्रो देवाश्च सुधामाद्या वशिष्ठजाः।
सप्तर्षयोऽजाद्याः पुत्राश्चतुर्थस्तामसो मनुः॥ ४ ॥

स्वरूपाद्याः सुरगणाः शिखिरिन्द्रः सुरेश्वरः।
ज्योतिर्धामादयो विप्रा नव ख्यातिसुखाः सुताः॥ ५॥
रैवते वितथश्चेन्द्रो अमिताभास्तथा सुराः।
हिरण्यरोमाद्या मुनयो(१) बलबन्धादयः सुताः॥ ६॥
मनोजवश्चाक्षुषेऽथ इन्द्रः स्वात्यादयः सुराः।
सुमेधाद्या महर्षयः पुरुप्रभृतयः सुताः॥ ७॥
विवस्वतः सुतो विप्रः श्राद्धदेवो मनुस्ततः।
आदित्यवसुरुद्राद्या देवा इन्द्रः पुरन्दरः॥ ८॥
वशिष्ठः काश्यपोऽथात्रिर्जमदग्निः सगौतमः।
विश्वामित्रभरद्वाजौ मुनयः सप्त साम्प्रतं॥ ९॥
इक्ष्वाकुप्रमुखाः पुत्रा अंशेन हरिराभवत्।
स्वायम्भुवे मानसोऽभूदजितस्तदनन्तरे॥ १०॥
सत्यो हरिर्देववरो वैकुण्ठो वामनः क्रमात्।
छायाजः सूर्यपुत्रस्तु भविता चाष्टमो मनुः॥ ११॥
पूर्वस्य च सवर्णोऽसौ सावर्णिर्भविताष्टमः।
सुतपाद्या देवगणा दीप्तिमद्द्रौणिकादयः॥ १२॥
मुनयो बलिरिन्द्रश्च विरजप्रमुखाः सुताः।
नवमो दक्षसावर्णिः पाराद्याश्च तदा सुराः(२)॥ १३॥
इन्द्रश्चैवाद्भुतस्तेषां सवनाद्या द्विजोत्तमाः।
*धृतकेत्वादयः पुत्रा ब्रह्मसावर्णिरित्यतः॥ १४॥*
सुखादयो देवगणास्तेषां शान्तिः शतक्रतुः।

---

१ हिरण्यरोमाद्या ऋषय इति ज०। २ मथा सुरा इति ञ०।

हविष्याद्याश्च मुनयः सुचेत्राद्याश्च तत्सुताः ॥ १५ ॥
धर्म्मसावर्णिकश्चाथ विहङ्गाद्यास्तदा सुराः।
गणश्चेन्द्रो निश्चराद्या मुनयः पुत्रका मनोः ॥ १६ ॥
सर्व्वत्रगाद्या रुद्राख्यः सावर्णिर्भविता मनुः।
ऋतधामा सुरेन्द्रश्च हरिताद्याश्च देवताः ॥ १७ ॥
तपस्याद्याः सप्तर्षयः सुता वै देववन्मुखाः।
मनुस्त्रयोदशो रौच्यः सूत्रामाणादयः सुराः॥ १८ ॥
इन्द्रो दिवस्पतिस्तेषां दानवादिविमर्द्दनः।
निर्मोहाद्याः सप्तर्षयश्चित्रसेनादयः सुताः ॥ १९ ॥
मनुश्चतुर्द्दशो भौत्यः शुचिरिन्द्रो भविष्यति।
चाक्षुषाद्याः सुरगणा अग्निबाह्वादयो द्विजाः ॥ २० ॥
चतुर्द्दशस्य भौत्यस्य पुत्रा ऊरुमुखा मनोः।
प्रवर्त्तयन्ति वेदांश्च भुवि सप्तर्षयो दिवः॥ २१ ॥
देवा यज्ञभुजस्ते तु भूः पुत्रैः परिपाल्यते।
ब्रह्मणो दिवसे ब्रह्मन्मनवस्तु चतुर्द्दश ॥ २२ ॥
मन्वाद्याश्च हरिर्वेदं द्वापरान्ते विभेद सः।
आद्यो वेदश्चतुष्पादः शतसाहस्रसम्मितः ॥ २३ ॥
एकश्चासीद् यजुर्वेदस्तं चतुर्द्धा व्यकल्पयत्।
आध्वर्य्यवं यजुर्भिस्तु ऋग्भिर्होत्रं तथा मुनिः ॥ २४ ॥
औद्गात्रं सामभिश्चक्रे ब्रह्मत्वञ्चाप्यथर्व्वभिः।
प्रथमं व्यासशिष्यस्तु पैलो ह्यृग्वेदपारगः ॥ २५ ॥
इन्द्रः प्रमतये प्रादाद्बाष्कलाय च संहिताम्।
बौध्यादिभ्यो ददौ सोऽपि चतुर्द्धा निजसंहिताम् ॥ २६ ॥

यजुर्वेदतरोः शाखाः सप्तविंशन्महामतिः।
वैशम्पायननामासौ व्यासशिष्यश्चकार वै ॥ २७ ॥
काण्वा वाजसनेयाद्या याज्ञवल्क्यादिभिः स्मृताः।
सामवेदतरोः शाखा व्यासशिष्यः सजैमिनिः ॥ २८ ॥
सुमन्तुश्च सुकर्मा च एकैकां संहितां ततः।
गृह्णते च सुकर्माख्यः सहस्रं संहितां गुरुः ॥ २९ ॥
सुमन्तुराथर्वतरुं व्यासशिष्यो विभेद तं।
शिष्यानध्यापयामास पैप्पलादान् सहस्रशः ॥ ३० ॥
पुराणसंहितां चक्रे सूतो व्यासप्रसादतः।

इत्याग्नेये महापुराणे मन्वन्तराणि नाम पञ्चाशदधिकशततमोऽध्यायः ॥

---

## अथैकपञ्चाशदधिकशततमोऽध्यायः।

—:०:—

### वर्णेतरधर्माः।

अग्निरुवाच। मन्वादयो भुक्तिमुक्तिधर्म्मांश्चीर्त्वाप्नुवन्ति यान्।
प्रोचे परशुरामाय वरुणोक्तन्तु पुष्करः ॥ १ ॥
पुष्कर उवाच। वर्णाश्रमेतराणान्ते धर्मान्वक्ष्यामि सर्वदान्।
मन्वादिभिर्निगदितान् वासुदेवादितुष्टिदान् ॥ २ ॥

अहिंसा सत्यवचनन्दया भूतेष्वनुग्रहः ।
तीर्थानुसरणं दानं ब्रह्मचर्य्यममत्सरः ॥ ३ ॥
देवद्विजातिशुश्रूषा गुरूणाञ्च भृगूत्तम ।
श्रवणं सर्वधर्म्माणां पितृणां पूजनं तथा ॥ ४ ॥
भक्तिश्च नृपतौ नित्यं तथा सच्छास्त्रनेत्रता ।
आनृशंस्यन्तितिक्षा च तथा चास्तिक्यमेव च ॥ ५ ॥
वर्णाश्रमाणां सामान्यं धर्म्माधर्म (१) समीरितं ।
यजनं याजनं दानं वेदाद्यध्यापनक्रिया ॥ ६ ॥
प्रतिग्रहञ्चाध्ययनं विप्रकर्माणि निर्दिशेत् ।
दानमध्ययनञ्चैव यजनञ्च यथाविधि ॥ ७ ॥
क्षत्रियस्य सवैश्यस्य कर्मेदं परिकीर्त्तितं ।
क्षत्रियस्य विशेषेण पालनं दुष्टनिग्रहः ॥ ८ ॥
कृषिगोरक्ष्यवाणिज्यं वैश्यस्य परिकीर्त्तितं ।
शूद्रस्य द्विजशुश्रूषा सर्वशिल्पानि वाप्यथ ॥ ९ ॥
मौञ्जीबन्धनतो जन्म विप्रादेश्च द्वितीयकं ।
आनुलोम्येन वर्णानां जातिर्मातृसमा स्मृता ॥ १० ॥
चण्डालो ब्राह्मणीपुत्रः शूद्राच्च प्रतिलोमतः ।
सूतस्तु क्षत्रियाज्जातो वैश्याद्वै देवलस्तथा ॥ ११ ॥
पुक्कसः क्षत्रियापुत्रः शूद्रात् स्यात् प्रतिलोमजः ।
मागधः स्यात्तथा वैश्याच्छूद्रादायोगवो भवेत् ॥ १२
वैश्यायां प्रतिलोमेभ्यः प्रतिलोमाः सहस्रशः

१ धर्मंधर्मिति ग०, घ०, ञ०, ड०

विवाहः सदृशैस्तेषां नोत्तमैर्नाधमैस्तथा ॥ १३ ॥
चण्डालकर्म निर्दिष्टं बध्यानां घातनं तथा ।
स्त्रीजीवन्तु तद्रक्षाप्रोक्तं(१) वैदेहकस्य च ॥ १४ ॥
सूतानामश्वसारथ्यं पुक्कसानाञ्च व्याधता ।
स्तुतिक्रिया मागधानां तथा चायोगवस्य च ॥ १५ ॥
रङ्गावतरणं प्रोक्तं तथा शिल्पैश्च जीवनं ।
बहिर्ग्रामनिवासश्च मृतचेलस्य धारणं ॥ १६ ॥
न संसर्गस्तथैवान्यैश्चण्डालस्य विधीयते ।
ब्राह्मणार्थे गवार्थे वा देहत्यागोऽत्र यः कृतः ॥ १७ ॥
स्त्रीबालाद्युपपत्तौ वा वाह्यानां सिद्धिकारणं ।
सङ्करे जातयो ज्ञेयाः पितुर्मातुश्च कर्मतः ॥ १८ ॥

इत्याग्नेये महापुराणे वर्णान्तरधर्मा नामैकपञ्चाशदधिकशततमोऽध्यायः ॥

## अथ द्विपञ्चाशदधिकशततमोऽध्यायः ।

---

### गृहस्थवृत्तिः ।

पुष्कर उवाच । आजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा ।
क्षत्रविट्शूद्रधर्मेण जीवेन्नैव तु शूद्रजात् ॥ १ ॥
कृषिवाणिज्यगोरक्ष्यं कुसीदञ्च द्विजश्चरेत् ।
गोरसं गुडलवणलाक्षामांसानि वर्जयेत् ॥ २ ॥

---

१ स्त्रीजीवनञ्च तथा स्यात् प्रोक्तमिति ग॰ घ॰, ङ॰, ञ॰, च ।

भूमिं भित्वौषधीश्छित्वा हत्वा कीटपिपीलिकान् ।
पुनन्ति खलु यज्ञेन कर्षका देवपूजनात् ॥ ३ ॥
हलमष्टगवं धर्म्यं षड्गवं जीवितार्थिनां ।
चतुर्गवं नृशंसानां द्विगवं धर्मघातिनाम् ॥ ४ ॥
ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा ।
सत्यानृताभ्यामपि वा न श्ववृत्त्या कदा च न ॥ ५ ॥

इत्याग्नेये महापुराणे गृहस्थवृत्तयो नाम द्विपञ्चाशदधिक-
शततमोऽध्यायः ॥

## अथ त्रिपञ्चाशदधिकशततमोऽध्यायः ।

---

### ब्रह्मचर्याश्रमधर्मः ।

पुष्कर उवाच । धर्ममाश्रमिणां वक्ष्ये भुक्तिमुक्तिप्रदं शृणु ।
षोडशर्त्तुनिशा स्त्रीणामाद्यास्तिस्रस्तु गर्हिताः ॥ १ ॥
व्रजेद्युग्मासु पुत्रार्थी कर्माधानिकमिष्यते ।
गर्भस्य स्पष्टताज्ञाने सवनं स्पन्दनात् पुरा । २ ॥
षष्ठेऽष्टमे वा सीमन्तं पुत्रीयं नामभं शुभं ।
अच्छिन्ननाड्यां कर्त्तव्यं जातकर्म विचक्षणैः ॥ ३ ॥
अशौचे तु व्यतिक्रान्ते नामकर्म विधीयते ।
शर्म्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु ॥ ४ ॥
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ।

गर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य च ॥ ५ ॥
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ।
बाल निवेदयेद्भर्त्रे तव पुत्रोऽयमित्युत ॥ ६ ॥
यथाकुलन्तु चूडाकृद् ब्राह्मणस्योपनायनं ।
गर्भाष्टमेऽष्टमे वाब्दे गर्भादेकादशे नृपे ॥ ७ ॥
गर्भात्तु द्वादशे वैश्ये षोड़शाब्दादितो न हि ।
मुञ्जानां वल्कलानान्तु क्रमान्मौञ्ज्याः प्रकीर्त्तिताः ॥ ८ ॥
मार्गवैयाघ्रवास्तानि चर्माणि व्रतचारिणां ।
पर्णपिप्पलबिल्वानां क्रमाद्दण्डाः प्रकीर्त्तिताः ॥ ९ ॥
केशदेशललाटास्यतुल्याः प्रोक्ताः क्रमेण तु ।
अवक्राः सत्वचः सर्वे नाविप्लुष्टास्तु दण्डकाः ॥ १० ॥
वासोपवीते कार्पासक्षौमोर्णानां यथाक्रमं ।
आदिमध्यावसानेषु भवच्छब्दोपलक्षितं ॥ ११ ॥
प्रथमं तत्र भिक्षेत यत्र भिक्षा ध्रुवं भवेत् ।
स्त्रीणाममन्त्रतस्तानि विवाहस्तु समन्त्रकः ॥ १२ ॥
उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः ।
आचारमग्निकार्यं च सन्ध्योपासनमेव च ॥ १३ ॥
आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते उदङ्मुखः ॥ १४ ॥
सायं प्रातश्च जुहुयात् नामेध्यं व्यस्तहस्तकं ।
मधु मांसं जनैः सार्द्धं गीतं नृत्यञ्च वै त्यजेत्(१) ॥ १५ ॥

---

१ नृत्यञ्च वर्जयेदिति क०, ग०, घ०, ङ०, इत्यादि, नृत्यञ्च वै त्यजेदित्यत्र ख०, ञ०, ट० च । भाव पाठमें- पाठ ज० पुस्तके नास्ति ।

हिंसाम्परापवादं च अश्लीलं च विशेषतः ।
दण्डादि धारयेद्यत्नात् चिरान्यधारणं ॥ १६ ॥
वेदस्वीकरणं कृत्वा स्नायाद्दै दत्तदक्षिणः ।
नैष्ठिको ब्रह्मचारी वा देहान्तं निवसेद्गुरौ ॥ १७ ॥

इत्याग्नेये महापुराणे ब्रह्मचर्याश्रमो नाम त्रिपञ्चाशदधिकशततमोऽध्यायः ॥

---

## अथ चतुःपञ्चाशदधिकशततमोऽध्यायः ।

—:○:—

### विवाहः ।

पुष्कर उवाच । विप्रस्तस्रो विन्देत भार्यास्तिस्रस्तु भूमिपः ।
द्वे च वैश्यो यथाकामं भार्य्यैकामपि चान्त्यजः ॥ १ ॥
धर्मकार्य्याणि सर्वाणि न कार्य्याण्यसवर्णया ।
पाणिर्ग्राह्यः सवर्णासु गृह्णीयात् क्षत्रिया शरं ॥ २ ॥
वैश्या प्रतोदमादद्याद्दशां वै चान्त्यजा तथा ।
सकृत् कन्या प्रदातव्या हरंस्तां चौरदण्डभाक् ॥ ३ ॥
अपत्यविक्रयासक्ते निष्कृतिर्न विधीयते ।
कन्यादानं शचीयागो(१) विवाहोऽथ चतुर्थिका ॥ ४ ॥

---

१ शचीयोग इति ख०, छ० च ।

विवाहमेतत् कथितं नामकर्मचतुष्टयं।
नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ॥ ५ ॥
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते।
मृते तु देवरे देयात् तदभावे यथेच्छया ॥ ६ ॥
पूर्व्वाचितयमाग्नेयं वायव्यं चोत्तरात्रयं।
रोहिणी चेति चरणे भगणः शस्यते सदा ॥ ७ ॥
नैकगोत्रान्तु वरयेन्नैकार्षेयाश्च भार्गव।
पितृतः सप्तमादूर्द्ध्वं मातृतः पञ्चमात्तथा ॥ ८ ॥
आहूय दानं ब्राह्मः स्यात् कुलशीलयुताय तु।
पुरुषांस्तारयेत्तज्जो नित्यं कन्याप्रदानतः ॥ ९ ॥
तथा गोमिथुनादानाद्विवाहस्त्वार्ष उच्यते।
प्रार्थिता दीयते यस्य प्राजापत्यः स धर्म्मकृत् ॥ १० ॥
शुल्केन चासुरो मन्दो गान्धर्व्वो वरणान्मिथः।
राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात् ॥ ११ ॥
वैवाहिकेऽह्नि(१) कुर्वीत कुम्भकारमृदा शचीं।
जलाशये तु तां पूज्य वाद्याद्यैः(२) स्त्रीं गृहन्नयेत् ॥ १२॥
प्रसुप्ते केशवे नैव विवाहः कार्य्य एव हि।
पौषे चैत्रे कुजदिने रिक्ताविष्टितिथौ न च ॥ १३ ॥
न शुक्रजीवेऽस्तमिते न शशाङ्के ग्रहार्द्दिते।
अर्कार्किभौमयुक्ते भे व्यतीपातहते न हि ॥ १४ ॥
सौम्यं पित्र्यञ्च वायव्यं सावित्रं रोहिणी तथा।

---

१ वैवाहिकेऽन्हे इति ख॰, ङ॰, ञ॰, ट॰ च।
२ वाद्यैरिति ग॰, घ॰, ञ॰ च।

उत्तरात्रितयं मूलं मैत्रं पौष्णं विवाहभं ॥ १५ ॥
मानुषाख्यलग्नं मानुषाख्यांशकः शुभः ।
तृतीये च तथा षष्ठे दशमैकादशेऽष्टमे ॥ १६ ॥
अर्कार्किचन्द्रतनयाः प्रशस्ता न कुजोऽष्टमः ।
सप्तान्त्याष्टमवर्गेषु शेषाः शस्ता ग्रहोत्तमाः ॥ १७ ॥
तेषामपि तथा मध्यात् षष्ठः शुक्रो न शस्यते ।
वैवाहिके भे कर्त्तव्या तथैव च चतुर्थिका ॥ १८ ॥
न दातव्या ग्रहास्तत्र चतुराद्यास्तथैकगाः ।
पर्व्ववर्जं स्त्रियं गच्छेत् सत्या दत्ता सदा रतिः ॥ १९ ॥

इत्याग्नेये महापुराणे विवाहो नाम चतुःपञ्चाशदधिकशततमोऽध्यायः ॥

---

## अथ पञ्चपञ्चाशदधिकशततमोऽध्यायः ।

### आचारः ।

पुष्कर उवाच । ब्राह्मे मुहूर्त्ते चोत्थाय विष्ण्वादीन् दैवतान् स्मरेत् ।
उभे मूत्रपुरीषे तु दिवा कुर्य्यादुदङ्मुखः ॥ १ ॥
रात्रौ च दक्षिणे कुर्य्यादुभे सन्ध्ये यथा दिवा ।
न मार्गादौ जले वीथ्यां सतृणायां सदाचरेत् ॥ २ ॥

शौचं कृत्वा मृदाचम्य भक्षयेद्दन्तधावनं ।
नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणं ॥ ३ ॥
क्रियास्नानं तथा षष्ठं षोढास्नानं प्रकीर्त्तितं ।
अस्नातस्याफलं कर्म्म प्रातःस्नानं चरेत्ततः ॥ ४ ॥
भूमिष्ठमुद्धृतात् पुण्यं ततः प्रस्रवणोदकं ।
ततोऽपि सारसं पुण्यं तस्मान्नादेयमुच्यते ॥ ५ ॥
तीर्थतोयं ततः पुण्यं गाङ्गं पुण्यन्तु सर्वतः ।
संशोधितमलः पूर्व्वं निमग्नय जलाशये ॥ ६ ॥
उपस्पृश्य ततः कुर्य्यादम्भसः परिमार्जनं ।
हिरण्यवर्णास्तिसृभिः शन्नो देवीति चाप्यथ ॥ ७ ॥
आपोहिष्ठेति तिसृभिरिदमापस्तथैव च ।
ततो जलाशये मग्नः कुर्य्यादन्तर्जलं जपं ॥ ८ ॥
तत्राघमर्षणं सूक्तं द्रुपदां वा तथा जपेत् ।
युञ्जते मन इत्येवं सूक्तं वाप्यथ पौरुषं ॥ ८ ॥
गायत्रीं तु विशेषेण अघमर्षणसूक्तके ।
देवता भाववृत्तस्तु ऋषिश्चैवाघमर्षणः ॥ १० ॥
छन्दश्चानुष्टुभं तस्य भाववृत्तो हरिः स्मृतः ।
आपीड़मानः शाटीं तु देवतापितृतर्पणं(१) ॥ ११ ॥
पौरुषेण तु सूक्तेन ददेच्चैवोदकाञ्जलिं ।
ततोऽग्निहवनं(२) कुर्य्याद्दानं दत्वा(३) तु शक्तितः ॥ १२ ॥

---

१ तत्राघमर्षणमित्यादिः देवतापितृतर्पं-इत्यन्तः पाठः ञ॰ पुस्तके नास्ति । २ ततोऽग्निहवनमिति ख॰, ङ॰ च । ३ दौर्षं दत्वेति ञ॰ ।

ततः समभिगच्छेत योगक्षेमार्थमीश्वरं ।
आसनं शयनं यानं जायाऽपत्यकमण्डलुः ॥ १३ ॥
आत्मनः शुचिरेतानि परेषां न शुचिर्भवेत् ।
भाराक्रान्तस्य गुर्व्विण्याः पन्था देयो गुरुष्वपि ॥ १४ ॥
न पश्येच्चार्कमुद्यन्तमास्तं यान्तं न चाम्भसि ।
नेक्षेन्नग्नां स्त्रियं कूपं शूनास्थानमघोधिनं ॥ १५ ॥
कार्पासास्थि तथा भस्म नाक्रामेद्यच्च कुत्सितं ।
अन्तःपुरं वित्तगृहं परदौत्यं व्रजेन्न हि(१) ॥ १६ ॥
नारोहेद्विषमां नावन्न वृक्षं न च पर्वतं ।
अर्थायतनशास्त्रेषु तथैव स्यात् कुतूहली ॥ १७ ॥
लोष्टमर्द्दी तृणच्छेदी नखखादी विनश्यति ।
मुखादिवादनं नेच्छेद्विना दीपं न रात्रिगः(२) ॥ १८ ॥
नाद्वारेण विशेद्वेश्म न च वक्त्रं विरागयेत् ।
कथाभङ्गं न कुर्व्वीत न च वासोविपर्य्ययं ॥ १९ ॥
भद्रं भद्रमिति ब्रूयान्नानिष्टं कीर्त्तयेत् क्वचित् ।
पालाशमासनं वर्ज्यं देवादिच्छायया(३) व्रजेत् ॥ २० ॥
न मध्ये पूज्ययोर्यायात् नोच्छिष्टस्तारकादिदृक् ।
नद्यामन्यां नदीं ब्रूयान्न कण्डूयेद्द्विहस्तकं ॥ २१ ॥
असन्तर्प्य पितॄन् देवान्नदीपारञ्च न व्रजेत् ।
मलादि प्रक्षिपेन्नाप्सु(४) न नग्नः स्नानमाचरेत् ॥ २२ ॥

---

१ परभुक्तो अंश्च हि इति ञ० ।
२ लोष्टमर्द्दीत्यादि, रात्रिग इत्यन्तः पाठः, ञ० पुस्तके नास्ति ।
३ देवादिच्छाययेति ख०, छ०, ञ० च ।
४ मलादि सम्प्रक्षिपेदप्सु इति ञ०, ट० ।

ततः समभिगच्छेत योगक्षेमार्थमीश्वरं ।
स्वजनात्मनापनयेत् खरादिक-रजस्त्यजेत् ॥ २३ ॥
हीनाचारवहसेत् गच्छेन्नादेशे निवसेच्च तैः ।
वैद्यराजनदीहीने म्लेच्छस्त्रीबहुनायके ॥ २४ ॥
रजस्वलादिपतितैर्न भाषेत् केशवं स्मरेत् ।
नासंवृतमुखः कुर्य्याद्धासं(१) जृम्भां तथा क्षुतं ॥ २५ ॥
प्रभोरप्यवमानं स्वङ्गोपयेद्वचनं बुधः ।
इन्द्रियाणां नानुकूली वेगरोधं न कारयेत् ॥ २६ ॥
नोपेक्षितव्यो व्याधिः स्याद्रिपुरल्पोऽपि(२) भार्गव ।
रथ्यातिगः सदाचामेत्(३) बिभृयाद्वाग्निवारिणी ॥ २७ ॥
न हुङ्कुर्य्याच्छिवं पूज्यं पादं पादेन नाक्रमेत् ।
प्रत्यक्षं वा परोक्षं वा कस्य चिन्नाप्रियं वदेत् ॥ २८ ॥
वेदशास्त्रनरेन्द्रर्षिदेवनिन्दां विवर्जयेत् ।
स्त्रीणामीर्षा(४) न कर्त्तव्या विश्वासन्तासु वर्जयेत् ॥ २९ ॥
धर्म्मश्रुतिं देवरतिं(५) कुर्य्याद्धर्म्मादि नित्यशः(६) ।
सोमस्य पूजां जन्मर्क्षे विप्रदेवादिपूजनं ॥ ३० ॥

---

१ कुर्य्याद्धार्य्यमिति ख०, ङ० च ।
२ रिपुर्वन्योपि इति ख० ।
३ समाचामेदिति ख० ।
४ स्त्रीणामिर्ष्येति ख० ।
५ देवरतिमिति ग०, घ०, ङ०, ज०, ट० च । वेदरतिमिति ख०, क० च ।
६ भद्र भद्रमिति शूद्रादित्यादि, कुर्य्याद्धर्म्मादि नित्यशः इत्यन्तः पाठः ख० पुस्तके नास्ति ।

ततः समभिगच्छेत योगक्षेमार्थमीश्वरं ।
आसनं शयनं यानं जायाऽपत्यकमण्डलुः ॥ १३ ॥
आत्मनः शुचिरेतानि परेषां न शुचिर्भवेत् ।
भाराक्रान्तस्य गुर्व्विण्याः पन्था देयो गुरुष्वपि ॥ १४ ॥
न पश्येच्चार्कमुद्यन्तमस्तं यान्तं न चाम्भसि ।
नेक्षेतनग्नां स्त्रियं कूपं शूनास्थानमघोघिनं ॥ १५ ॥
कार्पासास्थि तथा भस्म नाक्रामेद् यच्च कुत्सितं ।
अन्तःपुरं वित्तगृहं परदौत्यं व्रजेन्न हि(१) ॥ १६ ॥
नारोहेद्विषमां नावं न वृक्षं न च पर्वतं ।
अर्थायतनशास्त्रेषु तथैव स्यात् कुतूहली ॥ १७ ॥
लोष्टमर्दी तृणच्छेदी नखखादी विनश्यति ।
मुखादिवादनं नेहेद् विना दीपं न रात्रिगः(२) ॥ १८ ॥
नाद्वारेण विशेद्वेश्म न च वक्त्रं विरागयेत् ।
कथाभङ्गं न कुर्व्वीत न च वासोविपर्य्ययं ॥ १९ ॥
भद्रं भद्रमिति ब्रूयान्नानिष्टं कीर्त्तयेत् क्वचित् ।
पालाशमासनं वर्ज्यं देवादिच्छायया(३) व्रजेत् ॥ २० ॥
न मध्ये पूज्ययोर्यायात् नोच्छिष्टस्तारकादिदृक् ।
नद्यान्नान्यां नदीं ब्रूयान्न कण्डूयेद् द्विहस्तकं ॥ २१ ॥
असन्तर्प्य पितॄन् देवान्नदीपारञ्च न व्रजेत् ।
मलादि प्रक्षिपेन्नाप्सु(४) न नग्नः स्नानमाचरेत् ॥ २२ ॥

---

१ परद्वारं व्रजेत हि इति ज० ।
२ लोष्टमर्दीत्यादि, रात्रिगः इत्यन्तः पाठः ञ० पुस्तके नास्ति ।
३ देवादिच्छायायेति ख०, ङ०, ञ० च ।
४ मलादि चैवपेत्राप्सु इति ग०, ट०

ततः समभिगच्छेत योगक्षेमार्थमीश्वरं ।
स्वजवाम्भनापनयेत् खरादिक-रजस्त्यजेत् ॥ २३ ॥
हीनाधावहसेत् गच्छेन्नादेशे नियसेच्च तैः ।
वैद्यराजनदीहीने म्लेच्छस्त्रीबहुनायके ॥ २४ ॥
रजस्वलादिपतितैर्न भाषेत् केशवं स्मरेत् ।
नासंवृतमुखः कुर्य्याद्धासं(¹) जृम्भां तथा क्षुतं ॥ २५ ॥
प्रभोरप्यवमानं स्वङ्गोपयेद्वचनं बुधः ।
इन्द्रियाणां नानुकूली वेगरोधं न कारयेत् ॥ २६ ॥
नोपेक्षितव्यो व्याधिः स्याद्रिपुरल्पोऽपि(²) भार्गव ।
रथ्यातिगः सदाचामेत्(³) बिभृयाच्चाग्निवारिणी ॥ २७ ॥
न हुङ्कुर्य्याच्छिवं पूज्यं पादं पादेन नाक्रमेत् ।
प्रत्यक्षं वा परोक्षं वा कस्य चिन्नाप्रियं वदेत् ॥ २८ ॥
वेदशास्त्रनरेन्द्रर्षिदेवनिन्दां विवर्जयेत् ।
स्त्रीणामीर्षा(⁴) न कर्त्तव्या विश्वासन्तासु वर्जयेत् ॥२९ ॥
धर्म्मश्रुतिं देवरतिं(⁵) कुर्य्याद्धर्म्मादि नित्यशः(⁶) ।
सोमस्य पूजां जन्मर्क्षे विप्रदेवादिपूजनं ॥ ३० ॥

---

१ कुर्य्याद्दास्यमिति क०, ख० च।
२ रिपुर्व्वंशोऽपि इति ग०।
३ धमाचामेदिति ख०।
४ स्त्रीणामिर्ष्येति ख०।
५ देवमतिमिति ग०, घ०, ङ०, ज०, झ० च। वेदमतिमिति क०, ख० च।
६ अद्य अद्यमिति मूलादिन्यादि, कुर्य्याद्धर्म्मादि नित्यशः इत्यंश पाठ क० पुस्तके नास्ति।

षष्ठीचतुर्दश्यष्टम्यामभ्यङ्गं वर्जयेत्तथा।
दूराद्गृहान् मूत्रविष्ठे नोत्तमैर्वैरमाचरेत् ॥ ३१ ॥

इत्याग्नेये महापुराणे आचाराध्यायो नाम पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥

---

## अथ षट्पञ्चाशदधिकशततमोऽध्यायः ।

—:०:—

### द्रव्यशुद्धिः ।

पुष्कर उवाच । द्रव्यशुद्धिं प्रवक्ष्यामि पुनःपाकेन मृण्मयं ।
शुद्धेत् मूत्रपुरीषाद्यैः स्पृष्टन्ताम्रं सुवर्णकं ॥ १ ॥
आवर्त्तितञ्चान्यथा तु वारिणाम्लेन ताम्रकं।
क्षारेण कांस्यलोहानां मुक्तादेः क्षालनेन तु ॥ २ ॥
अब्जानां(१) चैव भाण्डानां सर्वस्याश्ममयस्य च ।
शाकरज्जुमूलफलवैदलानां तथैव च ॥ ३ ॥
मार्जनाद्यज्ञपात्राणां पाणिना यज्ञकर्मणि ।
उष्णाम्बुना सस्नेहानां शुद्धिः सम्मार्जनाद्गृहे ॥ ४ ॥

---

१ दृषदामिति ङ० ।

शोधनाम्भुक्षणादक्ते(१) मृत्तिकाद्भिर्विशोधनं।
बहुर्वस्ते प्रोक्षणाच्च दारवाणाञ्च तक्षणात् ॥ ५ ॥
प्रोक्षणात् संहतानान्तु द्रवाणाञ्च तथोत्प्लवात्।
शयनासनयानानां शूर्पस्य शकटस्य च ॥ ६ ॥
शुद्धिः सम्प्रोक्षणाज् ज्ञेया पलालेन्धनयोस्तथा।
सिद्धार्थकानाङ्कल्केन शृङ्गदन्तमयस्य च ॥ ७ ॥
गोवालैः पलपात्राणामस्थ्नां स्याच्छृङ्गवत्तथा।
निर्यासानां गुडानाञ्च लवणानां च शोषणात् ॥ ८ ॥
कुसुम्भकुसुमानाञ्च ऊर्णाकार्पासयोस्तथा।
शुद्धनदीगतं तोयं पुण्यन्तद्वत् प्रसारितं ॥ ९ ॥
मुखवर्जञ्च गौः शुद्धा शुद्धमश्वाजयोर्मुखं।
नारीणाञ्चैव वत्सानां शकुनीनां शुनो मुखं ॥ १० ॥
मुखैः प्रस्रवणे वृत्ते मृगयायां सदा शुचि।
भुक्त्वा क्षुत्वा तथा सुप्त्वा पीत्वा चाम्भो विगाह्य च ॥११॥
रथ्यामाक्रम्य चाचामेद्वासो विपरिधाय च।
मार्जारश्चङ्क्रमाच्छुद्धश्चतुर्थेऽह्नि रजस्वला ॥ १२ ॥
स्नाता स्त्री पञ्चमे योग्या दैवे पित्र्ये च कर्मणि।
पञ्चापाने दशैकस्मिन्नुभयोः सप्त मृत्तिकाः ॥ १३ ॥
एकां लिङ्गे मृदं दद्यात् करयोस्त्रिद्विमृत्तिकाः।
ब्रह्मचारिवनस्थानां यतीनाञ्च चतुर्गुणं ॥ १४ ॥
श्रीफलैरंशुपट्टानां क्षौमाणाङ्गौरसर्षपैः।

१ शोधनाम्भुक्षणादक्ते इति घ०, ञ० च।

षष्ठीचतुर्दश्यष्टम्यामभ्यङ्गं वर्जयेत्तथा।
दूराद्गृहान् मूत्रविष्ठे नोत्तमैर्वैरमाचरेत् ॥ ३१ ॥

इत्याग्नेये महापुराणे आचाराध्यायो नाम पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥

---

## अथ षट्पञ्चाशदधिकशततमोऽध्यायः।



### द्रव्यशुद्धिः।

पुष्कर उवाच। द्रव्यशुद्धिं प्रवक्ष्यामि पुनःपाकेन मृण्मयं।
शुद्ध्येन्न मूत्रपुरीषाद्यैः स्पृष्टन्ताम्रं सुवर्णकं ॥ १ ॥
आवर्त्तितञ्चान्यथा तु वारिणाम्लेन ताम्रकं।
क्षारेण कांस्यलोहानां मुक्तादेः क्षालनेन तु ॥ २ ॥
अब्जानां(१) चैव भाण्डानां सर्वस्याश्ममयस्य च।
शाकरज्जुमूलफलवैदलानां तथैव च ॥ ३ ॥
मार्जनाद्यज्ञपात्राणां पाणिना यज्ञकर्मणि।
उष्णाम्बुना सस्नेहानां शुद्धिः सम्मार्जनाद्गृहे ॥ ४ ॥

---

१ दृषदामिति ष०।

शोधनाभ्युक्षणाद्वस्ते(१) मृत्तिकाद्भिर्विशोधनं।
बहुवस्त्रे प्रोक्षणाच्च दारवाणाञ्च तक्षणात्॥ ५॥
प्रोक्षणात् संहतानान्तु द्रवाणाञ्च तथोत्प्लवात्।
शयनासनयानानां शूर्पस्य शकटस्य च॥ ६॥
शुद्धिः सम्प्रोक्षणाज् ज्ञेया पलालेन्धनयोस्तथा।
सिद्धार्थकानाङ्कल्केन शृङ्गदन्तमयस्य च॥ ७॥
गोवालैः फलपात्राणामस्थ्नां स्याच्छृङ्गवत्तथा।
निर्यासानां गुडानाञ्च लवणानां च शोषणात्॥ ८॥
कुसुम्भकुसुमानाञ्च ऊर्णाकार्पासयोस्तथा।
शुद्धं नदीगतं तोयं पुण्यन्तद्वत् प्रसारितं॥ ९॥
मुखवर्ज्यञ्च गौः शुद्धा शुद्धमश्वाजयोर्मुखं।
नारीणाञ्चैव वत्सानां शकुनीनां शुनो मुखं॥ १०॥
मुखैः प्रस्रवणे वृत्ते मृगयायां सदा शुचि।
भुक्त्वा क्षुत्वा तथा सुप्त्वा पीत्वा चाम्भो विगाह्य च॥११॥
रथ्यामाक्रम्य चाचामेद्वासो विपरिधाय च।
मार्जारश्चङ्क्रमाच्छुद्धश्चतुर्थेऽह्नि रजस्वला॥ १२॥
स्नाता स्त्री पञ्चमे योग्या दैवे पित्र्ये च कर्मणि।
पञ्चापाने दशैकस्मिन्नुभयोः सप्त मृत्तिकाः॥ १३॥
एकां लिङ्गे मृदं दद्यात् करयोस्तिस्रिमृत्तिकाः।
ब्रह्मचारिवनस्थानां यतीनाञ्च चतुर्गुणं॥ १४॥
श्रीफलैरंशुपट्टानां क्षौमाणाङ्गौरसर्षपैः।

१ शोधनाम्भ्युक्षणाद्वस्ते इति ख०, ङ० च।

शुद्धिः पर्युक्ष्य तोयेन मृगलोम्नां प्रकीर्त्तिता ॥ १५ ॥
पुष्पाणाञ्च फलानाञ्च प्रोक्षणाज्जलतोऽखिलं।

इत्याग्नेये महापुराणे द्रव्यशुद्धिर्नाम षट्पञ्चाशदधिक-
शततमोऽध्यायः ॥

---

## अथ सप्तपञ्चाशदधिकशततमोऽध्यायः।

—:o:—

### शावाशौचादिः।

पुष्कर उवाच। प्रेतशुद्धिं प्रवक्ष्यामि सूतिकाशुद्धिमेव च।
दशाहं शावमाशौचं सपिण्डेषु विधीयते ॥ १ ॥
जनने च तथा शुद्धिर्ब्राह्मणानां भृगूत्तम।
द्वादशाहेन राजन्यः पक्षाद्वैश्योऽथ मासतः ॥ २ ॥
शूद्रोऽनुलोमतो दासे स्वामितुल्यन्त्वशौचकं।
षड्भिस्त्रिभिरथैकेन क्षत्रविट्शूद्रयोनिषु ॥ ३ ॥
ब्राह्मणः शुद्धिमाप्नोति क्षत्रियस्तु सदैव च।
विट्शूद्रयोनेः शुद्धिः स्यात् क्रमात् परशुराम क ॥ ४ ॥
षड्रात्रेण त्रिरात्रेण षड्भिः शूद्रे तथा विश.।

आदन्तजननात् सद्य आचूडान्नैशिकी श्रुतिः(१) ॥ ५ ॥
त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परं।
ऊनत्रैवार्षिके शूद्रे पञ्चाहाच्छुद्धिरिष्यते ॥ ६ ॥
द्वादशाहेन शुद्धिः स्यादतीते वत्सरत्रये।
गतैः संवत्सरैः षड्भिः शुद्धिर्मासेन कीर्त्तिता ॥ ७ ॥
स्त्रीणामकृतचूड़ानां विशुद्धिर्नैशिकी स्मृता।
तथा च कृतचूड़ानां त्र्यहाच्छुद्ध्यन्ति बान्धवाः ॥ ८ ॥
विवाहितासु नाशौचं पितृपक्षे विधीयते।
पितुर्गेहे प्रसूतानां विशुद्धिर्नैशिकी स्मृता ॥ ९ ॥
सूतिका दशरात्रेण शुद्धिमाप्नोति नान्यथा।
विवाहिता हि चेत् कन्या म्रियते पितृवेश्मनि ॥ १० ॥
तस्यास्त्रिरात्राच्छुद्ध्यन्ति बान्धवा नात्र संशयः।
समानं लघ्वशौचन्तु प्रथमेन समापयेत् ॥ ११ ॥
असमानं द्वितीयेन धर्मराजवचो यथा।
देशान्तरस्थः श्रुत्वा तु कुल्यानां मरणोद्भवौ ॥ १२ ॥
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत्।
अतीते दशरात्रे तु त्रिरात्रमशुचिर्भवेत् ॥ १३ ॥
तथा संवत्सरेऽतीते स्नात एव विशुद्ध्यति।
मातामहे तथाऽतीते आचार्य्ये च तथा मृते ॥ १४ ॥
रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशोधनं।
सपिण्डे ब्राह्मणे वर्णाः सर्व्व एवाविशेषतः ॥ १५ ॥

---

१ आचूडान्नैशिकी भवति क०।

दशरात्रेण शुद्धास्ति द्वादशाहेन भूमिपः।
वैश्याः पञ्चदशाहेन शूद्रा मासेन भार्गव ॥ १६ ॥
उच्छिष्टसन्निधावेकं तथा पिण्डं निवेदयेत्।
कीर्त्तयेच्च तथा तस्य नामगोत्रे समाहितः ॥ १७ ॥
भुक्तवत्सु द्विजेन्द्रेषु पूजितेषु धनेन च(१)।
विसृष्टाक्षततोयेषु गोत्रनामानुकीर्त्तनैः ॥ १८ ॥
चतुरङ्गुलविस्तारं तत्खातन्तावदन्तरं।
वितस्तिदीर्घं कर्त्तव्यं विकर्षूणां तथा त्रयं ॥ १९ ॥
विकर्षूणां समीपे च ज्वालयेज् ज्वलनत्रयं।
सोमाय वह्नये राम यमाय च समासतः ॥ २० ॥
जुहुयादाहुतीः सम्यक् सर्व्वत्रैव चतुस्त्रयः।
पिण्डनिर्व्वपणं कुर्य्यात् प्राग्वदेव पृथक् पृथक् ॥ २१ ॥
अन्नेन दध्ना मधुना तथा मांसेन पूरयेत्।
मध्ये चेदधिमासः स्यात् कुर्य्यादभ्यधिकन्तु तत् ॥ २२ ॥
अथवा द्वादशाहेन सर्व्वमेतत् समापयेत्।
संवत्सरस्य मध्ये च यदि स्यादधिमासकः ॥ २३ ॥
तदा द्वादशके श्राद्धे कार्य्यं तदधिकं भवेत्।
संवत्सरे समाप्ते तु श्राद्धं श्राद्धवदाचरेत् ॥ २४ ॥
प्रेताय तत ऊर्द्धं च तस्यैव पुरुषत्रये।
पिण्डान् विनिर्वपेत्तद्वच्चतुरस्तु समाहितः ॥ २५ ॥
सम्पूज्य दत्वा पृथिवी समाना इति चाप्यथ।

---

१ धनेन चेति क०, ख०, ग०, घ०, ङ०, ज०, झ० च।

योजयेत् प्रेतपिण्डं तु पिण्डेष्वन्येषु भार्गव ॥ २६ ॥
प्रेतपात्रं च पात्रेषु तथैव विनियोजयेत् ।
पृथक् पृथक् प्रकर्त्तव्यं कर्म्मैतत् कर्म्मपात्रके ॥ २७ ॥
मन्त्रवर्ज्जमिदं कर्म्म शूद्रस्य तु विधीयते ।
सपिण्डीकरणं स्त्रीणां कार्य्यमेव तदा भवेत्(१) ॥ २८ ॥
श्राद्धं कुर्य्याच्च प्रत्यब्दं प्रेते कुम्भान्नमब्दकम् ।
गङ्गायाः सिकता धारा यथा वर्षति वासवे ॥ २९ ॥
शक्या गणयितुं लोके न त्वतीताः पितामहाः ।
काले सततगे स्थैर्य्यं नास्ति तस्मात् क्रियां चरेत् ॥ ३० ॥
देवत्वे यातनास्थाने प्रेतः श्राद्धं कृतं लभेत् ।
नोपकुर्य्यान्नरः शोचन् प्रेतस्यात्मन एव वा ॥ ३१ ॥
भृग्वग्निपाशकाम्भोभिर्मृतानामात्मघातिनाम् ।
पतितानां च नाशौचं विद्युच्छस्त्रहताश्च ये ॥ ३२ ॥
यतिव्रतिब्रह्मचारिनृपकारुकदीक्षिताः ।
राजाज्ञाकारिणो(२) ये च स्नायाद्वै प्रेतगाम्यपि ॥ ३३ ॥
मैथुने कटधूमे च सद्यः स्नानं विधीयते ।
द्विजं न निर्हरेत्(३) प्रेतं शूद्रेण तु कथञ्चन ॥ ३४ ॥
न च शूद्रं द्विजेनापि तयोर्दोषो हि जायते(४) ।
अनाथविप्रप्रेतस्य वहनात् स्वर्गलोकभाक् ॥ ३५ ॥

---

१ कार्य्यमेवं यथा भवेदिति ख०, ग०, ज० घ। कार्य्यमेनमथा भवेदिति ङ०।
२ राजाज्ञाकारका इति ट०।
३ न निर्हरेदिति घ०।
४ तयोर्दोषोऽभिजायते इति ट०।

सङ्ग्रामे जयमाप्नोति प्रेतेऽनाथे च काष्ठदः ।
सङ्कलय्य बान्धवं प्रेतमपसव्येन तां चितिं ॥ ३६ ॥
परिक्रम्य ततः स्नानं कुर्य्युः सर्व्वे सवाससः ।
प्रेताय च तथा दद्युस्त्रींस्त्रींश्चैवोदकाञ्जलीन् ॥ ३७ ॥
द्वार्य्यश्मनि पदं दत्वा प्रविशेयुस्तथा गृहं ।
अक्षतान्निक्षिपेदग्नौ निम्बपत्रं विदश्य च ॥ ३८ ॥
पृथक् शयीरन् भूमौ च क्रीतलब्धाशनो भवेत् ।
एकः पिण्डो दशाहे तु श्मश्रुकर्म्मकरः शुचि. ॥ ३९ ॥
सिद्धार्थकैस्तिलैर्व्विद्वान् मर्व्वेहासोपरं दधत्(¹) ।
अजातदन्ते तनये शिशौ गर्भस्रुते तथा ॥ ४० ॥
कार्य्यो नैवाग्निसंस्कारो नैव चास्योदकक्रिया ।
चतुर्थे च दिने कार्य्यस्तथास्थ्नां चैव सञ्चयः ॥ ४१ ॥
अस्थिसञ्चयनादूर्द्ध्वमङ्गस्पर्शो विधीयते ।

इत्याग्नेये महापुराणे स्रावाशौचं नाम सप्तपञ्चाशदधिकशततमोऽध्याय. ॥

## अथाष्टपञ्चाशदधिकशततमोऽध्याय ।



स्रावाद्यशौच ।

पुष्कर उवाच । स्रावाशौचं प्रवक्ष्यामि मन्वादिमुनिसम्मतं ।

१ सिद्धार्थकैस्तिलैर्व्विद्वान् मजदाशोपरं पर्व्वैर्तिलैर्व्विद्वान् स्नापाद्दाशोपरं दधदिति ख०, क०, ज० च । सिद्धा दधदिति ग०, ङ० च ।

रात्रिभिर्म्मासतुल्याभिर्गर्भस्रावे त्र्यहेण वा ॥ १ ॥
चातुर्म्मासिकपाते च दशाहं पञ्चमासतः ।
राजन्ये च चतूरात्रं वैश्ये पञ्चाहमेव च ॥ २ ॥
अष्टाहेन तु शूद्रस्य द्वादशाहादतः परं ।
स्त्रीणां विशुद्धिरुदिता(१) स्नानमात्रेण वै पितुः ॥ ३ ॥
न स्नानं हि सपिण्डे स्यात्त्रिरात्रं सप्तमाष्टयोः ।
सद्यः शौचं सपिण्डानामादन्तजननात्तथा ॥ ४ ॥
आचूडादेकरात्रं स्यादाव्रताच्च त्रिरात्रकं ।
दशरात्रं भवेदस्मान्मातापित्रोस्त्रिरात्रकं ॥ ५ ॥
अजातदन्ते तु मृते कृतचूडेऽर्भके तथा ।
प्रेते न्यूने त्रिभिर्व्वर्षैर्मृते शुद्धिस्तु नैशिकी ॥ ६ ॥
द्व्यहेण क्षत्रिये शुद्धिस्त्रिभिर्वैश्ये मृते तथा ।
शुद्धिः शूद्रे पञ्चभिः स्यात् प्राग्विवाहाद् द्विषट्त्वतः(२)॥७॥
यत्र त्रिरात्रं विप्राणामशौचं सम्प्रदृश्यते ।
तत्र शूद्रे द्वादशाहः षण्नव क्षत्रवैश्ययोः ॥ ८ ॥
द्व्यब्दे नैवाग्निसंस्कारो मृते तन्निखनेद् भुवि ।
न चोदकक्रिया तस्य नाम्नि चापि कृते सति ॥ ८ ॥
जातदन्तस्य वा कार्य्या स्यादुपनयनाद्दश ।
एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः ॥ १० ॥
हीने हीनतरे चैव त्र्यहश्चतुरहस्तथा ।
पञ्चाहेनाग्निहीनस्तु दशाहाद्ब्राह्मणब्रुवः ॥ ११ ॥

---

१ विशुद्धि नविवेति ख०, ग०, ङ० च। २ द्विरयुक्तमिति ङ०।

क्षत्रियो नवसप्ताहाच्छुद्धो विप्रो गुणैर्युतः ।
दशाहात् सगुणो वैश्यो विंशाहाच्छूद्र एव च ॥ १२ ॥
द्व्याहाच्छुध्यते विप्रो द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ॥ १३ ॥
गुणोत्कर्षे दशाहाप्तौ त्र्यहमेकाहकं त्र्यहे ।
एकाहाप्तौ सद्यः शौचं सर्वत्रैवं समूहयेत् ॥ १४ ॥
दासान्तेवासिभृतकाः शिष्याश्चैकत्र वासिनः ।
स्वामितुल्यमशौचं स्यान्मृते पृथक् पृथग्भवेत् ॥ १५ ॥
मरणादेव कर्त्तव्यं संयोगो यस्य नाग्निभिः ।
दाहादूर्ध्वमशौचं स्याद्यस्य वैतानिको विधिः ॥ १६ ॥
सर्वेषामेव वर्णानां त्रिभागात् स्पर्शनं भवेत् ।
त्रिचतुःपञ्चदशभिः स्पृश्यवर्णाः क्रमेण तु ॥ १७ ॥
चतुर्थे पञ्चमे चैव सप्तमे नवमे तथा ।
अस्थिसञ्चयनं कार्यं वर्णानामनुपूर्व्वशः ॥ १८ ॥
अहस्त्वदत्तकन्यासु प्रदत्तासु त्र्यहं भवेत् ।
पक्षिणी संस्कृतास्वेव स्वस्रादिषु विधीयते ॥ १९ ॥
पितृगोत्रं कुमारीणां व्यूढानां भर्तृगोत्रता ।
जलप्रदानं पित्रे च उद्वाहे चोभयत्र तु ॥ २० ॥
दशाहोपरि पित्रोश्च दुहितुर्मरणे त्र्यहं ।
सद्यः शौचं सपिण्डानां पूर्वं चूडाकृतेर्द्विज ॥ २१ ॥
एकाहस्त्वाविवाहादूर्ध्वं हस्तोदकात् त्र्यहं ।
पक्षिणी भ्रातृपुत्रस्य सपिण्डानां च सद्यतः ॥ २२ ॥
दशाहाच्छुध्यते विप्रो जन्महानौ स्वयोनिषु ।

पक्षिस्त्रिभिरहैकेन क्षत्रविट्शूद्रयोनिषु ॥ २३ ॥
एतज् ज्ञेयं सपिण्डानां वक्ष्ये चानौरसादिषु।
अनौरसेषु पुत्रेषु भार्य्यास्वन्यगतासु च ॥ २४ ॥
परपूर्वासु च स्त्रीषु त्रिरात्राच्छुद्धिरिष्यते।
वृथासङ्करजातानां प्रव्रज्यासु च तिष्ठतां ॥ २५ ॥
आत्मनस्त्यागिनाञ्चैव निवर्त्ततोदकक्रिया।
मात्रैकया द्विपितरौ भ्रातरावन्यगामिनौ ॥ २६ ॥
एकाहः सूतके तत्र मृतके तु द्व्यहो भवेत्(१)।
सपिण्डानामशौचं हि समानोदकतां वदे ॥ २७ ॥
बाले देशान्तरस्थे च पृथक्पिण्डे च संस्थिते।
सवासा जलमाप्लुत्य सद्य एव विशुद्ध्यति ॥ २८ ॥
दशाहेन सपिण्डास्तु शुद्ध्यन्ति प्रेतसूतके।
त्रिरात्रेण सकुल्यास्तु स्नानात्(२) शुद्ध्यन्ति गोत्रिणः ॥२९॥
सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते।
समानोदकभावस्तु निवर्त्तताचतुर्दशात् ॥ ३० ॥
जन्मनामस्मृते वैतत् तत्परं गोत्रमुच्यते।
विगतन्तु विदेशस्थं शृणुयाद्यो ह्यनिर्द्दशं ॥ ३१ ॥
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत्।
अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत् ॥ ३२ ॥
संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुद्ध्यति।

---

१ मृतके तु द्व्यहो भवेदिति ख॰, ङ॰, ञ॰ च। मृतके तु तथा भवेदिति क॰।　२ स्नाना इति ख॰, ग॰, घ॰, ङ॰, छ॰, ञ॰ च।

मातुले पक्षिणी रात्रिः शिष्यर्त्विग्बान्धवेषु च ॥ ३३ ॥
मृते जामातरि प्रेते दौहित्रे भगिनीसुते(१) ।
श्यालके तत्सुते चैव स्नानमात्रं विधीयते ॥ ३४ ॥
मातामह्यां तथाचार्य्ये मृते मातामहे चाहं ।
दुर्भिक्षे राष्ट्रसम्पाते आगतायां तथापदि ॥ ३५ ॥
उपसर्गमृतानाञ्च दाहे ब्रह्मविदान्तथा ।
सत्रिव्रति(२)ब्रह्मचारिसङ्ग्रामे देशविप्लवे ॥ ३६ ॥
दाने यज्ञे विवाहे च सद्यः शौचं विधीयते ।
विप्रगोनृपहन्तृणामनुक्तं चात्मघातिनां ॥ ३७ ॥
असाध्यव्याधियुक्तस्य स्वाध्याये चाक्षमस्य च ।
प्रायश्चित्तमनुज्ञातमग्नितोयप्रवेशनं ॥ ३८ ॥
अपमानात्तथा(३) क्रोधात् स्नेहात्परिभवाद्भयात् ।
उद्बध्य म्रियते नारी पुरुषो वा कथञ्चन ॥ ३९ ॥
आत्मघाती चैकलक्षं वसेत्स नरके शुचौ ।
वृद्धः शौचस्मृतेर्लुप्तः परित्यजति यस्त्वसून् ॥ ४० ॥
त्रिरात्रं तत्र चाशौचं द्वितीये चास्थिसञ्चयं ।
तृतीये तूदकं कार्य्यं चतुर्थे श्राद्धमाचरेत् ॥ ४१ ॥
विद्युदग्निहतानाञ्च त्र्यहं शुद्धिः सपिण्डके(४) ।
पाषण्डाश्रिता भर्तृघ्नी नाशौचोदकगाः स्त्रियः ॥ ४२ ॥
पितृमात्रादिपाते तु चार्द्रवासा ह्युपोषितः ।

---

१ प्रेते, भगिनीसुत इत्यपि इति ट० । ङ०, ख०, ज० च ।

२ सत्रिव्रतीति ज० ।

३ अपमानाद्वैति ख०, ग०, घ०,

४ विद्युदादिहतानाञ्च त्र्यहाच्छुद्धिर्विधीयते इति ट० ।

अतीतेऽब्दे प्रकुर्वीत प्रेतकार्य्यं यथाविधि ॥ ४३ ॥
यः कश्चित्तु हरेत् प्रेतमसपिण्डं कथञ्चन ।
स्नात्वा सचेलः स्पृष्ट्वाग्निं घृतं प्राश्य विशुद्ध्यति ॥ ४४ ।
यद्यन्नमत्ति तेषान्तु दशाहेनैव शुद्ध्यति ।
अनदन्नन्नमह्नैव न वै तस्मिन् गृहे वसेत् ॥ ४५ ॥
अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ।
पदे पदे यज्ञफलं शुद्धिः स्यात् स्नानमात्रतः ॥ ४६ ॥
प्रेतीभूतं द्विजः शूद्रमनुगच्छंस्त्र्यहाच्छुचिः ।
मृतस्य बान्धवैः सार्द्धं कृत्वा च परिदेवनं ॥ ४७ ॥
वर्जयेत्तदहोरात्रं दानश्राद्धादि कामतः([१]) ।
शूद्रायाः प्रसवो गेहे शूद्रस्य मरणं तथा ॥ ४८ ॥
भाण्डानि तु परित्यज्य त्र्यहाद्भूलेपतः शुचिः ।
न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण नाययेत् ॥ ४९ ॥
नयेत् प्रेतं स्नापितञ्च पूजितं कुसुमैर्दहेत् ।
नग्नदेहं दहेन्नैव किञ्चिद्देहं परित्यजेत् ॥ ५० ॥
गोत्रजस्तु गृहीत्वा तु चितां चारोपयेत्तदा ।
आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः ॥ ५१ ॥
अनाहिताग्निरेकेन लौकिकेनापरस्तथा।
अस्मात् त्वमभिजातोऽसि त्वदयं जायतां पुनः ॥ ५२ ॥
असौ स्वर्गाय लोकाय सुखाग्निं प्रददेत्सुतः।
सकृत्प्रसिञ्चन्त्युदकं नामगोत्रेण बान्धवाः ॥ ५३ ॥

---

१ दानश्राद्धादिकर्म्म चेति ख० ।

एवं मातामहाचार्य्यप्रेतानाञ्चोदकक्रिया ।
काम्योदकं सखिप्रेतस्वस्त्रीयश्वशुरर्त्विजां ॥ ५४ ॥
अपो नः शोशुचदघं दशाहञ्च सुतोऽर्पयेत् ।
ब्राह्मणे दशपिण्डाः स्युः क्षत्रिये द्वादश स्मृताः ॥ ५५ ॥
वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत् प्रकीर्त्तिताः ।
पुत्रो वा पुत्रिकान्यो वा पिण्डं दद्याच्च पुत्रवत् ॥ ५६ ॥
विदश्य निम्बपत्राणि नियतो द्वारि वेश्मनः ।
आचम्य चाग्निमुदकं गोमयं गौरसर्षपान् ॥ ५७ ॥
प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः ।
अक्षारलवणान्नाः स्युर्निर्मांसा भूमिशायिनः ॥ ५८ ॥
क्रीतलब्धाशना: स्नाता आदिकर्त्ता दशाहकृत् ।
अभावे ब्रह्मचारी तु कुर्य्यात्पिण्डोदकादिकं ॥ ५९ ॥
यथेदं शावमाशौचं सपिण्डेषु विधीयते ।
जननेप्येवमेवं स्यान्निपुणां शुद्धिमिच्छतां ॥ ६० ॥
सर्वेषां शावमाशौचं मातापित्रोश्च सूतकं ।
सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः ॥ ६१ ॥
पुत्रजन्मदिने श्राद्धं कर्त्तव्यमिति निश्चितं ।
तदहस्तत्प्रदानार्थं गोहिरण्यादिवाससां ॥ ६२ ॥
मरणं मरणेनैव सूतकं सूतकेन तु ।
उभयोरपि यत् पूर्वं तेनाशौचेन शुद्ध्यति ॥ ६३ ॥
सूतके मृतकं चेत्स्यान् मृतके त्वथ सूतकं ।
तत्राधिकृत्य मृतकं शौचं कुर्य्यान्न सूतकं ॥ ६४ ॥
समानं लघ्वशौचन्तु प्रथमेन समापयेत् ।

असमानं द्वितीयेन धर्म्मराजवचो यथा ॥ ६५ ॥
शावान्तः शाव आयाति(१) पूर्व्वाशौचेन शुध्यति ।
गुरुणा लघु बाध्येत लघुना नैव तद्गुरु ॥ ६६ ॥
मृतके सूतके वापि रात्रिमध्येऽन्यदापतेत् ।
तच्छेषेणैव शुध्येरन् रात्रिशेषे द्व्यहाधिकात् ॥ ६७ ॥
प्रभाते यद्यशौचं स्याच्छुध्येरंश्च त्रिभिर्दिनैः ।
उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ॥ ६८ ॥
दानादि विनिवर्त्तेत भोजने कल्पमाचरेत् ।
अज्ञाते पातकं नाद्ये भोक्तुरेकमहोऽन्यथा(२) ॥ ६९ ॥

इत्याग्नेये महापुराणे स्नानाद्यशौचं नाम अष्टपञ्चाशदधिकशततमोऽध्यायः ॥

---

## अथैकोनषष्ट्यधिकशततमोऽध्यायः ।

—:o:—

### असंस्कृतादिशौचं ।

पुष्कर उवाच । संस्कृतस्यासंस्कृतस्य स्वर्गो मोक्षो हरिस्मृतेः ।
अस्थ्नां गङ्गाम्भसि क्षेपात् प्रेतस्याभ्युदयो भवेत् ॥ १ ॥

---

१ आघात इति ख०, ङ० च ।

२ असमेषे कर्मेव स्यादित्यादि, भोक्तुरेकमहोऽन्यथेत्यन्तः पाठः ख०, ङ०, ञ०, पुस्तकत्रयेषु नास्ति ।

गङ्गातोये नरस्यास्थि यावत्तावद्दिवि स्थितिः ।
आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया ॥ २ ॥
तेषामपि तथा गाङ्गे तोयेऽस्थ्नां पतनं हितं ।
तेषां दत्तं जलं चान्नं गगने तत् प्रलीयते ॥ ३ ॥
अनुग्रहेण महता प्रेतस्य पतितस्य च ।
नारायणबलिः कार्यस्तेनानुग्रहमश्नुते ॥ ४ ॥
अक्षयः पुण्डरीकाक्षस्तत्र दत्तं न नश्यति ।
पतनात्त्रायते यस्मात् तस्मात् पात्रं जनार्दनः ॥ ५ ॥
पततां भुक्तिमुक्त्यादिप्रद एको हरिर्ध्रुवं ।
दृष्ट्वा लोकान् म्रियमाणान् सहायं धर्ममाचरेत् ॥ ६ ॥
मृतोऽपि बान्धवः शक्तो नानुगन्तुं नरं मृतं ।
जायावर्जं हि सर्वस्य याम्यः पन्था विभिद्यते(१) ॥ ७ ॥
धर्म एको(२) व्रजत्येनं यत्र क्वचन गामिनं ।
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकं ॥ ८ ॥
न हि प्रतीक्षते मृत्युः कृतं वास्य न वा कृतं ।
क्षेत्रापणगृहासक्तमन्यत्रगतमानसं ॥ ९ ॥
वृकीवोरणमासाद्य मृत्युरादाय गच्छति ।
न कालस्य प्रियः कश्चिद् द्वेष्यश्चास्य न विद्यते ॥ १० ॥
आयुष्ये कर्मणि क्षीणे प्रसह्य हरते जनं ।
नाप्राप्तकालो म्रियते विद्धः शरशतैरपि ॥ ११ ॥
कुशाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ।

---

१ पन्था विभज्यते इति ख० ।    २ धर्मं एवेति ग० ।

श्रौपधानि(१) न मन्वाद्याम्नायन्ते मत्युनान्वितं ॥ १२ ॥
वत्सवत् प्राकृतं कर्म कर्त्तारं विन्दति ध्रुवं।
अव्यक्तादि व्यक्तमध्यमव्यक्तनिधनं जगत् ॥ १३ ॥
कौमारादि यथा देहे तथा देहान्तरागमः।
नवमन्यद्यथा वस्त्रं गृह्णात्येवं शरीरकं ॥ १४ ॥
देही नित्यमवध्योऽयं यतः शोकं ततस्त्यजेत्।

इत्याग्नेये महापुराणे शौचं नामैकोनषष्ट्यधिकशततमोऽध्यायः॥

---

## अथ षष्ट्यधिकशततमोऽध्यायः।

—:o:—

वानप्रस्थाश्रमः।

पुष्कर उवाच। वानप्रस्थयतीनाञ्च(२) धर्मं वक्ष्येऽधुना शृणु।
जटित्वमग्निहोत्रित्वं भूशय्याजिनधारणं ॥ १ ॥
वने वासः पयोमूलनीवारफलवृत्तिता।
प्रतिग्रहनिवृत्तिश्च त्रिःस्नानं ब्रह्मचारिता ॥ २ ॥
देवातिथीनां पूजा च धर्मोऽयं वनवासिनः।

---

१ श्रौपधादीति क०। २ [illegible]

गृही ह्यपत्यापत्यञ्च दृष्ट्वारण्यं(१) समाश्रयेत् ॥ ३ ॥
तृतीयमायुषो भागमेकाकी वा सभार्य्यकः।
ग्रीष्मे पञ्चतपा नित्यं वर्षास्वभ्रावकाशिकः ॥ ४ ॥
आर्द्रवासाश्च हेमन्ते तपश्चोग्रञ्चरेद्बली(२)।
अपराहृत्तिमास्थाय व्रजेद्दिशमजिह्मगः(३) ॥ ५ ॥

इत्याग्नेये महापुराणे वानप्रस्थाश्रमो नाम षष्ट्यधिकशततमोऽध्यायः ॥

---

## अथैकषष्ट्यधिकशततमोऽध्यायः।

यतिधर्मः।

पुष्कर उवाच। यतिधर्मं प्रवक्ष्यामि ज्ञानमोक्षादिदर्शकं।
चतुर्थमायुषो भागं प्राप्य सङ्गात् परिव्रजेत्(४) ॥ १ ॥
यदह्नि विरजेद्धीरस्तदह्नि(५) च परिव्रजेत्।
प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणां ॥ २ ॥
आत्मन्यग्नीन् समारोप्य प्रव्रजेद्ब्राह्मणो गृहात्।

---

१ वृद्धाश्रममिति ङ०।
२ तपयोग मग्नि चरेदिति ङ०।
३ व्रजेद्दिशमजिह्मग इति ङ०।
४ सङ्गान् परित्यजेदिति ङ०।
५ विरजेदपि तदह्नि इति ङ०।

एक एव चरेन्नित्यं ग्राममन्नार्थमाश्रयेत् ॥ ३ ॥
उपेक्षकोऽसञ्चयिको मुनिर्ज्ञानसमन्वितः।
कपालं वृक्षमूलञ्च(१) कुचेलमसहायता ॥ ४ ॥
समता चैव सर्व्वस्मिन्नेतन्मुक्तस्य(२) लक्षणं।
नाभिनन्देत मरणं नाभिनन्देत जीवनं(२) ॥ ५ ॥
कालमेव प्रतीक्षेत निदेशं भृतको यथा।
दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् ॥ ६ ॥
सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत्।
अलावुदारुपात्राणि मृण्मयं वैणवं यतेः ॥ ७ ॥
विधूमे न्यस्तमुषले व्यङ्गारे भुक्तवज्जने।
वृत्ते शरावसम्पाते भिक्षां नित्यं यतिश्चरेत् ॥ ८ ॥
माधूकरमसङ्क्लिप्तं प्राक्प्रणीतमयाचितं।
तात्कालिकञ्चोपपन्नं भैक्षं पञ्चविधं स्मृतं ॥ ९ ॥
पाणिपात्री भवेद्वापि पात्रे पात्रात् समाचरेत्।
अवेक्षेत गतिं नृणां कर्म्मदोषसमुद्भवां ॥ १० ॥
शुद्धभावश्चरेद्धर्म्मं यत्र तत्राश्रमे रतः।
समः सर्व्वेषु भूतेषु न लिङ्गं धर्म्मकारणं ॥ ११ ॥
फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादकं।
न नामग्रहणादेव तस्य वारि प्रसीदति ॥ १२ ॥

---

१ वृक्षमूलानीति ख०, घ०, ङ०, ञ० च।　२ जीवितमिति ख०, घ०, ङ०, ड०, ञ० च।
, वृक्षमूलादि इति ट०।
१ एतद्द्वक्ष्येति ट०।

अजिह्मः षण्डकः पङ्गुरन्धो बधिर एव च ।
सद्‌भिश्च मुच्यते सङ्गिरज्ञानात् संसृतौ द्विजः ॥ १३ ॥
अह्नि रात्र्याञ्च यान् जन्तून् हिनस्त्यज्ञानतो यतिः ।
तेषां स्नात्वा विशुद्ध्यर्थं प्राणायामान् षडाचरेत्(१) ॥१४॥
अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनं ।
चर्मावनद्धं दुर्गन्धं पूर्णं मूत्रपुरीषयोः ॥ १५ ॥
जराशोकसमाविष्टं रोगायतनमातुरं ।
रजस्वलमनित्यञ्च भूतावासमिमन्त्यजेत् ॥ १६ ॥
धृतिः क्षमा दमोऽस्तेयं(२) शौचमिन्द्रियनिग्रहः ।
ह्रीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणं ॥ १७ ॥
चतुर्विधं भैक्षवस्तु कुटीरकबहूदके ।
हंसः परमहंसश्च यो यः पश्चात् स उत्तमः ॥ १८ ॥
एकदण्डी त्रिदण्डी वा(३) योगी मुच्येत बन्धनात् ।
अहिंसा सत्यमस्तेयं ब्रह्मचर्य्याऽपरिग्रहौ ॥ १९ ॥
यमाः पञ्चाथ नियमाः शौचं सन्तोषणन्तपः ।
स्वाध्यायेश्वरपूजा च पद्मकाद्यासनं यतिः(४) ॥ २० ॥
प्राणायामस्तु द्विविधः स गर्भोऽगर्भ एव च ।
जपध्यानयुतो गर्भो विपरीतस्त्वगर्भकः ॥ २१ ॥
प्रत्येकं त्रिविधः सोऽपि पूरकुम्भकरेचकैः ।
पूरणात् पूरको वायोर्निश्चलत्वाच्च कुम्भकः ॥ २२ ॥

---

१ षडाचरेदिति ख०, ग० च ।
२ दमोऽस्तेयमिति ङ० ।
३ त्रिदण्डी चेति ङ० ।
४ पद्मकाद्यासनं भवत् इति ट० ।

रेचनाद्रेचकः प्रोक्तो मात्राभेदेन च त्रिधा ।
द्वादशात्तु चतुर्विंशः षट्त्रिंशन्मात्रिकोऽपरः ॥ २३ ॥
तालो लघ्वक्षरो मात्रा प्रणवादि चरेच्छनैः ।
प्रत्याहारो जापकानां ध्यानमीश्वरचिन्तनं ॥ २४ ॥
मनोधृतिर्धारणा स्यात् समाधिर्ब्रह्मणि स्थितिः ।
अयमात्मा परं ब्रह्म सत्यं ज्ञानमनन्तकं ॥ २५ ॥
विज्ञानमानन्दं ब्रह्म तत्त्वमस्यहमस्मि तत् ।
परं ब्रह्म ज्योतिरात्मा वासुदेवो विमुक्त ओं ॥ २६ ॥
देहेन्द्रियमनोबुद्धिप्राणाहङ्कारवर्जितं ।
जाग्रत्स्वप्नसुषुप्त्यादिमुक्तं(१) ब्रह्म तुरीयकं ॥ २७ ॥
नित्यशुद्धबुद्धयुक्तसत्यमानन्दमद्वयं(२) ।
अहं ब्रह्म परं ज्योतिरक्षरं सर्वगं हरिः ॥ २८ ॥
योऽसावादित्यपुरुषः सोऽसावहमखण्ड ओं ।
सर्वारम्भपरित्यागी समदुःखसुखः क्षमी ॥ २९ ॥
भावशुद्धश्च ब्रह्माण्डं भित्त्वा ब्रह्म भवेन्नरः ।
आषाढ्यां पौर्णमास्याञ्च चातुर्मास्यं व्रतञ्चरेत् ॥ ३० ॥
ततो व्रजेत् नवम्यादौ ऋतुसन्धिषु वापयेत् ।
प्रायश्चित्तं यतीनाञ्च ध्यानं वायुयमस्तथा ॥ ३१ ॥

इत्याग्नेये महापुराणे यतिधर्मो नामैकषष्ट्यधिकशततमोऽध्यायः ॥

१ जाग्रत्स्वप्नसुषुप्त्यानमुक्तमिति ख॰, घ॰, ञ॰ च ।
२ इत्याग्नेये यमोपनिषद इत्यादिः, सत्यमानन्दमद्वयमित्यन्तः पाठो ञ॰ पुस्तके नास्ति ।

# अथ द्विषष्ट्यधिकशततमोऽध्यायः।



## धर्म्मशास्त्रकथनं।

पुष्कर उवाच। मनुर्विष्णुर्याज्ञवल्क्यो हारीतोऽत्रिर्यमोऽङ्गिराः।
वसिष्ठदक्षसंवर्त्तशातातपपराशराः॥ १॥
आपस्तम्बोशनोव्यासाः कात्यायनबृहस्पती।
गौतमः शङ्खलिखितौ धर्ममेते यथाऽब्रुवन्॥ २॥
तथा वक्ष्ये समासेन भुक्तिमुक्तिप्रदं शृणु।
प्रवृत्तञ्च निवृत्तञ्च द्विविधङ्कर्म्म वैदिकं॥ ३॥
काम्यं कर्म प्रवृत्तं स्यान्निवृत्तं ज्ञानपूर्वकं।
वेदाभ्यासस्तपो ज्ञानमिन्द्रियाणाञ्च संयमः॥ ४॥
अहिंसा गुरुसेवा च निःश्रेयसकरं परं।
सर्व्वेषामपि चैतेषामात्मज्ञानं परं स्मृतं॥ ५॥
तच्चाग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः।
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि॥ ६॥
समम्पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति।
आत्मज्ञाने समे च स्याद्वेदाभ्यासे च यत्नवान्॥ ७॥
एतद्द्विजन्मसामर्थ्यं (१) ब्राह्मणस्य विशेषतः।

---

१ एतद्द्विजन्मनामग्र्यमिति ख०, ग०, घ०, एतद्द्विजन्मनामग्रीति क०। ङ०, ज० च।

वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन् ॥ ८ ॥
इहैव लोके तिष्ठन् हि ब्रह्मभूयाय कल्पते[१] ।
स्वाध्यायानामुपाकर्म श्रावण्यां श्रवणेन तु ॥ ९ ॥
हस्ते चौषधिवारे च पञ्चम्यां श्रावणस्य वा ।
पौषमासस्य रोहिण्यामष्टकायामथापि वा ॥ १० ॥
जलान्ते छन्दसाङ्कुर्यादुत्सर्गं विधिवद्बहिः ।
त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु ॥ ११ ॥
उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये तथा[२] ।
सन्ध्यागर्जितनिर्घाते भूकम्पोल्कानिपातने ॥ १२ ॥
समाप्य वेदं द्युनिशमारण्यकमधीत्य च ।
पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके ॥ १३ ॥
ऋतुसन्धिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च ।
पशुमण्डूकनकुलश्वाहिमार्जारशूकरैः[३] ॥ १४ ॥
कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये ।
श्वक्रोष्टुगर्दभोलूकसामबाणार्त्तनिस्वने ॥ १५ ॥
अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके ।
अशुभासु च तारासु विद्युत्स्तनितसम्प्लवे ॥ १६ ॥
भुक्त्वार्द्रपाणिरम्भोन्तरर्द्धरात्रेऽतिमारुते ।
पांशुवर्षे दिशान्दाहे सन्ध्यानीहारभीतिषु ॥ १७ ॥
धावतः प्राणिबाधे च विशिष्टे गृहमागते ।

---

१ ब्रह्मचर्याय कल्पते इति ङ० । क०, ख०, ट० च ।
२ स्वशाखाश्रोत्रिये मृते इति घ०,
३ शशमार्जारशूकरैरिति ङ० ।

खरोष्ट्रयानहस्त्यश्वनौकावृक्षादिरोहणे ॥ १८ ॥
सप्तलिप्तदनध्यायानेतांस्तात्कालिकान्विदुः ।

इत्याग्नेये महापुराणे धर्मशास्त्रं नाम द्विषष्ट्यधिक-
शततमोऽध्यायः ॥

---

## अथ त्रिषष्ट्यधिकशततमोऽध्यायः ।

—:○:—

श्राद्धकल्पकथनं ।

पुष्कर उवाच । श्राद्धकल्पं प्रवक्ष्यामि भुक्तिमुक्तिप्रदं शृणु ।
निमन्त्रय विप्रान् पूर्वेद्युः स्वागतेनापराह्णतः ॥ १ ॥
प्राच्योपवेशयेत् पीठे युग्मान्दैवेऽथ पित्र्यके ।
अयुग्मान् प्राङ्मुखान्दैवे त्रीन् पैत्रे चैकमेव वा ॥ २ ॥
मातामहानामप्येवन्तन्त्रं वा वैश्वदेविकं ।
पाणिप्रक्षालनं दत्त्वा विष्टरार्थं कुशानपि ॥ ३ ॥
आवाहयेदनुज्ञातो विश्वे देवास इत्यृचा ।
यवैरन्ववकीर्य्याथ भाजने सपवित्रके ॥ ४ ॥
शन्नोदेव्या पयः क्षिप्त्वा यवोसीति यवांस्तथा ।
यादिव्या इतिमन्त्रेण हस्ते ह्यर्घं विनिक्षिपेत् ॥ ५ ॥
दत्त्वोदकं गन्धमाल्यं धूपदानं प्रदीपकं ।
अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणं ॥ ६ ॥

द्विगुणांस्तु कुशान् कृत्वा ह्युशन्तस्त्वेत्यृचा पितॄन् ।
आवाह्य तदनुज्ञातो जपेदायान्तु नस्ततः ॥ ७ ॥
यवार्थास्तु तिलैः कार्य्याः कुर्य्यादर्घ्यादि पूर्ववत् ।
दत्त्वार्घ्यं संस्रवान् शेषान् पात्रे कृत्वा विधानतः ॥ ८ ॥
पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः ।
अग्नौ करिष्य आदाय पृच्छत्यन्नं घृतप्लुतम् ॥ ९ ॥
कुरुष्वेति ह्यनुज्ञातो हुत्वाग्नौ पितृयज्ञवत् ।
हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः ॥ १० ॥
यथालाभोपपन्नेषु रौप्येषु तु विशेषतः ।
दत्त्वान्नं पृथिवीपात्रमिति पात्राभिमन्त्रणं ॥ ११ ।
कृत्वेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत् ।
सव्याहृतिकां गायत्रीं मधुवाता इति त्र्यृचं ॥ १२ ॥
जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः ।
अन्नमिष्टं हविष्यञ्च दद्यादक्रोधनोऽत्वरः ॥ १३ ॥
अन्नमादाय तृप्ताः स्थ शेषं चैवानुमान्य च ।
तदन्नं विकिरेद्भूमौ दद्याच्चापः सकृत् सकृत् ॥ १४ ॥
सर्वमन्नमुपादाय सतिलं दक्षिणामुखः ।
उच्छिष्टसन्निधौ पिण्डान् प्रदद्यात् पितृयज्ञवत् ॥ १५ ॥
मातामहानामप्येवं दद्यादाचमनं ततः ।
स्वस्ति वाच्यं ततः कुर्य्यादक्षय्योदकमेव च ॥ १६ ॥
दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत् ।
वाच्यतामित्यनुज्ञातः स्वपितृभ्यः स्वधोच्यतां(१) ॥ १७ ॥

१ मातामहानामित्यादि, स्वपितृभ्य स्वधोच्यतामित्यन्त पाठः क॰ पुस्तके नास्ति।

कुर्य्युरस्तु स्वधेत्युक्ते भूमौ सिञ्चेत्ततो जलं ।
प्रीयन्तामिति वा दैवं विश्वे देवा जलं ददेत् ॥ १८ ॥
दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ।
श्रद्धा च नो माव्यगमद्बहुदेयं च नोऽस्त्विति ॥ १९ ॥
इत्युक्त्वा तु प्रिया वाचः प्रणिपत्य विसर्जयेत् ।
वाजे वाज इति प्रीतपितृपूर्व्वं विसर्जनं(१) ॥ २० ॥
यस्मिंस्तु संश्रवाः पूर्वमर्घपात्रे निपातिताः ।
पितृपात्रं तदुत्तानं कृत्वा विप्रान् विसर्जयेत् ॥ २१ ॥
प्रदक्षिणमनुव्रज्य भुक्त्वा तु पितृसेवितं ।
ब्रह्मचारी भवेत्तान्तु रजनीं ब्राह्मणैः सह ॥ २२ ॥
एवं प्रदक्षिणं कृत्वा वृद्धौ नान्दीमुखान् पितॄन् ।
यजेत दधिकर्कन्धुमिश्रान् पिण्डान् यवैः क्रिया ॥ २३ ॥
एकोद्दिष्टं दैवहीनमेकार्घैकपवित्रकं ।
आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ॥ २४ ॥
उपतिष्ठतामित्यक्षय्यस्थाने पितृविसर्जने ।
अभिरम्यतामिति वदेद् ब्रूयुस्तेऽभिरताः स्म ह ॥ २५ ॥
गन्धोदकतिलैर्युक्तं कुर्य्यात् पात्रचतुष्टयं ।
अर्घार्थपितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥ २६ ॥
ये समाना इति द्वाभ्यां शेषं पूर्व्ववदाचरेत् ।
एतत् सपिण्डीकरणमेकोद्दिष्टं स्त्रिया सह(२) ॥ २७ ॥
अर्व्वाक्सपिण्डीकरणं यस्य संवत्सराद् भवेत् ।

१ पितृपूर्वं विसर्जयेदिति ख०, ङ०, ञ० च। २ स्त्रिया अपीति ख०, ङ० च।

तस्याप्यन्नं सोदकुम्भं दद्यात् संवत्सरं द्विजे ॥ २८ ॥
मृताहनि च कर्त्तव्यं प्रतिमासन्तु वत्सरं ।
प्रतिसंवत्सरं कार्य्यं श्राद्धं वै मासिकान्नवत् ॥ २९ ॥
हविष्यान्नेन वै मासं पायसेन तु वत्सरं ।
मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः(१) ॥ ३० ॥
ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमं ।
मासवृद्ध्याऽभितृप्यन्ति दत्तैरेव(२) पितामहाः ॥ ३१ ॥
खड्गामिषं महाशल्कं मधुमुन्यन्नमेव च(३) ।
लौहामिषं कालशाकं मांसं वार्द्धीनसस्य च ॥ ३२ ॥
यद्ददाति गयास्थश्च सर्वमानन्त्यमुच्यते(४) ।
तथा वर्षात्रयोदश्यां मघासु च न संशयः ॥ ३३ ॥
कन्यां प्रजां वन्दिनश्च पशून् मुख्यान् सुतानपि ।
द्यूतं कृषिं च वाणिज्यं द्विशफैकशफं तथा ॥ ३४ ॥
ब्रह्मवर्चस्विनः पुत्रान् स्वर्णरूप्ये सकुप्यके ।
ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा ॥ ३५ ॥
प्रतिपत्प्रभृतिष्वेतान्वर्जयित्वा चतुर्द्दशीं ।
शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते ॥ ३६ ॥
स्वर्गं(५) ह्यपत्यमोजश्च शौर्य्यं क्षेत्रं बलं तथा ।
पुत्रश्रैष्ठ्यं ससौभाग्यमपत्यं मुख्यतां सुतान् ॥ ३७ ॥

---

१ मात्स्याविहारिणौरभ्रशा-कुनच्छागपार्षतैरिति क० ।
२ दत्तैरिवेति ख० ङ०, ज० च ।
३ मधुमुद्गान्नमेव वेति ङ० ।
४ सर्वमानन्त्यमश्नुते इति ग०, ङ० च ।
५ स्वर्गमिति ख०, ङ० च ।

प्रवृत्तचक्रतां पुत्रान् वाणिज्यं प्रभुतां तथा।
अरोगित्वं यशो वीतशोकतां परमाङ्गतिं ॥ ३८ ॥
धनं विद्यां भिषक्सिद्धिं रूप्यं गाजाश्वजाविकं।
श्राद्धानायुश्च विधिवत् यः श्राद्धं सम्प्रयच्छति ॥ ३९ ॥
कृत्तिकादिभरण्यन्ते स कामानाप्नुयादिमान्।
वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ॥ ४० ॥
प्रीणयन्ति मनुष्याणां(१) पितॄन् श्राद्धेन तर्पिताः।
आयुः प्रजां धनं(२) विद्यां स्वर्गं मोक्षं सुखानि च ॥ ४१ ॥
प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः(३)।

इत्याग्नेये महापुराणे श्राद्धकल्पो नाम त्रिषष्ट्यधिकशततमोऽध्यायः ॥

---

## अथ चतुःषष्ट्यधिकशततमोऽध्यायः।

——:o:——

नवग्रहहोमः।

पुष्कर उवाच। श्रीकामः शान्तिकामो वा ग्रहयज्ञं समारभेत्।
वृष्ट्यायुःपुष्टिकामो वा तथैवाभिचरन् पुनः ॥ १ ॥

---

१ मनुष्यादीनिति ख०, ज० च। आयुः प्रजां धनमिति घ०।
२ आयुः प्रज्ञाधनमिति ज०। ३ प्रीता पितृपितामहा इति ज०।

सूर्य्यः सोमो मङ्गलश्च बुधश्चाथ बृहस्पतिः।
शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः॥ २॥
ताम्रकात् स्फटिकाद्रक्तचन्दनात् स्वर्णकादुभौ।
रजतादयसः सीसात् ग्रहाः कार्य्याः क्रमादिमे॥ ३॥
सुवर्णैर्वा पटे लिख्या गन्धमण्डलकेषु वा।
यथावर्णं प्रदेयानि वासांसि कुसुमानि च॥ ४॥
गन्धाश्च बलयश्चैव धूपो देयस्तु गुग्गुलुः।
कर्त्तव्या मन्त्रवन्तश्च चरवः प्रतिदैवतं॥ ५॥
आकृष्णेन इमं देवा अग्निर्मूर्द्धा दिवः ककुत्।
उद्बुध्यस्वेति च ऋचो यथासङ्ख्यं प्रकीर्त्तिताः॥ ६॥
बृहस्पते अतियदर्य्यस्तथैवान्नात् परिस्रुतः।
शन्नो देवीस्तथा काण्डात् केतुं कृण्वन्निमास्तथा॥ ७॥
अर्कः पलाशः खदिरो ह्यपामार्गोऽथ(१) पिप्पलः।
उडुम्बरः शमी दूर्व्वा कुशाश्च समिधः क्रमात्॥ ८॥
एकैकस्यात्राष्टशतमष्टाविंशतिरेव वा।
होतव्या मधुसर्पिर्भ्यां दध्ना चैव समन्विताः॥ ९॥
गुडौदनं पायसं च हविष्यं क्षीरयष्टिकं।
दध्योदनं हविः पूपान् मांसं चित्रान्नमेव च॥ १०॥
दद्याद् ग्रहक्रमादेतद्द्विजेभ्यो भोजनं बुधः।
शक्तितो वा यथालाभं सत्कृत्य विधिपूर्व्वकं॥ ११॥
धेनुः शङ्खस्तथानड्वान् हेम वासो हयस्तथा।

(१) खदिरस्त्वपामार्गोऽथेति ग॰, ख॰, ञ॰ च।

तथा गौरायसञ्चाग एता वै दक्षिणाः क्रमात् ॥ १२ ॥
यश्च यस्य यदा दुष्यः(१) स तं यत्नेन पूजयेत्।
ब्रह्मणैषां वरो दत्तः पूजिताः पूजितस्य च ॥ १३ ॥
ग्रहाधीना नरेन्द्राणा(२) मुच्छ्रयाः पतनानि च।
भावाभावौ च जगतस्तस्मात् पूज्यतमा ग्रहाः ॥ १४ ॥

इत्याग्नेये महापुराणे नवग्रहहोमो नाम चतुःषष्ठ्यधिकशततमोऽध्यायः ॥

## अथ पञ्चषष्ट्यधिकशततमोऽध्यायः।

नानाधर्माः।

अग्निरुवाच। ध्येय आत्मा स्थितो योऽसौ हृदये दीपवत् प्रभुः।
अनन्यविषयं कृत्वा मनो बुद्धिस्मृतीन्द्रियं ॥ १ ॥
श्राद्धन्तु ध्यायिने देयं(३) गव्यं दधि घृतं पयः।
प्रियङ्गवो मसूराश्च वार्त्ताकुः कोद्रवो न हि ॥ २ ॥
सैंहिकेयो यदा सूर्य्यं ग्रसते पर्वसन्धिषु।
हस्तिच्छाया तु सा ज्ञेया श्राद्धदानादिकेऽचया ॥ ३ ॥

---

१ यदा दुष्य इति ख०, ङ० च। २ मनुष्याणामिति ङ०। ३ ध्यायिने देयमिति ङ०।

पित्रे चैव यदा सोमो हंसे चैव करे स्थिते।
तिथिर्वैवस्वती नाम सा छाया कुञ्जरस्य तु॥ ४॥
अग्नौकरणशेषन्तु न दद्याद्वैश्वदेविके।
अग्न्यभावे तु विप्रस्य हस्ते दद्यात्तु दक्षिणे॥ ५॥
न स्त्री दुष्यति जारेण न विप्रो वेदकर्मणा।
बलात्कारोपभुक्ता चेद्वैरिहस्तगतापि वा(१)॥ ६॥
सन्त्यजेद् दूषितान्नारीमृतुकाले न शुध्यति।
य आत्मव्यतिरेकेण द्वितीयं नात्र पश्यति(२)॥ ७॥
ब्रह्मभूतः स एवेह योगी चात्मरतोऽमलः।
विषयेन्द्रियसंयोगात् केचिद् योगं वदन्ति वै॥ ८॥
अधर्मो धर्मबुद्ध्या तु गृहीतस्तैरपण्डितैः।
आत्मनो मनसश्चैव संयोगश्च तथा परे॥ ९॥
वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि।
एकीकृत्य विमुच्येत बन्धाद्योगोऽयमुत्तमः॥ १०॥
कुटुम्बैः पञ्चभिर्ग्रामः षष्ठस्तत्र महत्तरः।
देवासुरमनुष्यैर्वा स जेतुं नैव शक्यते(३)॥ ११॥
बहिर्मुखानि सर्वाणि कृत्वा चाभिमुखानि वै।
मनस्येवेन्द्रियग्रामं मनश्चात्मनि योजयेत्॥ १२॥
सर्वभावविनिर्मुक्तं क्षेत्रज्ञं ब्रह्मणि न्यसेत्।
एतज् ज्ञानञ्च ध्यानञ्च शेषोऽन्यो ग्रन्थविस्तरः(४)॥ १३॥

---

१ चौरहस्तगतापि वेति ख०, घ०, ङ० च।
२ द्वितीयं नानुपश्यतीति घ०, ङ० च।
३ स जेतुं न च शक्यत इति ग०, ङ० च।
४ शेषा ये ग्रन्थविस्तरा इति ङ०।

यत्रास्ति सर्वलोकस्य तदस्तीति विरुध्यते ।
कथ्यमानं तथाऽन्यस्य हृदये नावतिष्ठते ॥ १४ ॥
असंवेद्यं हि तद् ब्रह्म[1] कुमारी-स्त्रीसुखं यथा ।
अयोगी नैव जानाति जात्यन्धो हि घटं यथा ॥ १५ ॥
सन्न्यसन्तं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः ।
एष मे मण्डलं भित्त्वा परं ब्रह्माऽधिगच्छति ॥ १६ ॥
उपवासव्रतञ्चैव स्नानन्तीर्थं फलन्तपः ॥
द्विजसम्पादनञ्चैव सम्पन्नन्तस्य तत् फलं ॥ १७ ॥
एकाक्षरं परं ब्रह्म प्राणायामः परन्तपः ।
सावित्र्यास्तु परं नास्ति पावनं परमं स्मृतं ॥ १८ ॥
पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्ववह्निभिः ।
भुञ्जते मानुषाः पश्चान्नैता दुष्यन्ति केनचित् ॥ १९ ॥
असवर्णेन यो गर्भः स्त्रीणां योनौ निषिच्यते ।
अशुद्धा तु भवेन्नारी यावच्छल्यं न मुञ्चति ॥ २० ॥
निःसृते तु ततः शल्ये रजसा शुध्यते ततः ।
ध्यानेन सदृशन्नास्ति शोधनं पापकर्मणां ॥ २१ ॥
श्वपाकेष्वपि भुञ्जानो ध्यानेन हि विशुध्यति ।
आत्मा ध्याता मनो ध्यानं ध्येयो विष्णुः फलं हरिः ॥२२॥
अक्षयाय यतिः श्राद्धे पङ्क्तिपावनपावनः ।
आरूढो नैष्ठिकन्धर्मं यस्तु प्रच्यवते द्विजः ॥ २३ ॥

१ असंवेद्य हि तद् ब्रह्म इति ग०, ङ० च । सुसंवेद्य हि तद् ब्रह्म इति ज०, ट० च । स्वयं वेद्य हि तद् ब्रह्म इति घ०, ञ० च ।

प्रायश्चित्तं न पश्यामि येन शुद्धेरत्स आत्महा।
ये च प्रव्रजिताः पत्न्यां या चैषां बीजसन्ततिः॥ २४॥
विदुरा नाम चण्डाला जायन्ते नात्र संशयः।
प्रतिको म्रियते गृध्रः श्वासौ हाटृगिकस्तथा॥ २५॥
भासो विंशतिवर्षाणि शूकरो दशभिस्तथा।
अपुष्पो विफलो हक्षो जायते कण्टकावृतः॥ २६॥
ततो दावाग्निदग्धस्तु स्थाणुर्भवति साशुगः।
ततो वर्षशताण्यष्टौ द्वे च तिष्ठत्यचेतनः॥ २७॥
पूर्णे वर्षसहस्रे तु जायते ब्रह्मराक्षसः।
प्लवेन लभते मोक्षं कुलस्योत्सादनेन वा॥ २८॥
योगमेव निषेवेत नान्यं मन्त्रमघापहं।

इत्याग्नेये महापुराणे नानाधर्मा नाम पञ्चषष्ट्यधिक-
शततमोऽध्यायः॥

---

## अथ षट्षष्ट्यधिकशततमोऽध्यायः।

—:०:—

### वर्णधर्मादिकथनं।

पुष्कर उवाच। वेदस्मार्त्तं प्रवक्ष्यामि धर्मं वै पञ्चधा स्मृतं(१)।
वर्णत्वमेकमाश्रित्य योऽधिकारः प्रवर्त्तते॥ १॥

---

१ धर्मं वै परमाश्रममिति ख॰, ङ॰ च।

वर्णधर्मः स विज्ञेयो यथोपनयनञ्चिषु ।
यस्त्वाश्रमं समाश्रित्य पदार्थः संविधीयते ॥ २॥
उक्त आश्रमधर्मस्तु भिक्षपिण्डादिको यथा ।
उभयेन निमित्तेन यो विधिः सम्प्रवर्त्तते ॥ ३ ॥
नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा ।
ब्रह्मचारी गृही चापि वानप्रस्थो यतिर्नृप ॥ ४ ॥
उक्त आश्रमधर्मस्तु धर्मः स्यात् पञ्चधा परः(१) ।
षाड्गुण्यस्याभिधाने यो दृष्टार्थः स उदाहृतः ॥ ५ ॥
स त्रेधा मन्त्रयागाद्यदृष्टार्थं इति मानवाः ।
उभयार्थो व्यवहारस्तु दण्डधारणमेव च ॥ ६ ॥
तुल्यार्थानां विकल्पः स्याद् यागमूलः प्रकीर्त्तितः ।
वेदे तु विहितो धर्मः स्मृतौ तादृश एव च ॥ ७ ॥
अनुवादं स्मृतिः सूते(२) कार्य्यार्थमिति मानवाः ।
गुणार्थः परिसङ्ख्यार्थो वानुवादो विशेषतः(३) ॥ ८ ॥
विशेषदृष्ट एवासौ फलार्थं इति मानवाः ।
स्यादष्टचत्वारिंशद्भिः संस्कारैर्ब्रह्मलोकगः ॥ ९ ॥
गर्भाधानं पुंसवनं सीमन्तोन्नयनं ततः ।
जातकर्म नामकृतिरन्नप्राशनचूडकं ॥ १० ॥
संस्कारश्चोपनयनं वेदव्रतचतुष्टयं ।
स्नानं स्वधर्मचारिण्या योगः स्याद्यज्ञपञ्चकं ॥ ११ ॥

---

१ धर्म एव प्रभावन इति ङ० ।
२ अर्थवादं श्रुतिं मूलं इति ख०, ङ० ।
३ गार्थवादो विशेषत इति ख०, ङ० ।

देवयज्ञः पितृयज्ञो मनुष्यभूतयज्ञकौ ।
ब्रह्मयज्ञः सप्तपाकयज्ञसंस्थाः पुरोऽष्टकाः ॥ १२ ॥
पार्व्वणश्राद्धं श्रावण्याग्रहायणी च चैत्र्यपि ।
चाश्वयुजी सप्तहविर्यज्ञसंस्थास्ततः स्मृताः ॥ १३ ॥
अग्न्याधेयमग्निहोत्रं(१) दर्शः स्यात् पौर्णमासकः ।
चातुर्मास्याग्रहायणेष्टिर्निरूढः पशुबन्धकः ॥ १४ ॥
सौत्रामणिमप्तसोमसंस्थाग्निष्टोम आदितः ।
अत्यग्निष्टोम उक्थश्च षोड़शो वाजपेयकः ॥ १५ ॥
अतिरात्रास्तथा स्तोमा अष्टौ चात्मगुणास्ततः ।
दया क्षमाऽनसूया च अनायासोऽथ मङ्गलं ॥ १६ ॥
अकार्पण्यास्पृहाशौचं यस्यैते स परं व्रजेत् ।
प्रचारे मैथुने चैव प्रस्रावे दन्तधावने ॥ १७ ॥
स्नानभोजनकाले च षट्सु मौनं समाचरेत् ।
पुनर्दानं पृथक्पानमाज्येन पयसा निशि ॥ १८ ॥
दन्तच्छेदनमुष्णं च सप्त सक्तुषु वर्ज्जयेत् ।
स्नात्वा पुष्पं न गृह्णीयाद् देवायोग्यन्तदीरितं ॥ १९ ॥
अन्यगोत्रोऽप्यसम्बद्धः(२) प्रेतस्याग्निन्ददाति यः ।
पिण्डञ्चोदकदानञ्च स दशाहं समापयेत् ॥ २० ॥
उदकञ्च तृणं भस्म द्वारम्पन्थास्तथैव च ।

---

१ अग्न्याधानमग्निहोत्रमिति ख०, ङ० च ।　　२ अन्यगोत्रोऽप्यसम्बन्ध इति ख०, ग० ङ० च ।

अर्कः पलाशः खदिरो ह्यपामार्गश्च पिप्पलः ॥ ६ ॥
उदुम्बरः शमी दुर्वा कुशाश्च समिधः क्रमात्।
मध्वाज्यदधिसंमिश्रा होतव्याश्चाष्टधा शतम् ॥ ७ ॥
एकाष्टचतुरः कुम्भान् पूर्य्य पूर्णाहुतिस्तथा।
वसोर्धारान्ततो दद्याद्दक्षिणाञ्च ततो हरेत् ॥ ८ ॥
यजमानं चतुर्भिस्तैरभिषिञ्चेत् समन्त्रकैः।
सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ॥ ९ ॥
वासुदेवो जगन्नाथस्तथा सङ्कर्षणः प्रभुः।
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ॥ १० ॥
आखण्डलोऽग्निर्भगवान् यमो वै नैर्ऋतस्तथा।
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ॥ ११ ॥
ब्रह्मणा सहितः शेषो दिक्पालाः पान्तु वः सदा।
कीर्त्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ॥ १२ ॥
बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः कान्तिश्च मातरः।
एतास्त्वामभिषिञ्चन्तु धर्मपत्नाः समागताः ॥ १३ ॥
आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः।
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ॥ १४ ॥
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः।
ऋषयो मनवो गावो देवमातर एव च ॥ १५ ॥
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसाङ्गणाः।
अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ॥ १६ ॥
औषधानि च रत्नानि कालस्यावयवाश्च ये।
सरितः सागराः शैलास्तीर्थानि जलदा नदाः ॥ १७

एभिरन्तरितं कृत्वा पङ्क्तिदोषो न विद्यते ॥ २१ ॥
यत्र माणाहुतीर्हृद्यादनामाङ्गुष्ठयोगतः ।

इत्याग्नेये महापुराणे वर्णधर्मादिर्नाम षट्षष्ठ्यधिकशततमोऽध्यायः ॥

---

## अथ सप्तषष्ट्यधिकशततमोऽध्यायः ॥

—:○:—

अयुतलक्षकोटिहोमाः ।

अग्निरुवाच । श्रीशान्तिविजयाद्यर्थं ग्रहयज्ञं पुनर्वदे ।
ग्रहयज्ञोऽयुतहोमलक्षकोटात्मकस्त्रिधा ॥ १ ॥
वेदैर्वेगे ह्यग्निकुण्डाद् ग्रहानावाह्य मण्डले ।
सौम्ये गुरुर्बुधश्चैशे शुक्रः पूर्वदले शशी ॥ २ ॥
आग्नेये दक्षिणे भौमो मध्ये स्याद्भास्करस्तथा ।
शनिराप्येऽथ नैर्ऋत्ये राहुः केतुश्च वायवे ॥ ३ ॥
ईशगौर्यौ गुहो विष्णुर्ब्रह्मेन्द्रौ यमकालकौ ।
चित्रगुप्तश्चाधिदेवा अग्निरापः क्षितिर्हरिः ॥ ४ ॥
इन्द्र ऐन्द्री देवता च प्रजेशोऽहिर्विधिः क्रमात् ।
एते प्रत्यधिदेवाश्च गणेशो दुर्गयानिलः ॥ ५ ॥
इकं..... गन्धूप यजेद्दोऽथ वेदजैः ।

अर्कः पलाशः खदिरो ह्यपामार्गश्च पिप्पलः ॥ ६ ॥
उदुम्बरः शमी दुर्व्वा कुशाश्च समिधः क्रमात् ।
मध्वाज्यदधिसंमिश्रा होतव्याश्चाष्टधा शतम् ॥ ७ ॥
एकाष्टचतुरः कुम्भान् पूर्व्वे पूर्णाहुतिस्तथा ।
वसोर्द्धारान्ततो दद्याद्दक्षिणाञ्च ततो ददेत् ॥ ८ ॥
यजमानं चतुर्भिस्तैरभिषिञ्चेत् समन्त्रकैः ।
सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ॥ ९ ॥
वासुदेवो जगन्नाथस्तथा सङ्कर्षणः प्रभुः ।
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ॥ १० ॥
आखण्डलोऽग्निर्भगवान् यमो वै नैर्ऋतस्तथा ।
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ॥ ११ ॥
ब्रह्मणा सहितः शेषो दिक्पालाः पान्तु वः सदा ।
कीर्त्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ॥ १२ ॥
बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः कान्तिश्च मातरः ।
एतास्त्वामभिषिञ्चन्तु धर्म्मपत्न्यः समागताः ॥ १३ ॥
आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ।
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ॥ १४ ॥
देवदानवगन्धर्व्वा यक्षराक्षसपन्नगाः ।
ऋषयो मनवो गावो देवमातर एव च ॥ १५ ॥
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसाङ्गणाः ।
अस्त्राणि सर्व्वशास्त्राणि राजानो वाहनानि च ॥ १६ ॥
औषधानि च रत्नानि कालस्यावयवाश्च ये ।
सरितः सागराः शैलास्तीर्थानि जलदा नदाः ॥ १७

एते त्वामभिषिञ्चन्तु सर्व्वकामार्थसिद्धये(१)।
अलङ्कृतस्ततो दद्याद्धेमगोत्नभुजादिकं ॥ १८॥
कपिले सर्व्वदेवानां पूजनीयासि रोहिणि।
तीर्थदेवमयी यस्मादतःशान्तिं प्रयच्छ मे ॥ १९॥
पुण्यस्त्वं शङ्ख पुण्यानां मङ्गलानाञ्च मङ्गलं।
विष्णुना विधृतो नित्यमतः शान्तिं प्रयच्छ मे ॥ २०॥
धर्म्म त्वं वृषरूपेण जगदानन्दकारकः।
अष्टमूर्त्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे ॥ २१॥
हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ २२॥
पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभं।
प्रदानात्तस्य वै विष्णुरतः शान्तिं प्रयच्छ मे ॥ २३॥
विष्णुस्त्वं मत्स्यरूपेण यस्मादमृतसम्भवः।
चन्द्रार्कवाहनो नित्यमतःशान्तिं प्रयच्छ मे ॥ २४॥
यस्मात्त्वं पृथिवी सर्वा धेनुः केशवसन्निभा।
सर्व्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे ॥ २५॥
यस्मादायसकर्म्माणि तवाधीनानि सर्वदा।
लाङ्गलाद्यायुधादीनि अतः शान्तिं प्रयच्छ मे ॥ २६॥
यस्मात्त्वं सर्व्वयज्ञानामङ्गत्वेन व्यवस्थितः।
योनिर्विभावसोर्नित्यमतः शान्तिं प्रयच्छ मे ॥ २७॥
एते शृङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश।
[illegible] श्रेयं मे स्यादिह लोके परत्र च ॥ २८॥

(१) [illegible]

यस्मादशून्यं शयनं केशवस्य शिवस्य च।
शय्या ममाप्यशून्याऽस्तु दत्ता जन्मनि जन्मनि(१) ॥२८॥
यथा रत्नेषु सर्वेषु सर्वे देवाः प्रतिष्ठिताः।
तथा शान्तिं प्रयच्छन्तु रत्नदानेन मे सुराः॥ ३०॥
यथा भूमिप्रदानस्य कलां नार्हन्ति षोडशीं।
दानान्यन्यानि मे शान्तिर्भूमिदानाद्भवत्विह ॥ ३१ ॥
सहस्रशोऽयुतहोमो दक्षिणाभी रणे जितिः।
याहोत्सवयज्ञेषु प्रतिष्ठादिषु कर्मसु ॥ ३२ ॥
सर्वकामाप्तये लक्षकोटिहोमद्वयं मतं।
गृहदेशे मण्डपेऽथ(२) अयुते हस्तमात्रकं ॥ ३३ ॥
मेखलायोनिसंयुक्तं कुण्डस्त्वार ऋत्विजः।
स्वयमेकोऽपि वा लक्षे सर्वं दशगुणं हि तत् ॥ ३४ ॥
चतुर्हस्तं द्विहस्तं वा तार्क्ष्यश्चाग्राधिकं यजेत्।
सामध्वनिशरीरस्त्वं वाहनं परमेष्ठिनः॥ ३५॥
विषपापहरो नित्यमतः शान्तिं प्रयच्छ मे।
पूर्ववत् कुण्डमामन्त्र्य लक्षहोमं समाचरेत्॥ ३६॥
वसोर्धारां ततो दद्याच्छय्याभूषादिकं ददेत्।
—दश चाष्टौ च लक्षहोमे तथर्त्विजः॥ ३७॥
पुत्रान्नराज्यविजयभुक्तिमुक्त्यादि(२) चाप्नुयात्।
दक्षिणाभिः फलेनाम्—नघ्नः कोटिहोमकः॥ ३८॥

---

१ तथा जन्मनि जन्मनीति...　　गृहादौ मण्डपे चैवमिति ञ०।
२ गृह...　　२ पुत्रार्थराज्यविजयमुक्तिमुक्त्यादीति ङ० च।

एते त्वामभिषिञ्चन्तु सर्व्वकामार्थसिद्धये(१)।
अलङ्कृतस्ततो दद्याद्धेमगोन्नभुआदिकं ॥ १८॥
कपिले सर्वदेवानां पूजनीयासि रोहिणि।
तीर्थदेवमयी यस्मादतःशान्तिं प्रयच्छ मे ॥ १९ ॥
पुण्यस्त्वं शङ्ख पुण्यानां मङ्गलानाञ्च मङ्गलं।
विष्णुना विधृतो नित्यमतः शान्तिं प्रयच्छ मे ॥ २० ॥
धर्म्म त्वं वृषरूपेण जगदानन्दकारकः।
अष्टमूर्त्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे ॥ २१ ॥
हिरण्यगर्भगर्भस्थं हेमवीजं विभावसोः।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ २२ ॥
पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभं।
प्रदानात्तस्य वै विष्णुरतः शान्तिं प्रयच्छ मे ॥ २३ ॥
विष्णुस्त्वं मत्स्यरूपेण यस्मादमृतसम्भवः।
चन्द्रार्कवाहनो नित्यमतःशान्तिं प्रयच्छ मे ॥ २४ ॥
यस्मात्त्वं पृथिवी सर्वा धेनुः केशवसन्निभा।
सर्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे ॥ २५ ॥
यस्मादायसकर्म्माणि तवाधीनानि सर्वदा।
लाङ्गलाद्यायुधादीनि अतः शान्तिं प्रयच्छ मे ॥ २६ ॥
यस्मात्त्वं सर्वयज्ञानामङ्गत्वेन व्यवस्थितः।
योनिर्विभावसोर्नित्यमतः शान्तिं प्रयच्छ मे ॥ २७ ॥
(२)एते प्रसन्नेषु तिष्ठन्ति भुवनानि चतुर्दश।
[illegible] मे स्यादिह लोके परत्र च ॥ २८ ॥

१ कृति गृ [illegible]
२ एवि च०,

यस्मादशून्यं शयनं केशवस्य शिवस्य च ।
शय्या ममाप्यशून्याऽस्तु दत्ता जन्मनि जन्मनि(१) ॥२८ ॥
यथा रत्नेषु सर्वेषु सर्वे देवाः प्रतिष्ठिताः ।
तथा शान्तिं प्रयच्छन्तु रत्नदानेन मे सुराः ॥ ३० ॥
यथा भूमिप्रदानस्य कलां नार्हन्ति षोड़शीं ।
दानान्यन्यानि मे शान्तिर्भूमिदानाद्भवत्विह ॥ ३१ ॥
ग्रहयज्ञोऽयुतहोमो दक्षिणाभी रवे जितिः ।
राष्ट्रोत्सवयज्ञेषु प्रतिष्ठादिषु कर्मसु ॥ ३२ ॥
सर्वकामाप्तये लक्षकोटिहोमद्वयं मतं ।
गृहदेशे मण्डपेऽथ(२) अयुते हस्तमात्रकं ॥ ३३ ॥
मेखलायोनिसंयुक्तं कुण्डञ्चत्वार ऋत्विजः ।
स्वयमेकोऽपि वा लक्षे सर्वं दशगुणं हि तत् ॥ ३४ ॥
चतुर्हस्तं द्विहस्तं वा तार्क्ष्यञ्चाधिकं यजेत् ।
सामध्वनिशरीरस्त्वं वाहनं परमेष्ठिनः ॥ ३५ ॥
विषयापहरो नित्यमतः शान्तिं प्रयच्छ मे ।
पूर्ववत् कुण्डमामन्त्र्य लक्षहोमं समाचरेत् ॥ ३६ ॥
वसोर्धारां ततो दद्याच्छय्याभूषादिकं ददेत् ।
[illegible] द्वश चाष्टौ च लक्षहोमे तथर्त्विजः ॥ ३७ ॥
पुत्राथराज्यविजयभुक्तिमुक्त्यादि(३) नप्नुयात्,
दक्षिणाभिः [illegible] आप्नुयात् कोटिहोमकः ॥ ३८ ॥

---

१ तथा सप्तनि [illegible] नीति ङ० । ... गृहादौ मण्डपे चेयमिति ग० ।
२ गदा [illegible] त घ० । ३ पुत्रार्थराज्यविजयभुक्तिमुक्त्यादीति ङ० घ० ।

एते त्वामभिषिञ्चन्तु सर्व्वकामार्थसिद्धये(१)।
अलङ्कृतस्ततो दद्याद्धेमगोमभुम्रादिकं ॥ १८॥
कपिले सर्वदेवानां पूजनीयासि रोहिणि।
तीर्थदेवमयी यस्मादतःशान्तिं प्रयच्छ मे ॥ १९ ॥
पुण्यस्त्वं शङ्ख पुण्यानां मङ्गलानाञ्च मङ्गलं।
विष्णुना विघृतो नित्यमतः शान्तिं प्रयच्छ मे ॥ २० ॥
धर्म्म त्वं वृषरूपेण जगदानन्दकारकः।
अष्टमूर्त्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे ॥ २१ ॥
हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ २२ ॥
पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभं।
प्रदानात्तस्य वै विष्णुरतः शान्तिं प्रयच्छ मे ॥ २३ ॥
विष्णुस्त्वं मत्स्यरूपेण यस्मादमृतसम्भवः।
चन्द्रार्कवाहनो नित्यमतःशान्तिं प्रयच्छ मे ॥ २४ ॥
यस्मात्त्वं पृथिवी सर्वा धेनुः केशवसन्निभा।
सर्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे ॥ २५ ॥
यस्मादायसकर्म्माणि तवाधीनानि सर्वदा।
लाङ्गलाद्यायुधादीनि अतः शान्तिं प्रयच्छ मे ॥ २६ ॥
यस्मात्त्वं सर्वयज्ञानामङ्गत्वेन व्यवस्थितः।
योनिर्विभावसोर्नित्यमतः शान्तिं प्रयच्छ मे ॥ २७ ॥
[illegible] तिष्ठन्ति भुवनानि चतुर्दश।
[illegible] छयं मे स्यादिह लोके परत्र च ॥ २८ ॥

(१) [illegible] ख०.

चतुर्हस्तं चाष्टहस्तं कुण्डन्त्वाद्य च द्विजाः।
पञ्चविंशं षोडशं वा पटे द्वारे चतुष्टयं ॥ ३९ ॥
कोटिहोमी सर्वकामी विष्णुलोकं स गच्छति।
होमस्तु ग्रहमन्त्रैर्वा गायत्र्या वैष्णवैरपि ॥ ४० ॥
जातवेदोमुखैः शैवैः(१) वैदिकैः प्रथितैरपि।
तिलैर्यवैर्घृतैर्धान्यैरश्वमेधफलादिमाक् ॥ ४१ ॥
विद्वेषणाभिचारेषु त्रिकोणं कुण्डमिष्यते।
समिधो वामहस्तेन श्येनास्थ्यनलसंयुताः ॥ ४२ ॥
रक्तभूषैर्मुक्तकेशैर्ध्यायद्भिरशिवं रिपोः।
दुर्मित्रियास्तस्मै सन्तु यो द्वेष्टि ह्रुं फडिति च ॥ ४३॥
छिन्द्यात् क्षुरेण प्रतिमां पिष्टरूपं रिपुं हनेत्(२)।
यजेदेकं पौष्कं वा यः स ज्ञात्वा दिवं व्रजेत् ॥ ४४ ॥

इत्याग्नेये महापुराणेऽयुतलक्षकोटिहोमा नाम सप्तषष्ट्यधिकशततमोऽध्यायः ॥

## अथाष्टषष्ट्यधिकशततमोऽध्यायः।



महापातकादिकथनम्।

पुष्कर उवाच। दण्ड्यं कुर्य्यान्नृपो नृणां प्रायश्चित्तमकुर्वतां।
कामतोऽकामतो वापि प्रायश्चित्तं कृतं चरेत् ॥ १ ॥

---

१ जातवेदोमुखैः सौरैरिति ख०। २ रिपुं चरेदिति ख०, ज० च।

मत्तक्रुद्धातुराणां च न भुञ्जीत कदाचन।
महापातकिना स्पृष्टं यच्च स्पृष्टमुदक्यया॥ २॥
गणान्नं गणिकान्नं च(१) वार्द्धुषेर्गायनस्य च।
अभिशस्तस्य षण्ढस्य यस्याश्चोपपतिर्गृहे॥ ३॥
रजकस्य नृशंसस्य वन्दिनः कितवस्य च।
मिथ्यातपस्विनश्चैव चौरदण्डिकयोस्तथा(२)॥ ४॥
कुण्डगोलस्त्रीजितानां वेदविक्रयिणस्तथा।
शैलूषतन्त्रवायान्नं कृतघ्नस्यान्नमेव च॥ ५॥
कर्म्मारस्य निषादस्य चेलनिर्णेजकस्य च।
मिथ्याप्रव्रजितस्यान्नं पुंश्चल्यास्तैलिकस्य च॥ ६॥
आरूढपतितस्यान्नं विद्दिष्टान्नं च वर्ज्जयेत्।
तथैव ब्राह्मणस्यान्नं ब्राह्मणेनानिमन्त्रितः॥ ७॥
ब्राह्मणान्नञ्च शूद्रेण नाद्याच्चैव निमन्त्रितः।
एषामन्यतमस्यान्नममत्या वा त्र्यहं क्षपेत्॥ ८॥
मत्या भुक्त्वा चरेत् कृच्छ्रं रेतोविण्मूत्रमेव च।
चण्डालश्वपचान्नन्तु भुक्त्वा चान्द्रायणं चरेत्॥ ९॥
अनिर्दशं च प्रेतान्नं गवाघ्रातं तथैव च।
शूद्रोच्छिष्टं शुनोच्छिष्टं पतितान्नं तथैव च॥ १०॥
तप्तकृच्छ्रं प्रकुर्व्वीत अशौचे कृच्छ्रमाचरेत्।
अशौचे यस्य यो भुङ्क्ते सोऽप्यशुद्धस्तथा भवेत्॥ ११॥
मृतपञ्चनखात् कूपादमेध्येन सकृद्युतात्।

१ गणान्नां गणिकान्नाद्येति ख०, च० घ। २ चौरदाम्भिकयोस्तथेति ञ०।

अपः पीत्वा त्र्यहं तिष्ठेत् सोपवासो द्विजोत्तमः ॥ १२ ॥
सर्वत्र शूद्रे पादः स्याद् द्वित्रयं वैश्यभूपयोः(१) ।
विड्वराहखरोष्ट्राणां गोमायोः कपिकाकयोः ॥ १३ ॥
प्राश्य मूत्रपुरीषाणि द्विजश्चान्द्रायणं चरेत् ।
शुष्काणि जग्ध्वा मांसानि(२) प्रेतान्नं करकाणि च ॥ १४॥
क्रव्यादसूकरोष्ट्राणां गोमायोः कपिकाकयोः ।
गोनराश्वखरोष्ट्राणां छत्राकं ग्रामकुक्कुटं ॥ १५ ॥
मांसं जग्ध्वा कुञ्जरस्य तप्तकृच्छ्रेण शुद्ध्यति ।
आमश्राद्धे तथा भुक्त्वा ब्रह्मचारी मधु त्वदन् ॥ १६ ॥
लशुनं गृञ्जनं चाद्यात् प्राजापत्यादिना शुचिः(३) ।
भुक्त्वा चान्द्रायणं कुर्यान् मांसञ्चात्मकृतन्तथा ॥ १७ ॥
पेलुगव्यञ्च पेयूषं तथा श्लेष्मातकं मृदं ।
वृथाकृशरसंयावपायसापूपशष्कुलीः ॥ १८ ॥
अनुपाकृतमांसानि देवान्नानि हवींषि च ।
गवाञ्च महिषीणां च वर्जयित्वा तथाप्यजां ॥ १९ ॥
सर्वक्षीराणि वर्ज्याणि तासाञ्चैवाप्यनिर्दशं ।
शशकः शल्यकी गोधा खड्गः कूर्मस्तथैव च ॥ २० ॥
भक्ष्याः पञ्चनखाः प्रोक्ताः परिशेषाश्च वर्जिताः ।
पाठीनरोहितान्मत्स्यान् सिंहतुण्डांश्च भक्षयेत् ॥ २१ ॥
यवगोधूमजं सर्व्वं पयसश्चैव विक्रियाः ।
वागषाड्गवचक्रादीन् सस्नेहमुषितं तथा ॥ २२ ॥

---

१ द्वितीयं वैश्यशूद्रयोरिति क०, ख०, ग०, घ०, च० । २ शुष्काणि दग्धमांसानि इति ङ० । ३ प्राजापत्यादिना शुचिरिति घ० ।

अग्निहोत्रपरीदाग्निर्ब्राह्मणः कामचारतः।
चान्द्रायणं चरेन्मासं वीरवध्यासनं हितं ॥ २३ ॥
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः।
महान्ति पातकान्याहुः संयोगश्चैव तैः सह ॥ २४ ॥
अनृते च समुत्कर्षो राजगामि च पैशुन।
गुरोश्चालीकनिर्बन्धः समानं ब्रह्महत्यया(१) ॥ २५ ॥
ब्रह्मोज्झावेदनिन्दा च कौटसाक्ष्यं सुहृद्वधः।
गर्हितान्नाज्ययोर्जग्धिः(२) सुरापानसमानि षट् ॥ २६ ॥
निक्षेपस्यापहरणं नराश्वरजतस्य च।
भूमिवज्रमणीनाञ्च रुक्मस्तेयसमं स्मृतं ॥ २७ ॥
रेतःसेकः स्वयोन्यासु कुमारीष्वन्त्यजासु च।
सख्युः पुत्रस्य च(३) स्त्रीषु गुरुतल्पसमं विदुः ॥ २८ ॥
गोवधोऽयाज्यसंयाज्यं पारदार्य्यात्मविक्रयः।
गुरुमातृपितृत्यागः स्वाध्यायाग्न्योः सुतस्य च ॥ २९ ॥
परिवित्तितानुजेन परिवेदनमेव च।
तयोर्दानञ्च कन्यायास्तयोरेव च याजनं ॥ ३० ॥
कन्याया दूषणञ्चैव वार्द्धुष्यं व्रतलोपनं।
तडागारामदाराणामपत्यस्य च विक्रयः ॥ ३१ ॥
व्रात्यता बान्धवत्यागो भृताध्यापनमेव च।
भृताच्चाध्ययनादानमविक्रेयस्य विक्रयः ॥ ३२ ॥

---

१ समानि ब्रह्महत्ययेति ख०, ग०, ङ०।  २ गर्हितानाद्ययोर्जग्धिरिति ङ०, छ०।
३ सख्युः पुत्रस्य चेति ङ०।

सर्वाकारेष्वधीकारो महायन्त्रप्रवर्त्तनं ।
हिंसौषधीनां स्त्र्याजीवः क्रियारम्भकमेव च ॥ ३३ ॥
इन्धनार्थमशुष्काणां द्रुमाणाञ्चैव पातनं ।
योषितां ग्रहणञ्चैव स्त्रीनिन्द्यागमसङ्गमः ॥ ३४ ॥
आत्मार्थञ्च क्रियारम्भो निन्दितान्नादनन्तथा ।
अनाहिताग्निता स्तेयमृणानाञ्चानपक्रिया ॥ ३५ ॥
असच्छास्त्राधिगमनं दौःशील्यं व्यसनक्रिया ।
धान्यकुप्यपशुस्तेयं मद्यपस्त्रीनिषेवणं ॥ ३६ ॥
स्त्रीशूद्रविट्क्षत्रवधो नास्तिक्यञ्चोपपातकं ।
ब्राह्मणस्य रुजः कृत्यं घ्रातिरघ्रेयमद्ययोः ॥ ३७ ॥
जैह्म्यं पुंसि च मैथुन्यं जातिभ्रंशकरं स्मृतं ।
खराश्वोष्ट्रमृगेन्द्राणामजाव्योश्चैव मारणं(१) ॥ ३८ ॥
सङ्कीर्णकरणं ज्ञेयं मीनाहिनकुलस्य च ।
निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनं ॥ ३९ ॥
अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणं ।
कृमिकीटवयोहत्या मद्यानुगतभोजनं ॥ ४० ॥
फलैधःकुसुमस्तेयमधैर्यञ्च मलावहं ।
इत्याग्नेये महापुराणे महापातकादिकथनं नामाष्टषष्ट्यधिकशततमोऽध्यायः ॥

---

१ मार्जारस्यैव मारणमिति ङ० ।

## अथैकोनसप्तत्यधिकशततमोऽध्यायः।



प्रायश्चित्तानि।

पुष्कर उवाच। एतत्प्रभृतिपापानां प्रायश्चित्तं वदामि ते।
ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत्॥ १॥
भिक्षेतात्मविशुद्ध्यर्थं कृत्वा शवशिरोध्वजं।
प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः॥ २॥
यजेत वाश्वमेधेन स्वर्जिता गोसवेन वा।
जपन्वान्यतमं वेदं योजनानां शतं व्रजेत्॥ ३॥
सर्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत्।
व्रतैरेतैर्व्यपोहन्ति महापातकिनो मलं॥ ४॥
उपपातकसंयुक्तो गोघ्नो मासं यवान् पिबेत्।
कृतवापो वसेद्गोष्ठे चर्म्मणा तेन संवृतः॥ ५॥
चतुर्थकालमश्नीयादक्षारलवणं मितं।
गोमूत्रेण चरेत् स्नानं द्वौ मासौ नियतेन्द्रियः॥ ६॥
दिवानुगच्छेद्गाश्चैव तिष्ठन्नूर्द्ध्वं रजः पिबेत्।
वृषभैकादशा गास्तु दद्याद्विचरितव्रतः(१)॥ ७॥
अविद्यमाने सर्वस्वं वेदविद्भ्यो निवेदयेत्।
पादमेकं चरेद्रोधे द्वौ पादौ बन्धने चरेत्॥ ८॥

---

१ दद्यात् सुचरितव्रत इति ख०।

योजने पादहीनं स्याच्चरेत् सर्वं निपातने ।
कान्तारेष्वथ दुर्गेषु विषमेषु भयेषु च ॥ ९ ॥
यदि तत्र विपत्तिः स्यादेकपादो विधीयते ।
घण्टाभरणदोषेण तथैवार्द्धं विनिर्दिशेत् ॥ १० ॥
दमने दामने रोधे शकटस्य नियोजने ।
स्तम्भशृङ्खलपाशेषु मृते पादोनमाचरेत् ॥ ११ ॥
शृङ्गभङ्गेऽस्थिभङ्गे च लाङ्गूलच्छेदने तथा ।
यावकन्तु पिबेत्तावद्यावत् सुस्था तु गौर्भवेत् ॥ १२ ॥
गोमतीञ्च जपेद्विद्यां गोस्तुतिं गोमतीं स्मरेत् ।
एका चेद्बहुभिर्दैवाद् यत्र व्यापादिता भवेत् ॥ १३ ॥
पादं पादन्तु हत्यायाश्चरेयुस्ते पृथक् पृथक् ।
उपकारे क्रियमाणे विपत्तौ नास्ति पातकं ॥ १४ ॥
एतदेव व्रतं कुर्य्युरुपपातकिनस्तथा ।
अवकीर्णिवर्जं शुद्ध्यर्थं चान्द्रायणमथापि वा ॥ १५ ॥
अवकीर्णी तु कालेन गर्द्दभेन चतुष्पथे ।
पाकयज्ञविधानेन यजेत निरृतिं निशि ॥ १६ ॥
कृत्वाग्निं विधिवद्धोमानन्ततश्च समित्यृचा ।
चन्द्रेन्द्रगुरुवह्नीनां जुहुयात् सर्पिषाहुतिं(१) ॥ १७ ॥
अथवा गार्द्दभं चर्म्म वसित्वाब्दञ्चरेन्महीं ।
हत्वा गर्भमविज्ञातं ब्रह्महत्याव्रतं चरेत् ॥ १८ ॥

---

१ जुहुयात्सर्पिषाहुतीरिति ख०, ग०, ङ० च ।

सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत्।
गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा॥ १९॥
सुवर्णस्तेयकृद्विप्रो राजानमभिगम्य तु।
स्वकर्म्म ख्यापयन् ब्रूयाम्मां भवाननुशास्त्विति॥ २०॥
गृहीत्वा मुसलं राजा सकृद्धन्यात् स्वयङ्गतं।
वधेन शुध्यते स्तेयी ब्राह्मणस्तपसैव वा॥ २१॥
गुरुतल्पी निकृत्यैव शिश्नञ्च वृषणं स्वयं।
निधाय चाञ्जलौ गच्छेदानिपाताच्च नैर्ऋतिं॥ २२॥
चान्द्रायणान् वा त्रीन्मासानभ्यसेन्नियतेन्द्रियः।
जातिभ्रंशकरं कर्म कृत्वान्यतममिच्छया॥ २३॥
चरेच्छान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया।
सङ्करीपात्रकृत्यासु मासं शोधनमैन्दवं॥ २४॥
मलिनीकरणीयेषु तप्तं स्याद्यावकं त्र्यहं।
तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः॥ २५॥
वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडशः।
मार्जारनकुलौ हत्वा चाषं मण्डूकमेव च॥ २६॥
श्वगोधोलूककाकांश्च शूद्रहत्याव्रतं चरेत्।
चतुर्णामपि वर्णानां नारीं हत्वानवस्थितां॥ २७॥
अमत्यैव प्रमाप्य स्त्रीं शूद्रहत्याव्रतं चरेत्।
सर्पादीनां वधे नक्तमनस्थ्नां वायुसंयमः॥ २८॥
द्रव्याणामल्पसाराणां स्तेयं कृत्वान्यवेश्मतः।
चरेच्छान्तपनं कृच्छ्रं व्रतं निर्वाप्य शुध्यति॥ २९॥

भक्ष्यभोज्यापहरणे यानशय्यासनस्य च ।
पुष्पमूलफलानाञ्च पञ्चगव्यं विशोधनं ॥ ३० ॥
तृणकाष्ठद्रुमाणान्तु शुष्कान्नस्य गुडस्य च ।
चैलचर्म्मामिषाणान्तु(१) त्रिरात्रं स्यादभोजनं ॥ ३१ ॥
मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च ।
अयःकांस्योपलानाञ्च द्वादशाहं कणान्नभुक् ॥ ३२ ॥
कार्पासकीटजोर्णानां द्विशफैकशफस्य च ।
पक्षिगन्धौषधीनान्तु रज्वा चैव त्र्यहम्पयः ॥ ३३ ॥
गुरुतल्पव्रतं कुर्य्याद्रेतः सिक्त्वा स्वयोनिषु ।
सख्युः पुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च ॥ ३४ ॥
पितृस्वस्रेयीं भगिनीं स्वस्रीयां मातुरेव च ।
मातुश्च भ्रातुराप्तस्य गत्वा चान्द्रायणञ्चरेत् ॥ ३५ ॥
अमानुषीषु पुरुष उदक्यायामयोनिषु ।
रेतः सिक्त्वा जले चैव कृच्छ्रं सान्तपनञ्चरेत् ॥ ३६ ॥
मैथुनन्तु समासेव्य पुंसि योषिति वा द्विजः ।
गोयानेऽप्सु दिवा चैव सवासाः स्नानमाचरेत् ॥ ३७ ॥
चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।
पतत्यज्ञानतो विप्रो ज्ञानात् साम्यन्तु गच्छति ॥ ३८ ॥
विप्रदुष्टां स्त्रियं भर्त्ता निरुन्ध्यादेकवेश्मनि ।
यत् पुंसः परदारेषु तदेनाञ्चारयेद्व्रतं ॥ ३९ ॥
साचेत्पुनः प्रदुष्येत सदृशेनोपमन्त्रिता ।
कृच्छ्रञ्चान्द्रायणञ्चैव तदस्याः पावनं स्मृतं ॥ ४० ॥

---

१ चैलचर्मामिषाणाञ्चेति ख० ।

यत् करोत्येकरात्रेण वृषलीसेवनं द्विजः ।
तद्भैक्ष्यभुक् जपेन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥ ४१ ॥

इत्याग्नेये महापुराणे प्रायश्चित्तानि नाम एकोनसप्तत्यधिकशततमोऽध्यायः ॥

---

## अथ सप्तत्यधिकशततमोऽध्यायः ।

—:०:—

### प्रायश्चित्तानि ।

पुष्कर उवाच । महापापानुयुक्तानां(१) प्रायश्चित्तानि वच्मि ते ।
संवत्सरेण पतति पतितेन सहाचरन् ॥ १ ॥
याजनाध्यापनाद्यौनात्र तु यानाशनासनात् ।
यो येन पतितेनैषां संसर्गं याति मानवः ॥ २ ॥
स तस्यैव व्रतं कुर्यात्तत्संसर्गस्य शुद्धये ।
पतितस्योदकं कार्यं सपिण्डैर्बान्धवैः सह ॥ ३ ॥
निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग् गुरुसन्निधौ ।
दासो घटमपां पूर्णं पर्य्यस्येत् प्रेतवत्पदा(२) ॥ ४ ॥
अहोरात्रमुपासीरन्नशौचं बान्धवैः सह ।
निवर्त्तयेरंस्तस्मात्तु ज्येष्ठांशमाप्यपार्ट्रिके ॥ ५ ॥
ज्येष्ठांशमाप्नुयाचास्य यवीयान् गुणतोऽधिकः ।

---

१ महापापोपपन्नानामिति ङ० ।
१ प्रायश्चित्तं वदामि ते इति ङ० ।
२ प्रेतवत् सदेति ख०, ग०, घ०, ङ० च ।

प्रायश्चित्ते तु चरिते पूर्णं कुम्भमपां नवं ॥ ६ ॥
तेनैव सार्द्धं प्रास्येयुः स्नात्वा पुण्यजलाशये ।
एवमेव विधिं कुर्य्युर्योषित्सु पतितास्वपि ॥ ७ ॥
वस्त्रान्नपानन्देयन्तु वसेयुश्च गृहान्तिके ।
तेषां द्विजानां सावित्री नानूद्येत(१) यथाविधि ॥ ८ ॥
तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत् ।
विकर्मस्थाः परित्यक्तास्तेषां सप्येतदादिशेत् ॥ ९ ॥
जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः ।
मासङ्गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात् ॥ १० ॥
व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च ।
अभिचारमहीनानान्त्रिभिः कृच्छ्रैर्व्यपोहति(२) ॥ ११ ॥
शरणागतं परित्यज्य वेदं विप्लाव्य च द्विजः ।
संवत्सरं यताहारस्तत्पापमपसेधति ॥ १२ ॥
श्वसृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च ।
नरोष्ट्राश्ववराहैश्च(३) प्राणायामेन शुध्यति ॥ १३ ॥
स्नातकव्रतलोपे च कर्मत्यागे ह्यभोजनं ।
हुङ्कारं(४) ब्राह्मणस्योक्त्वा त्वङ्कारञ्च गरीयसः ॥ १४ ॥
स्नात्वानश्नन्नहःशेषमभिवाद्य प्रसादयेत् ।
अवगूर्य्य चरेत्कृच्छ्रमतिकृच्छ्रं निपातने ॥ १५ ॥
कृच्छ्रातिकृच्छ्रं कुर्वीत विप्रस्योत्पाद्य शोणितं ।

१ न पुनर्नेति ख० ।
२ कृच्छ्रैर्विंशुद्ध्यति इति ग०, घ०, ङ० च ।
३ नरोष्ट्रमिश्रवराहैश्चेति ङ० ।
४ न हुङ्कारमिति ख०, घ०, ङ० च । चोङ्कारमिति ग०, ङ० च ; हुङ्कारमिति क० ।

चाण्डालादिरविज्ञातो यस्य तिष्ठेत वेश्मनि ॥१६॥
सम्यग् ज्ञातस्तु कालेन तस्य कुर्वीत शोधनं ।
चान्द्रायणं पराकं वा द्विजानान्तु विशोधनं ॥१७॥
प्राजापत्यन्तु शूद्राणां शेषन्तदनुसारतः ।
गुडङ्कुसुम्भं लवणं तथा धान्यानि यानि च ॥१८॥
कृत्वा गृहे ततो द्वारि तेषान्दद्याद्धुताशनं ।
मृण्मयानान्तु भाण्डानां त्याग एव विधीयते ॥१९॥
द्रव्याणां परिशेषाणां द्रव्यशुद्धिर्विधीयते ।
कूपैकपानसक्ता ये स्पर्शात्सङ्कल्पदूषिताः(१) ॥२०॥
शुद्धेयुरुपवासेन पञ्चगव्येन वाप्यथ ।
यस्तु संस्पृश्य चण्डालमश्नीयाच्च स्वकामतः ॥२१॥
द्विजश्चान्द्रायणं कुर्य्यात्तप्तकृच्छ्रमथापि वा ।
भाण्डसङ्कलसङ्कीर्णश्चाण्डालादिजुगुप्सितैः ॥२२॥
भुक्त्वापीत्वा तथा तेषां षड्रात्रेण विशुध्यति ।
अन्त्यानां भुक्तशेषन्तु भक्षयित्वा द्विजातयः ॥२३॥
व्रतं चान्द्रायणं कुर्य्युस्त्रिरात्रं शूद्र एव तु ।
चण्डालकूपभाण्डेषु अज्ञानात्पिवते जलं ॥२४॥
द्विजः शान्तपनं कुर्य्याच्छूद्रश्चोपवसेद्दिनं ।
चण्डालेन तु संस्पृष्टो(२) यस्त्वपः पिवते द्विजः ॥२५॥
त्रिरात्रन्तेन कर्त्तव्यं शूद्रश्चोपवसेद्दिनं ।
उच्छिष्टेन यदि(३) स्पृष्टः शुना शूद्रेण वा द्विजः ॥२६॥

---

१ स्पर्शसङ्कल्पदूषिता इति ग० ।    ३ यदीति ख०, ग०, घ०, ङ०, ञ० च ।
२ संस्पृष्ट इति ख० ।

उपोष्य रजनीमेकां पञ्चगव्येन शुद्ध्यति।
वैश्येन क्षत्रियेणैव स्नानं नक्तं समाचरेत् ॥ २७ ॥
अध्वानं प्रस्थितो विप्रः कान्तारे यद्यनूदके।
पक्वान्नेन गृहीतेन मूत्रोच्चारङ्करोति वै ॥ २८ ॥
अनिधायैव तद्द्रव्यं अङ्गे कृत्वा तु संस्थितं।
शौचं कृत्वान्नमभ्युक्ष्य अर्कस्याग्नेश्च दर्शयेत् ॥ २९ ॥
म्लेच्छैर्गतानां चौरैर्वा कान्तारे वा प्रवासिनां।
भक्ष्याभक्ष्यविशुद्ध्यर्थं(१) तेषां वक्ष्यामि निष्कृतिं ॥ ३० ॥
पुनः प्राप्य स्वदेशञ्च वर्णानामनुपूर्वशः।
कृच्छ्रस्यान्ते ब्राह्मणस्तु पुनः संस्कारमर्हति ॥ ३१ ॥
पादोनान्ते क्षत्रियश्च अर्द्धान्ते वैश्य एव च।
पादं कृत्वा तथा शूद्रो दानं दत्वा विशुद्ध्यति ॥ ३२ ॥
उदक्या तु सवर्णा या स्पृष्टा चेत् स्यादुदक्यया।
तस्मिन्नेवाहनि स्नाता शुद्धिमाप्नोत्यसंशयं ॥ ३३ ॥
रजस्वला तु नाश्नीयात् संस्पृष्टा हीनवर्णया।
यावन्न शुद्धिमाप्नोति शुद्धस्नानेन शुद्ध्यति ॥ ३४ ॥
मूत्रं कृत्वा व्रजन्मर्त्यः स्मृतिभ्रंशाज्जलं पिबेत्।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ॥ ३५ ॥
मूत्रोच्चारं द्विजः कृत्वा अकृत्वा शौचमात्मनः।
मोहाद्भुक्त्वा(२) त्रिरात्रन्तु यवान् पीत्वा विशुद्ध्यति ॥
ये प्रत्यवसिता विप्राः प्रव्रज्यादिबलात्तथा।

१ भक्ष्याभक्ष्यविशुद्ध्यर्थमिति ख०। २ मोहाद्भुक्त्वेति क०, ग०, घ०, ङ०, ज०

अनाशकनिवृत्तास्तु तेषां शुद्धिः प्रचक्ष्यते ॥ ३७ ॥
धारयेत्त्रीणि कृच्छ्राणि चान्द्रायणमथापि वा ।
जातकर्म्मादिसंस्कारैः संस्कुर्य्यात्तं तथा पुनः ॥ ३८ ॥
उपानद्भ्यममेध्यं च यस्य संस्पृश्यते मुखं ।
मृत्तिकागोमयौ तत्र पञ्चगव्यञ्च शोधनं ॥ ३९ ॥
वापनं विक्रयश्चैव नीलवस्त्रादिधारणं ।
तपनीयं हि विप्रस्य त्रिभिः कृच्छ्रैर्विशुद्ध्यति ॥ ४० ॥
अन्त्यजातिश्वपाकेन(१) संस्पृष्टा स्त्री रजस्वला ।
चतुर्थेऽहनि शुद्धा सा त्रिरात्रं तत्र आचरेत्(२) ॥ ४१ ॥
चाण्डालश्वपचौ स्पृष्ट्वा तथा पूयञ्च सूतिकां ।
शवं तत्स्पर्शिनं स्पृष्ट्वा(३) सद्यः स्नानेन शुद्ध्यति ॥ ४२ ॥
नारं स्पृष्ट्वास्थि सस्नेहं स्नात्वा विप्रो विशुद्ध्यति ।
रथ्याकर्द्दमतोयेन अधोनाभेर्मृदोदकैः ॥ ४३ ॥
वान्तो विरिक्तः स्नात्वा तु घृतं प्राश्य विशुद्ध्यति ।
स्नानात् क्षुरकर्मकर्त्ता कृच्छ्रकृद्ग्रहणेऽन्नभुक् ॥ ४४ ॥
अपाङ्क्तेयाशी गव्याशी शुना दष्टस्तथा शुचिः ।
कृमिदष्टश्चात्मघाती कृच्छ्राच्चान्द्राच्च होमतः ॥ ४५ ॥
होमाद्यैश्चानुतापैश्च पूयन्ते पापिनोऽखिलाः(४) ।

इत्याग्नेये महापुराणे प्रायश्चित्तानि नाम सप्तत्यधिक-
शततमोऽध्यायः ॥

---

१ अन्त्यजैश्च श्वपाकैश्चेति ख० ।
२ अन्त्यजातिश्वपाकेनेत्यादि, तत्र आचरेदित्यन्तः पाठः ख० पुस्तके नास्ति ।
३ शवमानस्पर्शिनं स्नानमिति ख० । शवमानत्स्पृहिनं स्नानमिति घ०, ङ० च ।
४ अधोवारं द्विज कृत्यादि, पूयन्ते पापिनोऽखिला इत्यन्तः पाठः ख०, ङ० पुस्तके नास्ति ।

## अथ एकसप्तत्यधिकशततमोऽध्यायः ।



### प्रायश्चित्तानि ।

पुष्कर उवाच । प्रायश्चित्तं रहस्यादि वक्ष्ये शुद्धिकरं परं ।
पौरुषेण तु सूक्तेन मासं जप्यादिनाघहा ॥ १ ॥
मुच्यते पातकैः सर्व्वैर्ज्जप्त्वा त्रिरघमर्षणं ।
वेदजप्याद्वायुयमाद्गायत्र्या व्रततोऽघहा(१) ॥ २ ॥
मुण्डनं सर्वकृच्छ्रेषु स्नानं होमो हरेर्यजिः ।
उत्थितस्तु दिवा तिष्ठेदुपविष्टस्तथा निशि ॥ ३ ॥
एतद्वीरासनं प्रोक्तं कृच्छ्रकृत्तेन पापहा ।
अष्टभिः प्रत्यहं ग्रासैर्यतिचान्द्रायणं स्मृतं ॥ ४ ॥
प्रातश्चतुर्भिः सायञ्च शिशुचान्द्रायणं स्मृतं ।
यथाकथञ्चित् पिण्डानां चत्वारिंशच्छतद्वयं ॥ ५ ॥
मासेन भक्षयेदेतत् सुरचान्द्रायणं चरेत् ।
त्र्यहमुष्णं पिबेदापस्त्र्यहमुष्णं पयः पिबेत् ॥ ६ ॥
त्र्यहमुष्णं घृतं पीत्वा वायुभक्षो भवेत् त्र्यहं ।
तप्तकृच्छ्रमिदं प्रोक्तं शीतैः शीतं प्रकीर्त्तितं ॥ ७ ॥
कृच्छ्रातिकृच्छ्रं पयसा दिवसानेकविंशतिं ।
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकं ॥ ८ ॥

---

१ जपतोऽघहेति घ०, ङ० ज० च ।

एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतं ।
एतच्च प्रत्यहाभ्यस्तं महासान्तपनं स्मृतं ॥ ९ ॥
त्र्यहाभ्यस्तमथैकैकमतिसान्तपनं स्मृतं ।
कृच्छ्रं पराकसंज्ञं स्याद्द्वादशाहमभोजनं ॥ १० ॥
एकभक्तं त्र्यहाभ्यस्तं क्रमान्नक्तमयाचितं ।
प्राजापत्यमुपोष्यान्ते पादः स्यात् कृच्छ्रपादकः ॥ ११ ॥
फलैर्मासं फलं कृच्छ्रं बिल्वैः श्रीकृच्छ्र ईरितः ।
पद्माक्षैः स्यादामलकैः पुष्पकृच्छ्रं तु पुष्पकैः ॥ १२ ॥
पत्रकृच्छ्रं तथा पत्रैस्तोयकृच्छ्रं जलेन तु ।
मूलकृच्छ्रस्तथा मूलैर्दध्ना क्षीरेण तक्रतः ॥ १३ ॥
मासं वायव्यकृच्छ्रं स्यात् पाणिपूरान्नभोजनात् ।
तिलैर्द्वादशरात्रेण कृच्छ्रमाग्नेयमार्त्तिनुत् ॥ १४ ॥
पक्षं प्रसृत्या लाजानां ब्रह्मकूर्च्चं तथा भवेत् ।
उपोषितश्चतुर्द्दश्यां पञ्चदश्यामनन्तरं ॥ १५ ॥
पञ्चगव्यं समश्नीयाद्धविष्याशीत्यनन्तरं ।
मासेन द्विर्नरः कृत्वा सर्वपापैः प्रमुच्यते ॥ १६ ॥
श्रीकामः पुष्टिकामश्च स्वर्गकामोऽघनष्टये ।
देवताराधनपरः कृच्छ्रकारी स सर्वभाक् ॥ १७ ॥

इत्याग्नेये महापुराणे रहस्यादिप्रायश्चित्तं नाम एकसप्त-
त्यधिकशततमोऽध्यायः ॥

---

# अथ द्विसप्तत्यधिकशततमोऽध्यायः ।



## सर्वपापप्रायश्चित्तानि ।

पुष्कर उवाच । परदारपरद्रव्यजीवहिंसादिके यदा ।
प्रवर्त्तते नृणां चित्तं प्रायश्चित्तं स्तुतिस्तदा ॥ १ ॥
विष्णवे विष्णवे नित्यं विष्णवे विष्णवे (१) नमः ।
नमामि विष्णुं चित्तस्थमहङ्कारगतिं हरिं ॥ २ ॥
चित्तस्थमीशमव्यक्तमनन्तमपराजितं ।
विष्णुमीड्यमशेषेण अनादिनिधनं विभुं ॥ ३
विष्णुश्चित्तगतो यन्मे विष्णुर्बुद्धिगतश्च यत् ।
यच्चाहङ्कारगो विष्णुर्यद्विष्णुर्मयि संस्थितः ॥ ४ ॥
करोति कर्मभूतोऽसौ स्थावरस्य चरस्य च ।
तत् पापं नाशमायातु तस्मिन्नेव हि चिन्तिते ॥ ५ ॥
ध्यातो हरति यत् पापं स्वप्ने दृष्टस्तु भावनात् ।
तमुपेन्द्रमहं विष्णुं प्रणतार्त्तिहरं हरिं ॥ ६ ॥
जगत्यस्मिन्निराधारे मज्जमाने तमस्यधः ।
हस्तावलम्बनं विष्णुं प्रणमामि परात् परं ॥ ७ ॥
सर्वेश्वरेश्वर विभो परमात्मन्नधोक्षज ।
हृषीकेश हृषीकेश हृषीकेश नमोऽस्तु ते ॥ ८ ॥
नृसिंहानन्त गोविन्द भूतभावन केशव ।

---

१ विष्णवे जिष्णवे इति ख॰ ग॰ च।

दुष्कृतं दुष्कृतं ध्यातं शमयाघं नमोऽस्तु ते ॥ ९ ॥
यन्मया चिन्तितं दुष्टं स्वचित्तवशवर्त्तिना ।
अकार्य्यमहदत्युग्रन्तच्छमन्नय केशव ॥ १० ॥
ब्रह्मण्यदेव गोविन्द परमार्थपरायण ।
जगन्नाथ जगद्धातः पापं प्रशमयाच्युत ॥ ११ ॥
यथापराह्णे सायाह्ने मध्याह्ने च तथा निशि ।
कायेन मनसा वाचा कृतं पापमजानता ॥ १२ ॥
जानता च हृषीकेश पुण्डरीकाक्ष माधव ।
नामत्रयोच्चारणतः स्वप्ने यातु मम क्षयं ॥ १३ ॥
शारीरं मे हृषीकेश पुण्डरीकाक्ष माधव ।
पापं प्रशमयाद्य त्वं(१) वाक्कृतं मम माधव ॥ १४ ॥
यद्भुञ्जन्यत्स्वपंस्तिष्ठन् गच्छन् जाग्रद् यदास्थितः ।
कृतवान् पापमद्याहं कायेन मनसा गिरा ॥ १५ ॥
यत् स्वल्पमपि यत् स्थूलं कुयोनिनरकावहं ।
तद्यातु प्रशमं सर्व्वं वासुदेवानुकीर्त्तनात् ॥ १६ ॥
परं ब्रह्म परं धाम पवित्रं परमञ्च यत् ।
तस्मिन्(२) प्रकीर्त्तिते विष्णौ यत् पापं तत् प्रणश्यतु ॥ १७ ॥
यत् प्राप्य न निवर्त्तन्ते गन्धस्पर्शादिवर्जितं ।
सूरयस्तत् परं विष्णोस्तत् सर्वं शमयत्वघं(३) । १८ ॥
पापप्रणाशनं स्तोत्रं यः पठेच्छृणुयादपि(४) ।

---

१ प्रशमात्पर्द्धेतिति ख, ग०, ञ० च ।
२ यस्मिन्निति ख० ।
३ सर्वं शमयत्विति ञ० ।
४ यः पठेच्छृणुया नर इति ज०, ञ० च । यः पठेच्छृणुयाद्वर इति ञ० ।

शारीरैर्मानसैर्वाग्जैः कृतैः पापैः प्रमुच्यते ॥ १९ ॥
सर्व्वपापग्रहादिभ्यो याति विष्णोः परं पदं ।
तस्मात् पापे कृते जप्यं स्तोत्रं सर्वाघमर्द्दनं ॥ २० ॥
प्रायश्चित्तमघौघानां स्तोत्रं व्रतकृते वरं ।
प्रायश्चित्तैः स्तोत्रजपैर्व्रतैर्नश्यति पातकं ॥ २१ ॥
ततः कार्य्याणि(१) संसिद्ध्यै तानि वै भुक्तिमुक्तये ।

इत्याग्नेये महापुराणे सर्व्वपापप्रायश्चित्ते पापनाशनस्तोत्रं नाम द्विसप्तत्यधिकशततमोऽध्यायः ॥

---

## अथ त्रिसप्तत्यधिकशततमोऽध्यायः ।

—:○:—

### प्रायश्चित्तं ।

अग्निरुवाच । प्रायश्चित्तं ब्रह्मणोक्तं वक्ष्ये पापोपशान्तिदं ।
स्यात् प्राणवियोगफलो व्यापारो हननं स्मृतं ॥ १ ॥
रागाद् द्वेषात् प्रमादाच्च स्वतः परत एव वा ।
ब्राह्मणं घातयेद्यस्तु स भवेद्ब्रह्मघातकः ॥ २ ॥
बहूनामेककार्य्याणां सर्व्वेषां शस्त्रधारिणां ।
यद्येको घातकस्तत्र सर्व्वे ते घातकाः स्मृताः ॥ ३ ॥
आक्रोशितस्ताडितो वा धनैर्व्वा परिपीडितः ।

---

१ ततः कर्म्मेति क०, ग०, ख०, ङ० च ।

यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकं ॥ ४ ॥
औषधाद्युपकारे तु न पापं स्यात् कृते मृते ।
पुत्रं शिष्यं तथा भार्य्यां शासते न मृते ह्यघं ॥ ५ ॥
देशं कालञ्च यः शक्तिं पापञ्चावेक्ष्य यत्नतः ।
प्रायश्चित्तं प्रकल्प्यं स्याद्यत्र चोक्ता न निष्कृतिः(१) ॥ ६ ॥
गवार्थे ब्राह्मणार्थे वा सद्यः प्राणान् परित्यजेत् ।
प्रास्येदात्मानमग्नौ वा मुच्यते ब्रह्महत्यया ॥ ७ ॥
शिरःकपाली ध्वजवान् भैक्षाशी कर्म वेदयन् ।
ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात् ॥ ८ ॥
षड्भिर्वर्षैः शुद्धचारी ब्रह्महा पूयते नरः ।
विहितं यदकामानां कामात्तु द्विगुणं स्मृतं ॥ ९ ॥
प्रायश्चित्तं प्रवृत्तस्य वधे स्यात्तु(२) त्रिवार्षिकं ।
ब्रह्मघ्ने क्षत्रे द्विगुणं विट्छूद्रे द्विगुणं त्रिधा ॥ १० ॥
अन्यत्र विप्रे सकलं पादोनं क्षत्रिये मतं ।
वैश्येऽर्द्धपादं क्षत्रे स्याद्वृद्धस्त्रीबालरोगिषु ॥ ११ ॥
तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतं ।
वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडशः ॥ १२ ॥
अप्रदुष्टां स्त्रियं हत्वा शूद्रहत्याव्रतं चरेत् ।
पञ्चगव्यं पिबेद्गोघ्नो मासमासीत संयतः ॥ १३ ॥
गोष्ठेशयो गोऽनुगामी गोप्रदानेन शुद्ध्यति ।
कृच्छ्रं चैवातिकृच्छ्रं वा पादह्रासो नृपादिषु ॥ १४ ॥
अतिवृद्धामतिकृशामतिबालाञ्च रोगिणीं ।

---

१ न दृष्टा निष्कृतिरिति ख०।　　२ वधेऽथ तु इति ख०।

( २४ )

हत्वा पूर्व्वविधानेन चरेद्देवव्रतं द्विजः ॥ १५ ॥
ब्राह्मणान् भोजयेच्छक्त्या दद्याद्धेमतिलादिकं ।
मुष्टिचपेटकीलेन तथा शृङ्गादिमोटने ॥ १६ ॥
लगुडादिप्रहारेण गोवधं तत्र निर्दिशेत् ।
दमने दामने चैव शकटादौ च योजने ॥ १७ ॥
स्तम्भशृङ्खलपाशैर्वा मृते पादोनमाचरेत् ।
काष्ठे शान्तपनं कुर्य्यात् प्राजापत्यन्तु लोष्टके ॥ १८ ॥
तप्तकृच्छ्रन्तु पाषाणे शस्त्रे चाप्यतिकृच्छ्रकं ।
मार्ज्जारगोधानकुलमण्डूकश्वपतत्रिणः ॥ १९ ॥
हत्वा त्र्यहं पिबेत् क्षीरं कृच्छ्रं चान्द्रायणं चरेत् ।
व्रतं रहस्ये रहसि प्रकाशेऽपि प्रकाशकं ॥ २० ॥
प्राणायामशतं कार्य्यं सर्व्वपापापनुत्तये ।
पानकं द्राक्षमधुकं खार्ज्जं रत्तालमैक्षवं ॥ २१ ॥
माध्वीकं टङ्कमाध्वीकं मैरेयं नारिकेलजं ।
न मद्यान्यपि मद्यानि पैष्टी मुख्या सुरा स्मृता ॥ २२ ॥
त्रैवर्ण्यस्य निषिद्धानि पीत्वा तप्त्वाप्यपः शुचिः ।
कणान् वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि ॥ २३ ॥
सुरापाणापनुत्त्यर्थं वालवासा जटी ध्वजी ।
अज्ञानात् प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च ॥ २४ ॥
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ।
मद्यभाण्डस्थिता आपः पीत्वा सप्तदिनं व्रती ॥ २५ ।
चाण्डालस्य तु पानीयं पीत्वा स्यात् षट्दिनं व्रती ।
चण्डालकूपभाण्डेषु पीत्वा शान्तपनं चरेत् ॥ २६ ॥

पञ्चगव्यं त्रिरात्रे पीत्वा चान्त्यजलं द्विजः।
मत्स्यकण्टकशम्बूकशङ्खशुक्तिकपर्दकान् ॥ २७ ॥
पीत्वा नवोदकं चैव पञ्चगव्येन शुद्ध्यति।
शवकूपोदकं पीत्वा त्रिरात्रेण विशुद्ध्यति ॥ २८ ॥
अन्त्यावसायिनामन्नं भुक्त्वा चान्द्रायणं चरेत्।
आपत्काले शूद्रगेहे मनस्तापेन शुद्ध्यति ॥ २९ ॥
शूद्रभाजनभुक् विप्रः पञ्चगव्यादुपोषितः।
कन्दुपक्वं स्नेहपक्वं स्नेहं च दधिशक्तवः ॥ ३० ॥
शूद्रादनिन्द्यान्येतानि गुडक्षीररसादिकं।
अस्नातभुक् चोपवासी दिनान्ते तु जपाच्छुचिः ॥ ३१ ॥
मूत्रोच्चार्य्यशुचिर्भुक्त्वा त्रिरात्रेण विशुद्ध्यति।
केशकीटावपन्नं च पादस्पृष्टञ्च कामतः ॥ ३२ ॥
भ्रूणघ्नावेक्षितं चैव संस्पृष्टं वाप्युदक्यया।
काकाद्यैरवलीढं च शुनासंस्पृष्टमेव च ॥ ३३ ॥
गवाद्यैरन्नमाघ्रातं भुक्त्वा त्र्यहमुपावसेत्।
रेतोविण्मूत्रभक्षी तु प्राजापत्यं समाचरेत् ॥ ३४ ॥
चान्द्रायणं नवश्राद्धे पराको मासिके मतः।
पक्षत्रयेऽतिकृच्छ्रं स्यात् षण्मासे कृच्छ्रमेव च ॥ ३५ ॥
आब्दिके पादकृच्छ्रं स्यादेकाहः पुनराब्दिके।
पूर्वेद्युर्वार्षिकं श्राद्धं परेद्युः पुनराब्दिकं ॥ ३६ ॥
निषिद्धभक्षणे भुक्ते प्रायश्चित्तमुपोषणं।
भूस्तृणं लशुनं भुक्त्वा(१) शिशुकं कृच्छ्रमाचरेत्(२) ॥ ३७ ॥

---

१ लशुन गृञ्जन भुक्त्वेति ख०। २ शिशुकृच्छ्रं समाचरेदिति ख०।

अभोज्यानान्तु भुक्तान्नं स्त्रीशूद्रोच्छिष्टमेव च।
जग्ध्वा मांसमभक्ष्यञ्च सप्तरात्रं पयः पिबेत् ॥ ३८ ॥
मधु मांसञ्च योऽश्नीयाच्छावं सूतकमेव वा।
प्राजापत्यं चरेत् कृच्छ्रं ब्रह्मचारी यतिर्व्रती ॥ ३९ ॥
अन्यायेन परस्वापहरणं स्तेयमुच्यते।
मुसलेन हतो राज्ञा स्वर्णस्तेयी विशुद्ध्यति ॥ ४० ॥
अधःशायी जटाधारी पर्णमूलफलाशनः।
एककालं समश्नानो द्वादशाब्दे विशुद्ध्यति ॥ ४१ ॥
रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः।
स्तेयं कृत्वा सुरां पीत्वा कृच्छ्रञ्चाब्दं चरेन्नरः ॥ ४२ ॥
मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च।
अयस्कांस्योपलानाञ्च द्वादशाहं कणान्नभुक् ॥ ४३ ॥
मनुष्याणान्तु हरणे स्त्रीणां क्षेत्रगृहस्य च।
वापीकूपतडागानां शुद्धिश्चान्द्रायणं स्मृतं ॥ ४४ ॥
भक्ष्यभोज्यापहरणे यानशय्यासनस्य च।
पुष्पमूलफलानाञ्च पञ्चगव्यं विशोधनं ॥ ४५ ॥
तृणकाष्ठद्रुमाणाञ्च शुष्कान्नस्य गुडस्य च।
चैलचर्मामिषाणाञ्च त्रिरात्रं स्यादभोजनं ॥ ४७ ॥
पितुः पत्नीञ्च भगिनीमाचार्यतनयान्तथा।
आचार्याणीं सुतां स्वाञ्च गच्छंश्च गुरुतल्पगः ॥ ४८ ॥
गुरुतल्पेऽभिभाष्यैनस्तप्ते पच्यादयोमये।
सूर्मीं ज्वलन्तीं स्वाश्लिष्य मृत्युना स विशुद्ध्यति ॥ ४९ ॥
चान्द्रायणान् वा चीन्मासानभ्यस्य गुरुतल्पगः।

एवमेव विधिं कुर्य्याद् योषित्सुपतितास्वपि ॥ ५० ॥
यत् पुंसः परदारेषु तच्चैनां कारयेद्व्रतं।
रेतः सिक्ता कुमारीषु चाण्डालीषु सुतासु च ॥ ५१ ॥
सपिण्डापत्यदारेषु प्राणत्यागो विधीयते।
यत् करोत्येकरात्रेण वृषलीसेवनं द्विजः ॥ ५२ ॥
तद्भैक्ष्यभुग्(१) जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति।
पितृव्यदारगमने भ्रातृभार्य्यागमे(२) तथा ॥ ५३ ॥
चाण्डालीं पुक्कसीं वापि स्नुषाञ्च भगिनीं सखीं।
मातुः पितुः स्वसारञ्च निक्षिप्तां शरणागतां ॥ ५४ ॥
मातुलानीं स्वसारञ्च सगोत्रामन्यमिच्छतीं।
शिष्यभार्य्यां गुरोर्भार्य्यां गत्वा चान्द्रायणञ्चरेत् ॥ ५५ ॥

इत्याग्नेये महापुराणे प्रायश्चित्तानि नाम त्रिसप्तत्य-
धिकशततमोऽध्यायः ॥

—

१ हविष्यभुगिति ख०, ट० च।　　२ भातृजायागमे इति ख०, ग०, ट० च।

# अथ चतुःसप्तत्यधिकशततमोऽध्यायः ।



## प्रायश्चित्तानि ।

अग्निरुवाच । देवाश्रमार्च्चनादीनां प्रायश्चित्तन्तु लोपतः ।
पूजालोपे चाष्टशतं जपेद्द्विगुणपूजनं ॥ १ ॥
पञ्चोपनिषदैर्मन्त्रैर्हुत्वा ब्राह्मणभोजनं ।
सूतिकान्त्यजकोदक्यास्पृष्टे देवे शतं जपेत्(१) ॥ २ ॥
पञ्चोपनिषदैः पूजां द्विगुणं स्नानमेव च ।
विप्रभोज्यं होमलोपे होमस्नानं तथार्च्चनं ॥ ३ ॥
होमद्रव्ये मूषिकाद्यैर्भक्षिते कीटसंयुते ।
तावन्मात्रं परित्यज्य प्रोक्ष्य देवादि पूजयेत् ॥ ४ ॥
अङ्कुरार्पणमात्रन्तु छिन्नं भिन्नं परित्यजेत् ।
अस्पृश्यैश्चैव संस्पृष्टे अन्यपात्रे तदर्पणं ॥ ५ ॥
देवमाश्रमविघ्नं पूजाकाले तथैव च ।
मन्त्रद्रव्यादिव्यत्यासे मूलं जप्त्वा पुनर्ज्जपेत् ॥ ६ ॥
कुम्भेनाष्टशतजपो देवे तु पतिते करात् ।
भिन्ने नष्टे चोपवासः शतहोमाच्छुभं भवेत्(२) ॥ ७ ॥

---

१ शतं जपेदिति ख॰, ग॰ च । २ शतहोमाच्छुचिर्भवेदिति ख॰, घ॰, ञ॰ च ।

कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते ।
प्रायश्चित्तन्तु तस्यैकं हरिसंस्मरणं परं ॥ ८ ॥
चान्द्रायणं पराको वा प्राजापत्यमघौघनुत् ।
सूर्य्येशशक्तिश्रीशादिमन्त्रजप्यमघौघनुत् ॥ ९ ॥
गायत्रीप्रणवस्तोत्रमन्त्रजप्यमघान्तकं ।
काद्यैराबीजसंयुक्तैराद्यैराद्यैस्तदन्तकैः ॥ १० ॥
सूर्य्येशशक्तिश्रीशादिमन्त्राः कोट्यधिकाः पृथक् ।
ओंह्रींमाद्याश्चतुर्थ्यन्ता नमोन्ताः सर्वकामदाः ॥ ११ ॥
नृसिंहद्वादशाष्टार्णमालामन्त्राद्यघौघनुत् ।
आग्नेयस्य पुराणस्य पठनं श्रवणादिकं ॥ १२ ॥
द्विविद्यारूपको विष्णुरग्निरूपस्तु गीयते ।
परमात्मा देवमुखं सर्ववेदेषु गीयते ॥ १३ ॥
प्रवृत्तौ तु निवृत्तौ तु इज्यते भुक्तिमुक्तिदः(१) ।
अग्निरूपस्य विष्णोर्हि हवनं ध्यानमर्चनं ॥ १४ ॥
जप्यं स्तुतिश्च प्रणतिः शारीराशेषाघौघनुत् ।
दशस्वर्णानि दानानि धान्यद्वादशमेव च ॥ १५ ॥
तुलापुरुषमुख्यानि महादानानि षोड़श ।
अन्नदानानि मुख्यानि सर्वाण्यघहराणि हि ॥ १६ ॥
तिथिवारर्क्षसङ्क्रान्तियोगमन्वादिकालके ।
व्रतादि सूर्य्येशशक्तिश्रीशादेरघघातनं(२) ॥ १७ ॥
गङ्गा गया प्रयागश्च काश्ययोध्या ह्यवन्तिका ।

---

१ प्रवृत्तेषु निवृत्तेषु इज्यते मुक्तिमुक्तिद इति घ०, ङ०, झ०, ञ० च ।　　२ [illegible]

सुक्षेत्रं पुष्करञ्च नैमिषं पुरुषोत्तमः॥ १९ ॥
शालग्रामप्रभासाद्यं तीर्थञ्चाघौघघातकं।
अहं ब्रह्म परं ज्योतिरितिध्यानमघौघनुत्॥ २०॥
पुराणं ब्रह्म चाग्नेयं ब्रह्मा विष्णुर्महेश्वरः।
अवताराः सर्वपूजाः प्रतिष्ठाप्रतिमादिकं॥ २१॥
ज्योतिःशास्त्रपुराणानि स्मृतयस्तु तपोव्रतं(१)।
अर्थशास्त्रञ्च सर्गाद्या आयुर्वेदो धनुर्मतिः॥ २२॥
शिक्षा छन्दो व्याकरणं निरुक्तञ्चाभिधानकं।
कल्पो न्यायश्च मीमांसा ह्यन्यत् सर्वं हरिः प्रभुः॥२३॥
एके द्वयोर्यतो यस्मिन् यः सर्वमिति वेद यः।
तं दृष्ट्वान्यस्य पापानि विनश्यन्ति हरिश्च सः॥ २४॥
विद्याष्टादशरूपश्च सूक्ष्मः स्थूलोऽपरो हरिः।
ज्योतिः सदक्षरं ब्रह्म परं विष्णुश्च निर्मलः॥ २५॥
इत्याग्नेये महापुराणे प्रायश्चित्तानि नाम चतुःसप्तत्यधिकशततमोऽध्यायः॥

## अथ पञ्चसप्तत्यधिकशततमोऽध्यायः।

—:○:—

व्रतपरिभाषा।

अग्निरुवाच। तिथिवारर्क्षदिवसमाससंवत्सरार्कसङ्क्रमे।
नृस्त्रीव्रतादि(२) वक्ष्यामि वसिष्ठ शृणु तत् क्रमात्॥ १

१ स्मृतयः श्रुतयो [illegible] क०, ख०, घ०, [illegible] पुस्तके नास्ति ङ०, च०। अयं श्लोकस्तादि०, तपोव्रत २ पुंस्त्री व्रतादीति क०, ङ०, च०।

शास्त्रोदितो हि नियमो व्रतं तच्च तपो मतं ।
नियमास्तु विशेषास्तु व्रतस्यैव दमादयः ॥ २ ॥
व्रतं हि कर्तृसन्तापात्तप इत्यभिधीयते ।
इन्द्रियग्रामनियमान्नियमश्चाभिधीयते ॥ ३ ॥
अनग्नयस्तु ये विप्रास्तेषां श्रेयोऽभिधीयते ।
व्रतोपवासनियमैर्नानादानैस्तथा द्विजः ॥ ४ ॥
ते स्युर्देवादयः(१) प्रीता भुक्तिमुक्तिप्रदायकाः ।
उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह ॥ ५ ॥
उपवासः स विज्ञेयः सर्वभोगविवर्जितः(२) ।
कांस्यं मांसं मसूरञ्च चणकं कोरदूषकं ॥ ६ ॥
शाकं मधु परान्नञ्च(३) त्यजेदुपवसन् स्त्रियं ।
पुष्पालङ्कारवस्त्राणि धूपगन्धानुलेपनं ॥ ७ ॥
उपवासे न शस्यन्ति दन्तधावनमञ्जनं ।
दन्तकाष्ठं पञ्चगव्यं कृत्वा प्रातर्व्रतञ्चरेत् ॥ ८ ॥
असकृज्जलपानाच्च ताम्बूलस्य च भक्षणात् ।
उपवासः प्रदुष्येत दिवास्वप्नाच्च मैथुनात् ॥ ९ ॥
क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः ।
देवपूजाग्निहरणं(४) सन्तोषोऽस्तेयमेव च ॥ १० ॥
सर्वव्रतेष्वयं धर्मः सामान्यो दशधा स्मृतः ।
पवित्राणि जपेच्चैव जुहुयाच्चैव शक्तितः ॥ ११ ॥

---

१ तैः सुर्देवादय इति क०, ख० च। २ शाकं दधि परान्नञ्चेति ख०, ग० च।
३ सर्वपापविवर्जित इति क०, ख० ४ देवपूजाग्निहवनमिति ख०, ग० च।
च। सर्वतः परिवर्जित इति ग०।

नित्यस्नायी मिताहारी(१) गुरुदेवद्विजार्चकः ।
क्षारं चौद्रञ्च लवणं मधु मांसानि वर्जयेत् ॥ १२ ॥
तिलमुद्गादृते शस्यं शस्ये गोधूमकोद्रवौ ।
चीनकं देवधान्यञ्च शमीधान्यं तथैवचं(२) ॥ १३ ॥
सितधान्यं तथा पर्ण्यं मूलं चारगणः स्मृतः ।
व्रीहिषष्टिकमुद्गाश्च कलायाः सतिला यवाः ॥ १४ ॥
श्यामाकाश्चैव नीवारा गोधूमाद्या व्रते हिताः ।
कुष्माण्डालाबुवार्त्ताकून् पालङ्कीम्पूतिकान्त्यजेत् ॥ १५ ॥
चरुभैक्ष्यं सक्तुकणाः शाकन्दधि घृतं पयः ।
श्यामाकशालिनीवारा यवकं मूलतण्डुलं ॥ १६ ॥
हविष्यं व्रतनक्तादावग्निकार्य्यादिके हितं ।
मधु मांसं विहायान्यद् व्रते वा हितमीरितं ॥ १७ ॥
त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितं ।
त्र्यहञ्चरञ्च नाश्नीयात् प्राजापत्यञ्चरन् द्विजः ॥ १८ ॥
एकैकं ग्रासमश्नीयात् त्र्यहाणि त्रीणि पूर्ववत् ।
त्र्यहञ्चोपवसेदन्त्यमतिकृच्छ्रं चरन् द्विजः ॥ १९ ॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकं ।
एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतं ॥ २० ॥
पृथक् सान्तपनद्रव्यैः षडहः सोपवासकः ।
सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनोऽघहा ॥ २१ ॥
द्वादशाहोपवासेन पराकः सर्व्वपापहा ।

१ पयाहार इति घ॰ । २ शमीधान्यं तथैव चेति ख॰, ग॰ च ।

महापराकस्त्रिगुणस्त्वयमेव प्रकीर्त्तितः ॥ २२ ॥
पौर्णमास्यां पञ्चदश्यग्रासममावास्यभोजनः ।
एकापाये ततो वृद्धौ चान्द्रायणमतोऽन्यथा ॥ २३ ॥
कपिलागोः पलं मूत्रं अर्द्धाङ्गुष्ठञ्च गोमयं ।
क्षीरं सप्तपलन्दद्यात् दध्नश्चैव पलद्वयं(१) ॥ २४ ॥
घृतमेकपलन्दद्यात् पलमेकं कुशोदकं ।
गायत्र्या गृह्य गोमूत्रं गन्धद्वारेति गोमयं ॥ २५ ॥
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ।
तेजोऽसीति तथा चाज्यं देवस्येति कुशोदकं(२) ॥ २६ ॥
ब्रह्मकूर्च्चो भवत्येवं आपो हिष्ठेत्यृचं जपेत् ।
अघमर्षणसूक्तेन संयोज्य प्रणवेन वा ॥ २७ ॥
पीत्वा सर्वाघनिर्मुक्तो विष्णुलोकी ह्युपोषितः ।
उपवासी सायभोजी यतिः षष्ठान्नकालवान् ॥ २८ ॥
मांसवर्ज्जी चाश्वमेधी सत्यवादी दिवं व्रजेत् ।
अग्न्याधेयं प्रतिष्ठाञ्च यज्ञदानव्रतानि च ॥ २९ ॥
देवव्रतवृषोत्सर्गचूडाकरणमेखलाः ।
माङ्गल्यमभिषेकञ्च मलमासे विवर्ज्जयेत् ॥ ३० ॥
दर्शाद्दर्शस्तु चान्द्रः स्यात् त्रिंशाहश्चैव सावनः ।
मासः सौरस्तु सङ्क्रान्तेर्नाक्षत्रो भविवर्त्तनात् ॥ ३१ ॥
सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः(३) ।

---

१ दध्नश्चैव पलत्रयमिति घ०, ञ०, ट० ।
२ गायत्र्या इत्यादिः कुशोदकमित्यन्तः पाठः ङ० पुस्तके नास्ति ।
३ सावनो मत इति ङ० ।

आब्दिके पितृकार्य्ये च चान्द्रो मासः प्रशस्यते ॥ ३२ ॥
आषाढीमवधिं कृत्वा यः स्यात्पक्षस्तु पञ्चमः ।
कुर्य्याच्छ्राद्धन्तत्र रविः कन्यां गच्छतु वा न वा ॥ ३३ ॥
मासि संवत्सरे चैव तिथिद्वैधं यदा भवेत् ।
तत्रोत्तरोत्तमा ज्ञेया पूर्वा तु स्यात् मलिम्लुचा ॥ ३४ ॥
उपोषितव्यं नक्षत्रं येनास्तं याति भास्करः ।
दिवा पुण्यास्तु तिथयो रात्रौ नक्तव्रते शुभाः ॥ ३५ ॥
युग्माग्निक्षतभूतानि(१) षण्मुन्योर्वसुरन्ध्रयोः ।
रुद्रेण द्वादशी युक्ता चतुर्दश्याथ(२) पूर्णिमा ॥ ३६ ॥
प्रतिपदा त्वमावास्या तिथ्योर्युग्मं महाफलं ।
एतद्व्यस्तं महाघोरं हन्ति पुण्यं पुराकृतं ॥ ३७॥
नरेन्द्रमन्त्रिव्रतिनां(३) विवाहोपद्रवादिषु ।
सद्यः शौचं समाख्यातं कान्तारापदि संपदि ॥ ३८ ॥
आरब्धदीर्घतपसां न राजा व्रतहा स्त्रियाः ।
गर्भिणी सूतिका नक्तं कुमारी च रजस्वला ॥ ३९ ॥
यदाऽशुद्धा तदान्येन कारयेत क्रियाः सदा ।
क्रोधात् प्रमादाल्लोभाद्वा व्रतभङ्गो भवेद्यदि ॥ ४० ॥
दिनत्रयं न भुञ्जीत मुण्डनं शिरसोऽथ वा ।
असामर्थ्ये व्रतकृतो पत्नीं वा कारयेत् सुतं ॥ ४१ ॥
सूतके मृतके कार्यं प्रारब्धं पूजनोज्झितं ।
प्रतस्यं मूर्च्छितं दुग्धपानाद्यैरुद्धरेद् गुरुः ॥ ४२ ॥

१ युग्माग्निकृतभूतानीति ख०, ज० च । २ चतुर्दश्या चाम्ब ग० । ३ नरेन्द्रमन्त्रिव्रतिनामिति घ०, ग०, ज०, ख० च ।

अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधं॥ ४३॥
कीर्त्तिसन्ततिविद्यादिसौभाग्यारोग्यवृद्धये।
नैर्मल्यभुक्तिमुक्त्यर्थं कुर्वे व्रतपते व्रतं॥ ४४॥
इदं व्रतं मया श्रेष्ठ गृहीतं पुरतस्तव।
निर्विघ्नां सिद्धिमायातु त्वत्प्रसादात् जगत्पते॥ ४५॥
गृहीतेऽस्मिन् व्रतवरे(१) यद्यपूर्णे म्रिये ह्यहं।
तत्सर्वं पूर्णमेवास्तु प्रसन्ने त्वयि सत्पतौ॥ ४६॥
व्रतमूर्त्तिं जगद्मूर्त्तिं मण्डले सर्वसिद्धये।
आवाहये नमस्तुभ्यं सन्निधीभव केशव॥ ४७॥
मनसा कल्पितैर्भक्त्या पञ्चगव्यैर्जलैः शुभैः।
पञ्चामृतैः स्नापयामि त्वं मे च भव पापहा॥ ४८॥
गन्धपुष्पोदकैर्युक्तमर्घ्यमर्घ्यपते शुभं।
गृहाण पाद्यमाचाममर्घार्हं कुरु मां सदा॥ ४९॥
वस्त्रं वस्त्रपते पुण्यं गृहाण कुरु मां सदा।
भूषणाद्यैः सुवस्त्राद्यैश्छादितं व्रतसत्पते॥ ५०॥
सुगन्धिगन्धं विमलं गन्धमूर्त्ते गृहाण वै।
पापगन्धविहीनं मां कुरु त्वं हि सुगन्धिकं॥ ५१॥
पुष्पं गृहाण पुष्पादिपूर्णं मां कुरु सर्वदा।
पुष्पगन्धं सुविमलं आयुरारोग्यवृद्धये॥ ५२॥
दशाङ्गं गुग्गुलुघृतयुक्तं धूपं गृहाण वै।
सधूप धूपितं मां त्वं कुरु धूपितसत्पते॥ ५३॥

---

१ व्रते देव इति ग॰, घ॰, ञ॰, ऋ॰, ञ॰, ट॰ च।

दीपमूर्द्धशिखं दीप्तं गृहाणाखिलभासकं।
दीपमूर्त्ते प्रकाशाढ्यं सर्वदोर्द्ध्वगतिं कुरु ॥ ५४ ॥
अन्नादिकञ्च नैवेद्यं गृहाणान्नादि सत्पते।
अन्नादिपूर्णं कुरु मामन्नदं सर्वदायकं ॥ ५५ ॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं मया प्रभो।
यत् पूजितं व्रतपते परिपूर्णन्तदस्तु मे ॥ ५६ ॥
धर्मं देहि धनं देहि सौभाग्यं गुणसन्ततिं।
कीर्त्तिं विद्यां(१)देहि चायुः स्वर्गं मोक्षञ्च देहि मे ॥५७॥
इमां पूजां व्रतपते गृहीत्वा व्रज साम्प्रतं।
पुनरागमनायैव वरदानाय वै प्रभो ॥ ५८ ॥
स्नात्वा व्रतवता सर्वव्रतेषु व्रतमूर्त्तयः।
पूज्याः सुवर्णजास्ता वै शक्त्या वै भूमिशायिना ॥ ५९ ॥
जपो होमश्च सामान्यव्रतान्ते दानमेव च।
चतुर्विंश द्वादश वा पञ्च वा त्रय एककः ॥ ६० ॥
विप्राः प्रपूज्या गुरवो(२) भोज्याः शक्त्या तु दक्षिणा।
देया गावः सुवर्णाद्याः पादुकोपानहौ पृथक् ॥ ६१ ॥
जलपात्रञ्चान्नपात्रमृत्तिकाच्छत्रमासनं(३)।
शय्या वस्त्रयुगं कुम्भाः परिभाषेयमीरिता ॥ ६२ ॥

इत्याग्नेये महापुराणे व्रतपरिभाषानाम पञ्चसप्तत्यधिक-शततमोऽध्यायः॥

---

१ कीर्त्तिं इहैवेति घ०, ङ० च। ज०, ट० च।
२ विप्रा. पूज्याः समस्त इति घ०,
३ मुद्रिकाच्छत्रमासनमिति घ०।

# अथ षट्सप्तत्यधिकशततमोऽध्यायः ।



प्रतिपद्व्रतानि ।

अग्निरुवाच । वक्ष्ये प्रतिपदादीनि व्रतान्यखिलदानि ते ।
कार्त्तिकाश्वयुजे चैत्रे प्रतिपद्ब्रह्मणस्तिथिः ॥ १ ॥
पञ्चदश्यां निराहारः प्रतिपद्यर्चयेदजं ।
ओं तत् सद्ब्रह्मणे नमो गायत्र्या वाब्दमेककं ॥ २ ॥
अक्षमालास्रुवन्दक्षे(१) वामे स्रुचकमण्डलु(२) ।
लम्बकूर्चञ्च जटिलं हैमं ब्रह्माणमर्चयेत् ॥ ३ ॥
शक्त्या क्षीरं प्रदद्यात्तु ब्रह्मा मे प्रीयतामिति ।
निर्मलो भोगभुक् स्वर्गे भूमौ विप्रो धनी भवेत् ॥ ४ ॥
धन्यं व्रतं प्रवक्ष्यामि अधन्यो धन्यतां व्रजेत् ।
मार्गशीर्षे प्रतिपदि नक्तं हुत्वा ह्युपोषितः(३) ॥ ५ ॥
अग्नये नम इत्यग्निं प्रार्च्याब्दं सर्वभाग् भवेत् ।
प्रतिपद्येकभक्ताशी समाप्ते कपिलाप्रदः ॥ ६ ॥
वैश्वानरपदं याति शिखिव्रतमिदं स्मृतं ।

इत्याग्नेये महापुराणे प्रतिपद्व्रतानि नाम षट्सप्तत्यधिकशततमोऽध्यायः ॥

---

१ अक्षमालास्रुचं दक्षे इति ङ० । वामे स्रुवकमण्डलु इति ङ० ।
२ वामे दक्षकमण्डलु इति ख०, ग० । ३ नक्तं हुत्वाप्युपोषित इति ग० ।

# अथ सप्तसप्तत्यधिकशततमोऽध्यायः।



द्वितीयाव्रतानि।

अग्निरुवाच। द्वितीयाव्रतकं वक्ष्ये भुक्तिमुक्त्यादिदायकं।
पुष्पाहारी द्वितीयायामश्विनौ पूजयेत् सुरौ ॥ १ ॥
अब्दं स्वरूपसौभाग्य स्वर्गभाग् जायते व्रती।
कार्त्तिके शुक्लपक्षस्य(१) द्वितीयायां यमं यजेत् ॥ २ ॥
अब्दमुपोषितः स्वर्गं गच्छेन्न नरकं व्रती।
अशून्यशयनं वक्ष्ये अवैधव्यादिदायकं ॥ ३ ॥
कृष्णपक्षे द्वितीयायां श्रावणस्य चरेदिदं।
श्रीवत्सधारिन् श्रीकान्त श्रीधामन् श्रीपतेऽव्यय ॥ ४ ॥
गार्हस्थ्यं मा प्रणाशं मे यातु धर्मार्थकामदं।
अग्नयो मा प्रणश्यन्तु मा प्रणश्यन्तु देवताः ॥ ५ ॥
पितरो मा प्रणश्यन्तु मत्तो दाम्पत्यभेदतः।
लक्ष्म्या वियुज्यते देवो न कदाचिद्यथा भवान् ॥ ६ ॥
तथा कलत्रसम्बन्धो देव मा मे विभिद्यतां।
लक्ष्म्या न शून्यं वरद यथा ते शयनं विभो ॥ ७ ॥
शय्या ममाप्यशून्यास्तु तथैव मधुसूदन।
लक्ष्मीं विष्णुं यजेदब्दं दद्याच्छय्यां फलानि च ॥ ८ ॥
प्रतिमासं च सोमाय दद्यादर्घ्यं समन्त्रकं।

---

१ शुक्लपक्षे तु इति ख०।

गगनाङ्गणसन्दीप दुग्धाब्धिमथनोद्भव ॥ ८ ॥
भाभासितादिगाभोग रामानुज नमोऽस्तु ते।
श्रों श्रीं श्रीधराय नमः सोमात्मानं हरिं यजेत्॥ १०॥
घं टं भं हं श्रियै नमो दशरूपमहात्मने।
घृतेन होमो नक्तञ्च शय्यां दद्याद्द्विजातये(१) ॥ ११ ॥
दीपान्नभाजनैर्युक्तं छत्रोपानहमासनं।
सोदकुम्भञ्च प्रतिमां विप्रायाथ च पात्रकं(२) ॥ १२ ॥
पत्न्या य एष कुरुते भुक्तिमुक्तिमवाप्नुयात्।
कान्तिव्रतं प्रवक्ष्यामि कार्त्तिकस्य सिते चरेत्॥ १३ ॥
नक्तभोजी द्वितीयायां पूजयेद्बलकेशवौ।
वर्षं प्राप्नोति वै कान्तिमायुरारोग्यकादिकं ॥ १४ ॥
अथ विष्णुव्रतं वक्ष्ये मनोवाञ्छितदायकं।
पौषशुक्लद्वितीयादि कृत्वा दिनचतुष्टयं ॥ १५ ॥
पूर्वं सिद्धार्थकैः स्नानं ततः कृष्णतिलैः(३) स्मृतं।
वचया च तृतीयेऽह्नि सर्वौषध्या चतुर्थके ॥ १६ ॥
मुरामांसी वचा कुष्ठं शैलेयं रजनीद्वयं(४)।
सटी चम्पकमुस्तञ्च सर्वौषधिगणः स्मृतः ॥ १७ ॥
नाम्ना कृष्णाच्युतानन्त हृषीकेशेति पूजयेत्।
पादे नाभ्यां चक्षुषि च क्रमाच्छिरसि पुष्पकैः ॥ १८ ।
शशिचन्द्रशशाङ्केन्दुसञ्ज्ञाभिरार्घ्यं दन्दवे।
नक्तं भुञ्जीत च नरो यावत्तिष्ठति चन्द्रमाः ॥ १८ ॥

१ शय्यां दद्याद्द्वितीयके इति घ०, ञ०, २ शुक्लतिलैरिति ग० ।
२ घ०, ट०, ङ, ञ०, ज०, ठ० च । ४ पूर्वं सिद्धार्थकैरित्यादि, रजनीद्वय-
१ विप्रायाथ च पानकमिति ख०,ज०च। सितयन्त पाठ क० पुस्तके नास्ति।

षण्मासं पावनं चाब्दं प्राप्नुयात् सकलं व्रती।
एतद् व्रतं नृपैः स्त्रीभिः कृतं पूर्वं सुरादिभिः ॥ २० ॥

इत्याग्नेये महापुराणे द्वितीयाव्रतानि नाम सप्तसप्तत्यधिकशततमोऽध्यायः ॥

---

## अथाष्टसप्तत्यधिकशततमोऽध्यायः।

### तृतीयाव्रतानि।

अग्निरुवाच। तृतीयाव्रतान्याख्यास्ये भुक्तिमुक्तिप्रदानि ते।
ललितायां तृतीयायां मूलगौरीव्रतं शृणु ॥ १ ॥
तृतीयायां चैत्रशुक्ले ऊढा गौरी हरेण हि।
तिलस्नातोऽर्चयेच्छम्भुं गौर्या हैमफलादिभिः ॥ २ ॥
नमोऽस्तु पाटलायैव पादौ देव्याः शिवस्य च।
शिवायेति च सङ्कीर्त्य जयायै गुल्फयोर्यजेत् ॥ ३ ॥
त्रिपुरघ्नाय रुद्राय भवान्यै जङ्घयोर्द्वयोः।
शिवं रुद्रायेश्वराय(१) विजयायैव जानुनी ॥ ४ ॥
ईशायेति कटिं देव्याः(२) शङ्करायेति शङ्करम्।

---

१ शिवं वराय विजयायेति ख०, ङ० च। शिवं महादेश्वरायेति ज०, झ०, ञ०, ट० च।

२ ईशाय कटौ देव्याय इति ख०। ईशायेति कटौ देव्या इति ङ०।

कुचिद्वयञ्च कोटव्यै शूलिनं शूलपाणये ॥ ५ ॥
मङ्गलायै नमस्तुभ्यमुदरञ्चाभिपूजयेत् ।
सर्व्वात्मने नमो रुद्रमैशान्यै च कुचद्वयं ॥ ६ ॥
शिवं देवात्मने तद्वत् ह्लादिन्यै(१) कण्ठमर्च्चयेत् ।
महादेवाय च शिवमनन्तायै करद्वयं ॥ ७ ॥
त्रिलोचनायेति हरं बाहुं कालानलप्रिये(२) ।
सौभाग्यायै महेशाय भूषणानि प्रपूजयेत् ॥ ८ ॥
अशोकमधुवासिन्यै ईश्वरायेति चौष्ठकौ ।
चतुर्मुखप्रिया चास्यं हराय स्थाणवे नमः ॥ ९ ॥
नमोऽर्द्धनारीशहरमसिताङ्ग्यै च नासिकां ।
नम उग्राय लोकेशं ललितेति पुनर्भ्रुवौ ॥ १० ॥
सर्वाय पुरहन्तारं(३) वासन्त्यै चैव तालुकं(४) ।
नमः श्रीकण्ठनाथायै शितिकण्ठाय केशकं ॥ ११ ॥
भीमोग्राय सुरूपिण्यै शिरः सर्व्वात्मने नमः ।
मल्लिकाशोककमलकुन्दन्तगरमालती(५) ॥ १२ ॥
कदम्बकरवीरञ्च(६) बाणमम्लानकुङ्कुमं ।
सिन्दुवारञ्च मासेषु सर्व्वेषु क्रमशः स्मृतं ॥ १३ ॥
उमामहेश्वरौ पूज्य सौभाग्याष्टकमग्रतः(७) ।

---

१ शिव वेदात्मने लद्दरूपिण्यै इति ख०, ज०, ञ० च ।

५ मल्लिकाशोककमलकुन्दं [illegible] मालती- मञ्जरी इति ख०, ग०, [illegible] ।

स्थापयेद्(१) घृतनिष्पावकुसुम्भक्षीरजीवकं ॥ १४ ॥
तरुराजेक्षुलवणं(२) कुस्तुम्बुरुमथाष्टमं ।
चैत्रे शृङ्गोदकं प्राश्य देवदेव्यग्रतः स्वपेत् ॥ १५ ॥
प्रातः स्नात्वा समभ्यर्च्य विप्रदाम्पत्यमर्चयेत्(३)।
तदष्टकं द्विजे दद्याल्ललिता प्रीयतां मम(४) ॥ १६ ॥
शृङ्गोदकं(५) गोमयं च मन्दारं बिल्वपत्रकं ।
कुशोदकं दधि क्षीरं कार्त्तिके पृषदाज्यकम् ॥ १७ ॥
गोमूत्राज्यं कृष्णतिलं पञ्चगव्यं क्रमाशनं ।
ललिता विजया भद्रा भवानी कुमुदा शिवा ॥ १८ ॥
वासुदेवी तथा गौरी मङ्गला कमला सती ।
चैत्रादौ दानकाले च प्रीयतामिति वाचयेत् ॥ १९ ॥
फलमेकं परित्याज्यं(६) व्रतान्ते शयनं ददेत् ।
उमामहेश्वरं हैमं वृषभञ्च गवा सह ॥ २० ॥
गुरुञ्च मिथुनान्यर्च्य(७) वस्त्राद्यैर्भुक्तिमुक्तिभाक्(८)।
सौभाग्यारोग्यरूपायुः सौभाग्यशयनव्रतात् ॥ २१ ॥
नभस्ये वाथ वैशाखे कुर्य्यान्मार्गशिरस्यथ(९) ।

---

१ स्थापयेदिति ख॰, ङ॰ च।
२ तरुराजेक्षुलवणमिति ख॰, ङ॰, ट॰ च।
३ द्विजदाम्पत्यमर्चयेदिति ख०, घ॰, ङ॰, ट॰ च।
४ ललिता प्रीयतामिति ट॰।
५ शृङ्गोदकमिति ख०। कृष्णोदकमिति ख८, ङ॰ च।
६ परित्याज्यमिति ख॰, ज॰, ट॰ च। परित्यज्येति ख॰, ङ॰ च। परित्याज्यमिति छ॰।
७ गुरु मिथुनमभ्यर्चेति ङ॰।
८ वस्त्राद्यैः सर्वमाप्नुयादिति क॰, ख॰, घ॰, ङ॰, ज॰, झ॰, ट॰ च।
९ कुर्य्याद्वा मार्गशीर्षके इति ख॰, ङ॰ च।

शुक्लपक्षे तृतीयायां ललितायै नमो यजेत् ॥ २२ ॥
प्रतिपक्षं ततः प्राच्य व्रतान्ते(१) मिथुनानि च ।
चतुर्विंशतिमभ्यर्च्य वस्त्राद्यैर्भुक्तिमुक्तिभाक् ॥ २३ ॥
षष्ठी मार्गी द्वितीयोऽयं सौभाग्यव्रतमावदे ।
फाल्गुनादितृतीयायां लवणं यस्तु वर्जयेत् ॥ २४ ॥
समाप्ते शयनन्दद्याद्गृहञ्चोपस्करान्वितं ।
सम्पूज्य विप्रमिथुनं भवानी प्रीयतामिति(१) ॥ २५ ॥
सौभाग्यार्थं तृतीयोक्ता गौरीलोकादिदायिनी ।
माघे भाद्रे च वैशाखे तृतीयाव्रतमत्तया ॥ २६ ॥
दमनकतृतीयाकृत् चैत्रे दमनकैर्यजेत् ।
आत्मतृतीया मार्गस्य मार्थेच्छाभोजनादिना ॥ २७ ॥
गौरी काली उमा भद्रा दुर्गा कान्तिः सरस्वती ।
वैष्णवी लक्ष्मीः प्रकृतिः शिवा नारायणी क्रमात्(१)॥२८॥
मार्गतृतीयामारभ्य सौभाग्यं स्वर्गमाप्नुयात् ।

इत्याग्नेये महापुराणे तृतीयाव्रतानि नाम अष्टसप्तत्यधिकशततमोऽध्यायः ॥

---

१ व्रतान्ते इति ग०, घ०, ङ० च ।
१ षष्ठद्वारादि यथापि भवानी प्रीयतामिति इति ङ० ।
१ दमनकतृतीयाकृदित्यादि नारायणी क्रमादित्यन्त पाठः क० पुस्तके नास्ति ।

# अथैकोनाशीत्यधिकशततमोऽध्यायः ॥



## चतुर्थीव्रतानि ।

अग्निरुवाच । चतुर्थीव्रतान्याख्यास्ये भुक्तिमुक्तिप्रदानि ते[1]।

माघे शुक्लचतुर्थ्यान्तु उपवासी यजेद् गणं ॥ १ ॥
पञ्चम्याञ्च तिलान्नाशी वर्षान्निर्विघ्नतः[2] सुखी ।
गं स्वाहा[3] मूलमन्त्रोऽयं गामाद्यं हृदयादिकं ॥ २ ॥
आगच्छोल्काय चावाह्य गच्छोल्काय विसर्जनं ।
उल्कान्तैर्गादिगन्धाद्यैः पूजयेन्मोदकादिभिः ॥ ३ ॥

ओं महोल्काय विद्महे वक्रतुण्डाय[4] धीमहि तन्नो दन्ती प्रचोदयात् ।

मासि भाद्रपदे चापि चतुर्थीकृच्छिवं व्रजेत् ।
चतुर्थ्यङ्गारकेऽभ्यर्च्य गणं सर्वमवाप्नुयात् ॥ ४ ॥
चतुर्थ्यां फाल्गुने नक्तमविघ्नाख्या चतुर्थ्यपि ।
चतुर्थ्यां दमनैः पूज्य चैत्रे प्रार्च्य गणं सुखी ॥ ५ ॥

इत्याग्नेये महापुराणे चतुर्थीव्रतानि नाम एकोनाशीत्यधिकशततमोऽध्यायः ॥

---

१ चतुर्थीव्रतं वक्ष्ये भुक्तिमुक्तिप्रदायकमिति ख० ।
२ वर्षान्निर्विघ्न इति ङ०, ज० च । वर्षान्निर्विघ्नात् इति ञ० ।
३ गां स्वाहेति ख० ।
४ वक्रतुण्डायेति ख० । ग० च । वक्रतुण्डायेति ङ० । एकतुण्डायेति ज०, झ० च ।

## अथाशीत्यधिकशततमोऽध्यायः ।

———:०:———

### पञ्चमीव्रतानि ।

अग्निरुवाच । पञ्चमीव्रतकं वक्ष्ये आरोग्यस्वर्गमोक्षदं(१) ।

नभोनभस्याश्विने च कार्त्तिके शुक्लपक्षके ॥ १ ॥

वासुकिस्तक्षकः पूज्यः कालीयो मणिभद्रकः ।

ऐरावतो धृतराष्ट्रः कर्कोटकधनञ्जयौ ॥ २ ॥

एते प्रयच्छन्त्यभयमायुर्विद्यायशः श्रियं ।

इत्याग्नेये महापुराणे पञ्चमीव्रतानि नाम अशीत्यधिकशततमोऽध्यायः ॥

———

## अथैकाशीत्यधिकशततमोऽध्यायः ॥

———:०:———

### षष्ठीव्रतानि ।

अग्निरुवाच । षष्ठीव्रतानि वक्ष्यामि कार्त्तिकादौ समाचरेत्(१) ।

षष्ठ्यां फलाशनो(२) ऽर्घ्याद्यैर्भुक्तिमुक्तिमवाप्नुयात् ॥ १ ॥

---

१, आरोग्यधनमोक्षदमिति ङ० । ऐरावत इत्यादि, कार्त्तिकादौ समाचरे

दित्यन्तः पाठः ङ० पुस्तके नास्ति । २ षष्ठ्यां मलाशनोऽर्घ्याद्यैरिति ङ० ।

स्कन्दषष्ठीव्रत प्रोक्तं भाद्रे षष्ठ्यामथाक्षय ।
कृष्णषष्ठीव्रतं वक्ष्ये मार्गशीर्षे चरेच्च तत्(१) ॥ २ ॥
अनाहारी वर्षमेकं भुक्तिमुक्तिमवाप्नुयात् ।

इत्याग्नेये महापुराणे षष्ठीव्रतानि नाम एकाशीत्यधिकशततमोऽध्यायः ॥

---

## अथ द्व्यशीत्यधिकशततमोऽध्यायः ॥

सप्तमीव्रतानि ।

अग्निरुवाच । सप्तमीव्रतकं वक्ष्ये सर्वेषां भुक्तिमुक्तिदं(२) ।
माघमासेऽब्जके शुक्ले सूर्य्यं प्रार्च्य विशोकभाक् ॥ १ ॥
सर्वावाप्तिस्तु सप्तम्यां मासि भाद्रेऽर्कपूजनात् ।
पौषे मासि सितेऽनश्नन् प्रार्च्यार्कं पापनाशनं ॥ २ ॥
कृष्णपक्षे तु माघस्य सर्वावाप्तिस्तु सप्तमी ।
फाल्गुने तु सिते नन्दा सप्तमी चार्कपूजनात् ॥ ३ ॥
मार्गशीर्षे सिते प्रार्च्य सप्तमी चापराजिता ।
मार्गशीर्षे सिते चाब्दं पुत्रीया सप्तमी स्त्रियाः ॥ ४ ॥

इत्याग्नेये महापुराणे सप्तमीव्रतानि नाम द्व्यशीत्यधिकशततमोऽध्यायः॥

---

१ मार्गशीर्षं चरेद्व्रतमिति घ०, ञ०, भ०, छ० च।

२ सर्वेषां भुक्तिमुक्तिदमिति, घ०, ञ०, भ० च।

# अथ त्र्यशीत्यधिकशततमोऽध्यायः ।



अष्टमीव्रतानि ।

अग्निरुवाच । वक्ष्ये व्रतानि चाष्टम्यां रोहिण्यां प्रथमं व्रतं ।
मासि भाद्रपदेऽष्टम्यां रोहिण्यामर्द्धरात्रके ॥ १ ॥
कृष्णो जातो यतस्तस्यां जयन्ती स्यात्ततोऽष्टमी ।
सप्तजन्मकृतात् पापात् मुच्यते चोपवासतः ॥ २ ॥
कृष्णपक्षे भाद्रपदे अष्टम्यां रोहिणीयुते ।
उपोषितोऽर्चयेत् कृष्णं(१) भुक्तिमुक्तिप्रदायकं ॥ ३ ॥
आवाहयाम्यहं कृष्णं बलभद्रञ्च देवकीं ।
वसुदेवं यशोदाङ्गाः(२) पूजयामि नमोऽस्तु ते ॥ ४ ॥
योगाय योगपतये योगेशाय नमो नमः ।
योगादिसम्भवायैव गोविन्दाय नमो नमः ॥ ५ ॥
स्नानं कृष्णाय दद्यात्तु अर्घ्यं चानेन चान्दिन् ।
यज्ञाय यज्ञेश्वराय यज्ञानां पतये नमः ॥ ६ ॥
यज्ञादिसम्भवायैव गोविन्दाय नमो नमः ।

दीपदीप्त महादीपं दीपदीप्तिद सर्वदा(१) ॥ ८ ॥
मया दत्तं गृहाण त्वं कुरु चोर्द्धगतिं च मां ।
विश्वाय विश्वपतये विश्वेशाय नमो नमः(२) ॥ १० ॥
विश्वादिसम्भवायैव गोविन्दाय निवेदितं ।
धर्म्माय धर्म्मपतये धर्म्मेशाय नमो नमः ॥ ११ ॥
धर्म्मादिसम्भवायैव गोविन्द शयनं कुरु ।
सर्व्वाय सर्व्वपतये सर्व्वेशाय नमो नमः ॥ १२ ॥
सर्व्वादिसम्भवायैव गोविन्दाय च पावनं(३) ।
क्षीरोदार्णवसम्भूत अत्रिनेत्रसमुद्भव ॥ १३ ॥
गृहाणार्घ्यं शशाङ्केदं रोहिण्या सहितो मम ।
स्थण्डिले स्थापयेद्देवं सचन्द्रां रोहिणीं यजेत् ॥ १४ ॥
देवकीं वसुदेवं च यशोदां नन्दकं बलं ।
अर्द्धरात्रे पयोधाराः पातयेद् गुडसर्पिषा ॥ १५ ॥
वस्त्रहेमादिकं दद्याद्ब्राह्मणान् भोजयेद्व्रती ।
जन्माष्टमीव्रतकरः पुत्रवान्विष्णुलोकभाक्(४) ॥ १६ ॥
वर्षे वर्षे तु यः कुर्य्यात् पुत्रार्थी वेत्ति नो भयं(५) ।
पुत्रान् देहि धनं देहि आयुरारोग्यसन्ततिं ॥ १७ ॥
धर्म्मं कामं च सौभाग्यं स्वर्गं मोक्षं च देहि मे ।

इत्याग्नेये महापुराणे जयन्त्यष्टमीव्रतं नाम चतुरशीत्यधिक-
शततमोऽध्यायः ॥

---

१ सर्वद इति घ०, ङ० च । पावनमित्यन्त पाठः ङ०पुस्तके नास्ति ।
२ विश्वेशाय नमोऽस्तु ते इति ङ० । ४ लभ्यलोकभागिति ङ० ।
३ पावनमिति ङ० । सर्वायेत्यादि, ५ पुत्रार्थी लभते सुतमिति ङ०, ज० च ।

## अथ चतुरशीत्यधिकशततमोऽध्यायः ।

—:o:—

### अष्टमीव्रतानि ।

अग्निरुवाच । ब्रह्मादिमातृयजनात्प्रीयेन् मातृगणाष्टमीं ।
कृष्णाष्टम्यां चैत्रमासे पूज्याब्दं कृष्णमर्च्चभाक् ॥ १ ॥
कृष्णाष्टमीव्रतं वक्ष्ये मासि मार्गशिरे चरेत् ।
नक्तं कृत्वा शुचिर्भूत्वा गोमूत्रं प्राशयेन्निशि ॥ २ ॥
भूमिशायी निशायाञ्च शङ्करं पूजयेद् व्रती ।
पौषे शम्भुं घृतं प्राश्य माघे घोरं महेश्वरम्(१) ॥ ३ ॥
महादेवं फाल्गुने च तिलाशी(२) समुपोषितः ।
चैत्रे स्थाणुं यवाशी च वैशाखेऽथ शिवं यजेत् ॥ ४ ॥
कुशोदाशी पशुपतिं ज्यैष्ठे शृङ्गोदकाशनः ।
आषाढे गोमयाश्युग्रं श्रावणे सर्वमर्कभुक् ॥ ५ ॥
त्र्यम्बकं च भाद्रपदे विल्वपत्राशनो निशि ।
तण्डुलाशी चाश्वयुजे ईशं रुद्रन्तु कार्त्तिके ॥ ६ ॥
दध्याशी होमकारी स्यादब्दान्ते मण्डले यजेत्(३) ।
गोवस्त्रहेम गुरवे दद्याद्विप्रेभ्य ईदृशं ॥ ७ ॥
प्रार्थयित्वा द्विजान् भोज्य(४) भुक्तिमुक्तिमवाप्नुयात् ।

---

१ माघे घोरे महेश्वरमिति ख०, ङ०, ञ० च ।
२ तिलाशीति ख० ।
३ यजे यजे शु मण्डले इति ञ० ।
४ द्विजान् भोज्य इति ख० ।

नक्ताशी त्वष्टमीषु स्याद् वत्सरान्ते च धेनुदः ॥ ८ ॥
पौरन्दरं पदं याति स्वर्गतिव्रतमुच्यते(१)।
अष्टमी बुधवारेण पक्षयोरुभयोर्यदा ॥ ९ ॥
तदा व्रतं प्रकुर्व्वीत अथवा सगुडाशिता।
तस्यां नियमकर्त्तारो न स्युः खण्डितसम्पदः ॥ १० ॥
तण्डुलस्याष्टमुष्टीनां वर्ज्जयित्वाङ्गुलीद्वयं।
भक्तं कृत्वा चाम्रपुटे सकुशे सकुलाम्बिकां ॥ ११ ॥
साम्बिकां पूजयित्वाद्यं भुञ्जीत च कथाश्रवात्।
शक्तितो दक्षिणान्दद्यात् कर्कटीस्थफलान्वितां(२) ॥१२॥
धीरो द्विजोऽस्य(३) भार्य्यास्ति रम्भा पुत्रस्तु कौशिकः।
दुहिता विजया तस्य धीरस्य धनदो वृषः(४) ॥ १३ ॥
कौशिकस्तं गृहीत्वा तु गोपालैश्चारयन् हयं।
गङ्गायां स्नानकृत्येऽस्य(५) नीतश्चौरैर्वृषस्तदा ॥ १४ ॥
स्नात्वा वृषमपश्यन् स वृषं मार्गितुमागतः।
विजयाभगिनीयुक्तो ददर्श स सरोवरे ॥ १५ ॥
दिव्यस्त्रीयोषितां वृन्दमब्रवीद्देहि भोजनं।
स्त्रीवृन्दमूचे व्रतकृद् भुङ्क्ष्व त्वमतिथिर्यतः ॥ १६ ॥
व्रतं कृत्वा स बुभुजे प्राप्तवान् वनपालकं।

---

१ स्वर्गतिव्रतमुच्यते इति ख०, ग०, घ०, ङ०, ज०, ट० च। स्वर्गान्तिव्रतमुच्यते इति ञ०।
२ कर्कटीस्थफलान्वितामिति ख०, ग०, घ० च। कर्कटीस्थफलान्वितामिति ङ०।
३ धीरो द्विजोऽभूदिति ख०, ग०, घ०, ङ०, ज० च।
४ धीरस्य धनदो वृष इति ख०, ग०, ट० च। धीरस्य धनदो वृष इति घ०, ङ०, ज० च।
५ स्नानकृत्ये तु इति ख०।

गतो धीरः(१) सहपभो विजयासहितस्तदा ॥ १७ ॥
घोरेण(२) विजया दत्ता यमायान्तरितः पिता ।
व्रतभावात् कौशिकोऽपि ह्ययोध्यायां नृपोऽभवत् ॥ १८ ॥
पित्रोस्तु नरके दृष्ट्वा विजयार्त्तिं यमे गता ।
मृगयामागतं प्रोचे मुच्यते नरकात् कथं ॥ १९ ॥
व्रतद्वयाद्यमः प्रोचे प्राप्य तत् कौशिको ददौ ।
बुधाष्टमीद्वयफलं स्वर्गतौ पितरौ ततः(३) ॥ २० ॥
विजया हर्षिता चक्रे व्रतं भुक्त्यादिसिद्धये ।
अशोककलिका ह्यष्टौ ये पिबन्ति पुनर्वसौ ॥ २१ ॥
चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः ।
त्वामशोकहराभीष्ट मधुमाससमुद्भव ॥ २२ ॥
पिबामि शोकसन्तप्तो मामशोकं सदा कुरु ।
चैत्रादौ मातृपूजाकृदष्टम्यां जयते रिपून् ॥ २३ ॥

इत्याग्नेये महापुराणे अष्टमीव्रतानि नाम चतुरशीत्य-
धिकशततमोऽध्यायः ॥

## अथ पञ्चाशीत्यधिकशततमोऽध्यायः ।

——:○:——

### नवमीव्रतानि ॥

अग्निरुवाच । नवमीव्रतकं वक्ष्ये भुक्तिमुक्त्यादिसिद्धिदं ।
देवी पूज्याश्विने शुक्ले गौर्य्याख्यानवमीव्रतं ॥ १ ॥

---

१ गतो घोर इति ख०, ङ०, घ०, छ०, ञ०, ज० च।　　२ घोरेणेति ङ०।　　३ पितरौ गतेति ख०।

मन्वाग्नी त्वष्टमीषु स्याद् वत्सरान्ते च धेनुदः ॥ ८ ॥
पौरन्दरं पदं याति स्वर्गतिव्रतमुच्यते(१) ।
अष्टमी बुधवारेण पक्षयोरुभयोर्य्यदा ॥ ९ ॥
तदा व्रतं प्रकुर्व्वीत अथवा सगुडाशिता ।
तस्यां नियमकर्त्तारो न स्युः खण्डितसम्पदः ॥ १० ॥
तण्डुलस्याष्टमुष्टीनां वर्ज्जयित्वाङ्गुलीद्वयं ।
भक्तं कृत्वा चाम्रपुटे सकुशे सकुलाम्बिकां ॥ ११ ॥
सात्त्विकं पूजयित्वाङ्गं भुञ्जीत च कथाश्रवात् ।
शक्तितो दक्षिणान्दद्यात् कर्कटीन्तण्डुलान्वितां(२) ॥१२॥
धीरो द्विजोऽस्य(३) भार्य्यास्ति रम्भा पुत्रस्तु कौशिकः ।
दुहिता विजया तस्य धीरस्य धनदो वृषः(४) ॥ १३ ॥
कौशिकस्तं गृहीत्वा तु गोपालैश्चारयन् वृषं ।
गङ्गायां स्नानकृत्येऽस्य(५) नीतश्चौरैर्वृषस्तदा ॥ १४ ॥
स्नात्वा वृषमपश्यन् स वृषं मार्गितुमागतः ।
विजयाभगिनीयुक्तो ददर्श स सरोवरे ॥ १५ ॥
दिव्यस्त्रीयोषितां वृन्दमब्रवीद्देहि भोजनं ।
स्त्रीवृन्दमूचे व्रतकृद् भुङ्क्ष्व त्वमतिथिर्य्यतः ॥ १६ ॥
व्रतं कृत्वा स बुभुजे भ्रातवान् वनपालयं ।

---

१ स्वर्गतिव्रतमुच्यते इति ख०, घ०, ङ०, ज०, ञ०, ट० च ।
स्वर्गाप्तिव्रतमुच्यते इति क० ।
२ कर्कटीन्तण्डुलान्वितामिति ख०, घ०, ङ० च । मर्कटीन्तण्डुलान्वितामिति झ० ।
३ धीरो द्विजोऽस्येति ख०, घ०, ङ०, ज०, ञ० च ।
४ धीरस्य धनदो वृष इति ख०, ङ०, ट० च । धीरस्य धनदो वृष इति घ०, ङ०, ज०, ञ० च ।
५ स्नानकृत्येषु इति ट० ।

गतो धीरः(१) सद्वषभो विनयासहितस्तदा ॥ १७ ॥
धीरेण(२) विजया दत्ता यमायान्तरितः पिता।
व्रतभावात् कौशिकोऽपि ह्ययोध्यायां नृपोऽभवत् ॥ १८ ॥
पित्रोस्तु नरके दृष्ट्वा विजयार्तिं यमे गता।
मृगयामागतं प्रोचे मुच्यते नरकात् कथं ॥ १९ ॥
व्रतद्वयाद्यमः प्रोचे प्राप्य तत् कौशिको ददौ।
वृधाष्टमीद्वयफलं स्वर्गतौ पितरौ ततः(३) ॥ २० ॥
विजया हर्षिता चक्रे व्रतं भुक्त्यादिसिद्धये।
अशोककलिका ह्याष्टौ ये पिवन्ति पुनर्वसौ ॥ २१ ॥
चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः।
त्वामशोकहराभीष्ट मधुमाससमुद्भव ॥ २२ ॥
पिवामि शोकसन्तप्तो मामशोकं सदा कुरु।
चैत्रादौ मातृपूजाकृदष्टम्यां जयते रिपून् ॥ २३ ॥

इत्याग्नेये महापुराणे अष्टमीव्रतानि नाम चतुरशीत्यधिकशततमोऽध्यायः ॥

## अथ पञ्चाशीत्यधिकशततमोऽध्यायः।

—:०:—

### नवमीव्रतानि ॥

अग्निरुवाच। नवमीव्रतकं वक्ष्ये भुक्तिमुक्त्यादिसिद्धिदं।
देवी पूज्याश्विने शुक्ले गौर्याख्यानवमीव्रतं ॥ १ ॥

---

१ गतो वीर इति ख॰, ग॰, घ॰, ङ॰, ज॰, ञ॰ च।　　२ वीरेणेति ट॰।
३ पितरौ गतौ इति ख॰।

पिष्टकाख्या तु नवमी पिष्टाग्नी देविपूजनात् ।
अष्टम्यामाश्विने शुक्ले कन्यार्कमूलभे यदा ॥ २ ॥
अघार्दना सर्वदा वै महती नवमी स्मृता ।
दुर्गा तु नवगेहस्था एकागारस्थिताऽथवा ॥ ३ ॥
पूजिताष्टादशभुजा शेषाः षोडशसत्कराः(१) ।
शेषाः षोड़शहस्ताः स्युरञ्जनं डमरुन्तथा ॥ ४ ॥
रुद्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका ।
चण्डा चण्डवती पूज्या चण्डरूपातिचण्डिका ॥ ५ ॥
क्रमान्मध्ये चोग्रचण्डा दुर्गा महिषमर्दिनी(२) ।
ओं दुर्गे दुर्गे रक्षणि स्वाहा दशाक्षरो मन्त्रः ॥ ६ ॥
दीर्घाकारादिमन्त्रादिर्न्नवनेत्रो नमोऽन्तकः ।
षड्भिः पदैर्नमःस्वधावषट्कारहृदादिकं ॥ ७ ॥
अङ्गुष्ठादिकनिष्ठान्तं न्यस्याङ्गानि जपेच्छिवां(३) ।
एतज्जपति(४) यो गुह्यं नासौ केनापि बाध्यते ॥ ८ ॥
कपालं खेटकं घण्टां दर्पणन्तर्जनीन्धनुः ।
ध्वजडमरुकं पाशं वामहस्तेषु बिभ्रती ॥ ९ ॥
शक्तिमुद्गरशूलानि वज्रं खड्गञ्च कुन्तकं ।
शङ्खं चक्रं शलाकां च आयुधानि च पूजयेत् ॥ १० ॥
पशुञ्च काली कालीति जप्त्वा खड्गेन घातयेत् ।
कालि कालि वज्रेश्वरि लौहदण्डायै नमः ॥ ११ ॥

---

१ षोडशहस्तका इति ख०। २ दीर्घाकारादीत्यादिः, जपेच्छिवामित्यन्त
२ क्रमात् मध्ये चोग्रचण्डा तथा पाठः घ० ञ० भ० ष० पुस्तकेषु नास्ति।
महिषमर्दिनीमिति म०। ४ एवं जपतीति ज०, झ० च।

तदुत्थं रुधिरं मांसं पूतनायै च नैर्ऋते।
वायव्यां पापराक्षस्यै चरक्यै नम ईश्वरे॥ १२॥
विदारिकायै चाग्नेय्यां महाकौशिकमग्नये(१)।
तस्याग्रतो नृपः स्नायाच्छत्रं पिष्टमयं हरेत्(२)॥ १३॥
दद्यात् स्कन्दविशाखाभ्यां ब्राह्मणाया निशि ता यजेत्।
जयन्ती मङ्गला काली भद्रकाली कपालिनी॥ १४॥
दुर्गा शिवा क्षमा धात्री स्वाहा स्वधा नमोऽस्तु ते।
देवीं पञ्चामृतैः स्नाप्य पूजयेचार्हणादिना॥ १५॥
ध्वजादिरथयात्रादिबलिदानं वरादिकृत्।

इत्याग्नेये महापुराणे नवमीव्रतानि नाम पञ्चाशीत्य-धिकशततमोऽध्यायः॥

## अथ षडशीत्यधिकशततमोऽध्यायः।



### दशमीव्रतं।

अग्निरुवाच। दशमीव्रतकं वक्ष्ये धर्मकामादिदायकं।
दशम्यामेकभक्ताशी समाप्ते दशधेनुदः॥ १॥
दिशश्च काञ्चनीर्दद्याद्ब्राह्मणाधिपतिर्भवेत्।

इत्याग्नेये महापुराणे दशमीव्रतानि नाम षडशीत्य-धिकशततमोऽध्यायः॥

---

१ महाकौशिकं मध्यमे इति घ०, ञ०च।

२ पिष्टमय क्रमेदिति घ०, ञ०च।

## अथ सप्ताशीत्यधिकशततमोऽध्यायः ।

—:○:—

एकादशीव्रतं ।

अग्निरुवाच । एकादशीव्रतं वक्ष्ये भुक्तिमुक्तिप्रदायकं ।
दशम्यां नियताहारो मांसमैथुनवर्जितः(१) ॥ १ ॥
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
द्वादश्येकादशी यत्र तत्र सन्निहितो हरिः ॥ २ ॥
तत्र(२) क्रतुशतं पुण्यं त्रयोदश्यां तु पारणे ।
एकादशी कला यत्र परतो द्वादशी गता(३) ॥ ३ ॥
तत्र क्रतुशतं पुण्यन्त्रयोदश्यान्तु पारणे ।
दशम्येकादशीमिश्रा नोपोष्या नरकप्रदा ॥ ४ ॥
एकादश्यां निराहारो भुक्त्वा चैवापरेऽहनि ।
भोक्ष्येऽहं पुण्डरीकाक्ष शरणं मे भवाच्युत ॥ ५ ॥
एकादश्यां सिते पक्षे पुष्यर्क्षन्तु यदा भवेत् ।
सोपोष्याक्षय्यफलदा प्रोक्ता सा पापनाशिनी ॥ ६ ॥
एकादशी द्वादशी या श्रवणेन च संयुता ।
विजया सा तिथिः प्रोक्ता भक्तानां विजयप्रदा ॥ ७ ॥
एषैव फाल्गुने मासि पुष्यर्क्षेण च संयुता ।

---

१ मधुमांसविवर्जित इति ग० ।
२ यत्रेति ख०, ग०, ङ० च ।
३ द्वादशी भवेत्ति घ०, ङ० च । द्वादशी भवेदिति ख०, ञ० च ।

विजया प्रोच्यते सद्भिः कोटिकोटिगुणोत्तरा[1] ॥ ८ ॥
एकादश्यां विष्णुपूजा[2] कार्य्या सर्व्वोपकारिणी[3] ।
धनवान् पुत्रवान् लोके विष्णुलोके महीयते ॥ ९ ॥

इत्याग्नेये महापुराणे एकादशीव्रतं नाम सप्ताशीत्यधिकशततमोऽध्यायः ॥

## अथाष्टाशीत्यधिकशततमोऽध्यायः ।



### द्वादशीव्रतानि ।

अग्निरुवाच । द्वादशीव्रतकं वक्ष्ये भुक्तिमुक्तिप्रदायकं ।
एकभक्तेन नक्तेन तथैवायाचितेन च ॥ १ ॥
उपवासेन भैक्ष्येण चैवं द्वादशिकव्रती ।
चैत्रे मासि सिते पक्षे द्वादश्यां मदनं हरिं ॥ २ ॥
पूजयेद् भुक्तिमुक्त्यर्थी[4] मदनद्वादशीव्रती ।
माघशुक्ले तु द्वादश्यां भीमद्वादशिकव्रती ॥ ३ ॥
नमो नारायणायेति यजेद्विष्णुं स सर्वभाक् ।
फाल्गुने च सिते पक्षे गोविन्दद्वादशीव्रती ॥ ४ ॥
विशोकद्वादशीकारी यजेदाश्वयुजे हरिं ।
लवणं मार्गशीर्षे तु कृष्णमभ्यर्च्च यो नरः ॥ ५ ॥
ददाति शक्तद्वादश्यां स सर्व्वरसदायकः ।

---

१ कोटिकोटिगुणोत्तमेति घ० ।
२ एकादश्यामपि पूज्येति ख०, ङ० च । एकादश्यामभिपूज्येति ङ० ।
३ कार्य्या सर्व्वापकारिणीति ख०, ङ० च ।
४ भुक्तिमुक्त्यर्थमिति ख०, ङ० च ।

गोवत्सं पूजयेद् भाद्रे गोवत्सद्वादशीव्रती ॥ ६ ॥
माघ्यान्तु समतीतायां श्रवणेन तु संयुता ।
द्वादशी या भवेत् कृष्णा प्रोक्ता सा तिलद्वादशी ॥ ७ ॥
तिलैः स्नानन्तिलैर्होमो नैवेद्यन्तिलमोदकं ।
दीपश्च तिलतैलेन तथा देयं तिलोदकं ॥ ८ ॥
तिलाश्च देया विप्रेभ्यः फलं होमोपवासतः ।
ओं नमो भगवतेऽथो वासुदेवाय वै यजेत् ॥ ९ ॥
सकुलः स्वर्गमाप्नोति षट्तिलद्वादशीव्रती ।
मनोरथद्वादशीकृत् फाल्गुने तु सितेऽर्चयेत् ॥ १० ॥
नामद्वादशीव्रतकृत् केशवाद्यैश्च नामभिः ।
वर्षं यजेद्धरिं स्वर्गी न भवेन् नारकी नरः ॥ ११ ॥
फाल्गुनस्य सितेऽभ्यर्च्य सुमतिद्वादशीव्रती ।
मासि भाद्रपदे शुक्ले अनन्तद्वादशीव्रती(१) ॥ १२ ॥
अश्लेषर्क्षे तु मूले वा(२) माघे कृष्णाय वै नमः ।
यजेत्तिलांश्च जुहुयात्तिलद्वादशीकृन्नरः ॥ १३ ॥
सुगतिद्वादशीकारी फाल्गुने तु सिते यजेत् ।
जय कृष्ण नमस्तुभ्यं वर्षं स्याद् भुक्तिमुक्तिगः(३) ॥ १४ ॥
पौषशुक्ले तु द्वादश्यां सम्प्राप्तिद्वादशीव्रती ।

इत्याग्नेये महापुराणे नानाद्वादशीव्रतानि नामाष्टाशीत्यधिकशततमोऽध्यायः ॥

---

१ मनोरथद्वादशीत्यादि, अनन्तद्वादशीव्रतीत्यन्त पाठः ख० पुस्तके नास्ति ।
२ आषाढर्क्षे तु मूले वा इति ख०, ग०, ज०, ट० च ।
३ वर्षं स्याद् भुक्तिमुक्तिद इति ग०, ङ० च ।

# अथैकोननवत्यधिकशततमोऽध्यायः ।

—:○:—

## श्रवणद्वादशीव्रतम् ।

अग्निरुवाच । श्रवणद्वादशीं वक्ष्ये मासि भाद्रपदे सिते ।
श्रवणेन युता श्रेष्ठा(१) महती सा ह्युपोषिता ॥ १ ॥
सङ्गमे सरितां स्नानाच्छ्रवणद्वादशीफलं(२) ।
बुधश्रवणसंयुक्ता दानादौ सुमहाफला ॥ २ ॥
निषिद्धमपि कर्त्तव्यं त्रयोदश्यान्तु पारणं ।
द्वादश्याञ्च निराहारो वामनं पूजयाम्यहं ॥ ३ ॥
उदकुम्भे स्वर्णमयं त्रयोदश्यान्तु पारणं ।
आवाहयाम्यहं विष्णुं वामनं शङ्खचक्रिणं ॥ ४ ॥
सितवस्त्रयुगच्छन्ने घटे सच्छत्रपादुके ।
स्नापयामि जलैः शुद्धैर्विष्णुं(३)पञ्चामृतादिभिः ॥ ५ ॥
छत्रदण्डधरं विष्णुं वामनाय नमो नमः ।
अर्घ्यं ददामि देवेश अर्घ्याद्यैः सदार्चितः(४) ॥ ६ ॥
भुक्तिमुक्तिप्रजाकीर्त्तिसर्व्वैश्वर्ययुतं कुरु ।
वामनाय नमो गन्धं होमोऽनेनाष्टकं शतं ॥ ७ ॥

---

१ श्रवणेन समायुक्तेति ख०।
२ द्वादशद्वादशीफलमिति ख०, ग०, घ०, ङ०, झ०, ञ० च।
३ शुद्धैर्विष्णुमिति ग०, ट० च।
४ सदार्चित इति। ग०,

श्रीं नमो वासुदेवाय शिरः सम्पूजयेद्धरेः।
श्रीधराय मुखं तद्वत् कण्ठे कृष्णाय वै नमः॥ ८॥
नमः श्रीपतये वक्षो भुजौ सर्वास्त्रधारिणे।
व्यापकाय नमो नाभिं वामनाय नमः कटिं॥ ९॥
त्रैलोक्यजयकायेति(१) मेढ्रं जङ्घे यजेद्धरेः।
सर्व्वाधिपतये पादौ विष्णोः सर्व्वात्मने नमः॥ १०॥
घृतपक्वञ्च नैवेद्यन्दद्याद् दध्योदनैर्घटान्।
रात्रौ च जागरं कृत्वा प्रातः स्नात्वा च सङ्गमे॥ ११॥
गन्धपुष्पादिभिः पूज्य वदेत् पुष्पाञ्जलिस्त्विदं।
नमो नमस्ते गोविन्द बुधश्रवणसञ्ज्ञित॥ १२॥
अघौघसङ्क्षयं कृत्वा सर्वसौख्यप्रदो भव।
प्रीयतान्देव देवेश मम नित्यञ्जनार्द्दन॥ १३॥
वामनो बुद्धिदो दाता द्रव्यस्थो वामनः स्वयं।
वामनः प्रतिगृह्णाति वामनो मे ददाति च॥ १४॥
द्रव्यस्थो वामनो नित्यं वामनाय नमो नमः।
प्रदत्तदक्षिणो विप्रान् सम्भोज्यान्नं स्वयञ्चरेत्॥ १५॥

इत्याग्नेये महापुराणे श्रवणद्वादशीव्रतं नामैकोननव-
त्यधिकशततमोऽध्यायः॥

---

१ त्रैलोक्यजमनायेति ग०, ञ० च। त्रैलोक्यजमकायेति ङ०, ट० च।

## अथैकनवत्यधिकशततमोऽध्यायः ।

---

त्रयोदशीव्रतानि ।

अग्निरुवाच । त्रयोदशीव्रतानीह सर्वदानि वदामि ते ।
अनङ्गेन कृतामादौ वक्ष्येऽनङ्गत्रयोदशीं ॥ १ ॥
त्रयोदश्यां मार्गशीर्षे शुक्लेऽनङ्गं हरं यजेत्(१) ।
मधु सम्प्राशयेद्रात्रौ घृतहोमस्तिलाक्षतैः ॥ २ ॥
पौषे योगेश्वरं प्रार्च्य चन्दनाशी कृताहुतिः ।
महेश्वरं मौक्तिकाशी माघेऽभ्यर्च्य दिवं व्रजेत् ॥ ३ ॥
काकोलं प्राश्य नीरं तु(२) फाल्गुने पूजयेद्व्रती ।
कर्पूराशी स्वरूपं च चैत्रे सौभाग्यवान् भवेत् ॥ ४ ॥
महारूपन्तु वैशाखे यजेज्जातीफलाश्यपि ।
लवङ्गाशो ज्यैष्ठदिने(३) प्रद्युम्नं पूजयेद् व्रती ॥ ५ ॥
तिलोदाशी तथाषाढे उमाभर्त्तारमर्चयेत् ।
श्रावणे गन्धतोयाशी पूजयेच्छूलपाणिनम् ॥ ६ ॥
सद्योजातं भाद्रपदे प्राशिता गुरुमर्चयेत् ।
सुवर्णवारि संप्राश्य आश्विने त्रिदशाधिपम् ॥ ७ ॥

---

१ वरिं यजेदिति ख०, ज०, ञ० च ।
२ काकोलं प्राश्य चीनञ्चेति घ०, ञ०, भ०, ञ०, च ।
३ ज्येष्ठमासि इति ख०, घ०, ङ०, ज०, भ०, ञ०, च ।

विश्वेश्वरं कार्त्तिके तु मदनाख्यो यजेद्व्रती ।
शिवं हैमन्त्तु वर्षान्ते सल्लायाम्रदलेन तु ॥ ८ ।
वस्त्रेण पूजयित्वा तु दद्याद्विप्राय शान्तया ।
शयनव्रतकलशान् पादुकारसभाजनम् ॥ ९ ॥
त्रयोदश्यां सिते चैत्रे रतिप्रीतियुतं स्मरम् ।
अशोकाख्यं नगं लिख्य सिन्दूररजनीमुखैः ॥ १० ॥
अब्दं यजेत् कामार्थी कामत्रयोदशीव्रतम् ।

इत्याग्नेये महापुराणे त्रयोदशी व्रतानि नामैकनवत्य-
धिकशततमोऽध्यायः ॥

---

## अथ द्विनवत्यधिकशततमोऽध्यायः ।

---

### चतुर्दशीव्रतानि ।

अग्निरुवाच । व्रतं वक्ष्ये चतुर्दश्यां भुक्तिमुक्तिप्रदायकम्(१) ।
कार्त्तिके तु चतुर्दश्यां निराहारो यजेच्छिवम् ॥ १ ॥
वर्षं भोगधनायुष्यान्(२) कुर्वन् शिवचतुर्दशीम् ।
मार्गशीर्षे सिते ऽष्टम्यां व्रते यायां मुनिव्रतः ॥ २ ।

---

१ भुक्तिमुक्तिप्रदं शुभम् इति क०, ख०, ग०, घ०, ङ०, च। भुक्तिमुक्तिफलप्रदमिति ज० ।
२ भोगवान् पुत्रवानिति ख० ।

द्वादश्यां वा चतुर्दश्यां फलाहारो यजेत् सुरं(१)।
त्यक्त्वा फलानि दद्यात्तु कुर्व्वन् फलचतुर्द्दशी ॥ ३ ॥
चतुर्द्दश्या मथाष्टम्यां पक्षयोः शुक्लकृष्णयोः।
अनश्नन् पूजयेच्छम्भुं स्वर्ग्यभयचतुर्द्दशी ॥ ४ ॥
कृष्णाष्टम्यान्तु नक्तेन तथा कृष्णचतुर्द्दशी।
इह भोगानवाप्नोति परत्र च शुभाङ्गतिं ॥ ५ ॥
कार्त्तिके च चतुर्द्दश्यां कृष्णायां स्नानकृत् सुखी।
आराधिते महेन्द्रे तु ध्वजाकारासु यष्टिषु(२) ॥ ६ ॥
ततः शुक्लचतुर्द्दश्यामनन्तं पूजयेद्धरिं।
कृत्वा दर्भमयं चैव वारिधानो समन्वितं ॥ ७ ॥
शालिप्रस्थस्य पिष्टस्य पूपनाम्नः कृतस्य च।
अर्द्धं विप्राय दातव्यमर्द्धमात्मनि योजयेत्(३) ॥ ८ ॥
कर्त्तव्यं सरितां चान्ते कथां कृत्वा(४) हरेरिति।
अनन्तसंसारमहासमुद्रे मग्नान् समभ्युद्धर वासुदेव ॥ ९ ॥
अनन्तरूपे विनियोजयस्व अनन्तरूपाय नमो नमस्ते।
अनेन पूजयित्वाथ सूत्रं बद्धा तु मन्त्रितं ॥ १० ॥
स्वके करे वा कण्ठे वा त्वनन्तव्रतकृत् सुखी।
इत्याग्नेये महापुराणे नानाचतुर्दशीव्रतानि नाम द्विनवत्यधिकशततमोऽध्यायः ॥

१ यजेत् स्वयमिति ख०।
२ यष्टे भोग्यधनायुष्यामित्यादि ध्वजाकारासु ङ०, अ०, ट०, च। यष्टिषु इत्यन्त पाठ भ० पुस्तके नास्ति।
३ भोजयेदिति घ०, ङ०, ज०।
४ कथां कुर्य्यादिति भ०।

# अथ त्रिनवत्यधिकशततमोऽध्यायः ।



## शिवरात्रिव्रतम् ।

अग्निरुवाच । शिवरात्रिव्रतं वक्ष्ये भुक्तिमुक्तिप्रदं शृणु[1] ।
माघफाल्गुनयोर्मध्ये कृष्णा या तु चतुर्दशी ॥ १ ॥
कामयुक्ता तु सोपोष्या कुर्वन् जागरणं व्रती ।
शिवरात्रिव्रतं कुर्व्वे चतुर्दश्यामभोजनं ॥ २ ॥
रात्रिजागरणेनैव पूजयामि शिव व्रती ।
आवाहयाम्यहं शम्भुं भुक्तिमुक्तिप्रदायकं ॥ ३ ॥
नरकार्णवकोत्तारनावं शिव नमोऽस्तु ते ।
नमः शिवाय शान्ताय प्रजाराज्यादिदायिने ॥ ४ ॥
सौभाग्यारोग्यविद्यार्थस्वर्गमार्गप्रदायिने[2] ।
धर्मन्देहि धनन्देहि कामभोगादि देहि मे ॥ ५ ॥
गुणकीर्त्तिसुखं देहि स्वर्गं मोक्षं च देहि मे ।
लुब्धकः प्राप्तवान् पुण्यं पापी सुन्दरसेनकः ॥ ६ ॥

इत्याग्नेये महापुराणे शिवरात्रिव्रतं नाम त्रिनवत्यधि-
कशततमोऽध्यायः ॥

---

१ भुक्तिमुक्तिप्रदायकमिति ख०, ट० च । २ सर्गमोक्षप्रदायिने इति ङ० ।

## अथ चतुर्नवत्यधिकशततमोऽध्यायः।



अशोकपूर्णिमादिव्रतं।

अग्निरुवाच। अशोकपूर्णिमां वक्ष्ये भूधरं च भुवं यजेत्।
फाल्गुन्यां सितपक्षायां वर्षं स्याद्भुक्तिमुक्तिभाक्॥ १॥
कार्त्तिक्यान्तु वृषोत्सर्गं कृत्वा नक्तं समाचरेत्।
शैवं पदमवाप्नोति वृषव्रतमिदं परं॥ २॥
पित्र्या यामावसी तस्यां पितॄणां दत्तमक्षयं।
उपोष्याब्दं पितॄनिष्ट्वा निष्पापः स्वर्गमाप्नुयात्॥ ३॥
पञ्चदश्यां च माघस्य पूज्याजं सर्व्वमाप्नुयात्।
वक्ष्ये सावित्र्यमावास्यां भुक्तिमुक्तिकरीं शुभां॥ ४॥
पञ्चदश्यां व्रती ज्यैष्ठे वटमूले महासतीं।
त्रिरात्रोपोषिता नारी सप्तधान्यैः प्रपूजयेत्॥ ५॥
प्ररूढैः कण्ठसूत्रैश्च रजन्यां कुङ्कुमादिभिः।
वटावलम्बनं कृत्वा नृत्यगीतैः प्रभातके॥ ६॥
नमः सावित्र्यै सत्यवते नैवेद्यं चार्पयेद् द्विजे।
वेश्म गत्वा द्विजान् भोज्य स्वयं भुक्त्वा विसर्ज्जयेत्॥ ७॥
सावित्री प्रीयतां देवी सौभाग्यादिकमाप्नुयात्।

इत्याग्नेये महापुराणे तिथिव्रतानि नाम चतुर्नवत्यधिकशततमोऽध्यायः॥

## अथ पञ्चनवत्यधिकशततमोऽध्यायः ॥



वारव्रतानि ।

अग्निरुवाच । वारव्रतानि वक्ष्यामि भुक्तिमुक्तिप्रदानि हि ।
करं पुनर्व्वसुः सूर्य्यो स्नाने सर्व्वौषधी शुभा ॥ १ ॥
श्राद्धे चादित्यवारे तु सप्तजन्मस्वरोगभाक् ।
सङ्क्रान्तौ सूर्य्यवारो यः सोऽर्कस्य हृदयः शुभः ॥ २ ॥
कृत्वा हस्ते सूर्य्यवारं नक्तेनाब्दं स सर्व्वभाक् ।
चित्राभसोमवाराणि सप्त कृत्वा सुखी भवेत् ॥ ३ ॥
स्वात्यां गृहीत्वा चाङ्गारं सप्तनक्तार्त्तिवर्जितः ।
विशाखायां बुधं गृह्य सप्तनक्ती ग्रहार्त्तिनुत् ॥ ४ ॥
अनुराधे देवगुरुं सप्तनक्ती ग्रहार्त्तिनुत्(१) ।
शुक्रं ज्येष्ठासु सङ्गृह्य सप्तनक्ती ग्रहार्त्तिनुत् ॥ ५ ॥
मूले शनैश्चरं गृह्य सप्तनक्ती ग्रहार्त्तिनुत् ।

इत्याग्नेये महापुराणे वारव्रतानि नाम पञ्चनवत्यधिकशततमोऽध्यायः ॥



१ अनुराधे इत्यादि ग्रहार्त्तिनुदित्यन्तः पाठः ख॰ पुस्तके नास्ति ।

# अथ षणवत्यधिकशततमोऽध्यायः ।

—:०:—

## नक्षत्रव्रतानि ।

अग्निरुवाच । नक्षत्रव्रतकं वक्ष्ये भे हरिः पूजितोऽर्थदः(१) ।
नक्षत्रपुरुषं चादौ चैत्रमासे हरिं यजेत् ॥ १ ॥
मूले पादौ यजेज्जङ्घे रोहिणीष्वर्च्चयेद्धरिं ।
जानुनी चाश्विनीयोगे आषाढासूरुसंज्ञके ॥ २ ॥
मेढ्रं पूर्व्वोत्तरास्वेव कटिं वै कृत्तिकासु च ।
पार्श्वे भाद्रपदाभ्यान्तु कुक्षिं वै रेवतीषु च ॥ ३ ॥
स्तनौ चैवानुराधासु धनिष्ठासु च पृष्ठकं ।
भुजौ पूज्यौ विशाखासु पुनर्व्वस्वङ्गुलीर्यजेत् ॥ ४ ॥
अश्लेषासु नखान् पूज्य कण्ठं ज्येष्ठासु पूजयेत् ।
श्रोत्रे विष्णोश्च श्रवणे मुखं पुष्ये हरेर्यजेत् ॥ ५ ॥
यजेत् स्वातिषु दन्ताग्रमास्यं वारुणतोऽर्च्चयेत् ।
मघासु नासां नयने मृगशीर्षे ललाटकं ॥ ६ ॥
चित्रासु चार्द्रासु कचानब्दान्ते स्वर्णकं हरिं ।
गुड़पूर्णे घटेऽभ्यर्च्य शय्यागोऽर्थादि दक्षिणा(२) ॥ ७ ॥
नक्षत्रपुरुषो विष्णुः पूजनीयः शिवात्मकः ।

---

१ हरिः सर्व्वं पूजित इति ञ० । शय्यागोत्रादि दक्षिणा इति घ०, ञ०,

२ शय्यागोधादि दक्षिणा इति ख०, ट० च । ज०,घ । शय्याधेन्वादि दक्षिणा इति ङ० ।

गाभवायनीयव्रतकृन्मासमे पूजयेद्धरिं ॥ ८ ॥
कार्त्तिके कृत्तिकायां च मृगशीर्षे मृगास्यके ।
नामभिः केशवाद्यैस्तु अच्युताय नमोऽपि वा ॥ ९ ॥
कार्त्तिके कृत्तिकाभेऽङ्कि मासनक्षत्रगं हरिं ।
शाम्भवायनीयव्रतकं करिष्ये भुक्तिमुक्तिदं ॥ १० ॥
केशवादि महामूर्त्तिमच्युतं सर्व्वदायकं(१) ।
आवाहयाम्यहन्देवमायुरारोग्यवृद्धिदं ॥ ११ ॥
कार्त्तिकादौ मकामारमयं(२) मासचतुष्टयं(३) ।
फाल्गुनादौ च कृशरमाषाढादौ च पायसं ॥ १२ ।
देवाय ब्राह्मणेभ्यश्च नक्तनैवेद्यमाशयेत्(४) ।
पञ्चगव्यजलेस्नातस्तस्यैव प्राशनाच्छुचिः ॥ १३ ॥
सर्व्वान्विसर्जनाद्द्रव्यं नैवेद्यं सर्वमुच्यते ।
विसर्जिते जगन्नाथे निर्म्माल्यम्भवति क्षणात् ॥ १४ ॥
नमो नमस्तेऽच्युत मे क्षयोऽस्तु
पापस्य वृद्धिं समुपैतु पुण्यं ।
ऐश्वर्य्यवित्तादि सदाऽक्षयं मे(५)
क्षयञ्च मा सन्ततिरभ्युपैतु ॥ १५ ॥
यथाच्युतस्त्वम्परतः परस्मात्
स ब्रह्मभूतः परतः परात्मन् ।

---

१ सर्व्वपापहरमिति ख०,
२ सर्व्वमासमक्षामिति ख०, ग०, घ०, ङ ।
३ मासचतुष्टयमिति ख०,
४ नत्र नैवेद्यमर्पयेदिति ख०।
५ ऐश्वर्य्यवित्तादि मदोदयं मे इति ख०।

# अथ षण्णवत्यधिकशततमोऽध्यायः ।

—:○:—

## नक्षत्रव्रतानि ।

अग्निरुवाच । नक्षत्रव्रतकं वक्ष्ये भे हरिः पूजितोऽर्थदः(१) ।
नक्षत्रपुरुषं चादौ चैत्रमासे हरिं यजेत् ॥ १ ॥
मूले पादौ यजेज्जङ्घे रोहिणीष्वर्चयेद्धरिं ।
जानुनी चाश्विनीयोगे आषाढासूरुसञ्ज्ञके ॥ २ ॥
मेढ्रं पूर्वोत्तरास्वेव कटिं वै कृत्तिकासु च ।
पार्श्वे भाद्रपदाभ्यान्तु कुक्षिं वै रेवतीषु च ॥ ३ ॥
स्तनौ चैवानुराधासु धनिष्ठासु च पृष्ठकं ।
भुजौ पूज्यौ विशाखासु पुनर्व्वसुष्वङ्गुलीर्यजेत् ॥ ४ ॥
अश्लेषासु नखान् पूज्य कण्ठं ज्येष्ठासु पूजयेत् ।
श्रोत्रे विष्णोश्च श्रवणे मुखं पुष्ये हरेर्यजेत् ॥ ५ ॥
यजेत् स्वातिषु दन्ताग्रमास्यं वारुणतोऽर्चयेत् ।
मघासु नासां नयने मृगशीर्षे ललाटकं ॥ ६ ॥
चित्रासु चार्द्रासु कचानब्दान्ते स्वर्णकं हरिं ।
गुड़पूर्णे घटेऽभ्यर्च्य शय्यागोर्थादि दक्षिणा(२) ॥ ७ ॥
नक्षत्रपुरुषो विष्णुः पूजनीयः शिवात्मकः ।

---

१ हरिं सर्वार्थपूजित इति ख० । शय्यागोऽर्थादि दक्षिणा इति घ०, ञ०,
२ शय्यागोश्वादि दक्षिणा इति ख०, ट० च । ज०,ग । शय्याधन्यादि दक्षिणा इति ङ० ।

शाम्भरायणीयव्रतकम्मासभे पूजयेद्धरिं ॥ ८ ॥
कार्त्तिके कृत्तिकायां च मृगशीर्षे मृगास्यके।
नामभिः केशवाद्यैस्तु अच्युताय नमोऽपि वा ॥ ९ ॥
कार्त्तिके कृत्तिकाभेऽह्नि मासनक्षत्रगं हरिं।
शाम्भरायणीयव्रतकं करिष्ये भुक्तिमुक्तिदं ॥ १० ॥
केशवादि महामूर्त्तिमच्युतं सर्व्वदायक(१)।
आवाहयाम्यहन्देवमायुरारोग्यवृद्धिदं ॥ ११ ॥
कार्त्तिकादौ सकामारमन्त्रं(२) मासचतुष्टयं(३)।
फाल्गुनादौ च कृशरमाषाढादौ च पायस ॥ १२ ॥
देवाय ब्राह्मणेभ्यश्च नक्तन्नैवेद्यमार्पयेत्(४)।
पञ्चगव्यजलेस्नातस्तस्यैव प्राशनाच्छुचिः ॥ १३ ॥
अर्व्वाग्विसर्जनाद् द्रव्यं नैवेद्यं सर्व्वमुच्यते।
विसर्जिते जगन्नाथे निर्म्माल्यम्भवति क्षणात् ॥ १४ ॥
नमो नमस्तेऽच्युत मे क्षयोऽस्तु
पापस्य वृद्धिं समुपैतु पुण्यं।
ऐश्वर्यवित्तादि सदाऽक्षय मे(५)
क्षयञ्च मा सन्ततिरभ्युपैतु ॥ १५ ॥
यथाच्युतस्त्वम्परतः परस्मात्
स ब्रह्मभूतः परतः परात्मन्।

---

१ सर्व्वदायकमिति क०,
२ गमनारमन्त्रमिति ख०, ग०, घ०, ङ।
३ मासचतुष्कमिति ख०,
४ अत्र नैवेद्यमर्पयेदिति ङ०।
५ ऐश्वर्यवित्तादि महोदय मे इति ङ०।

तथाच्युतं त्वं कुरु वाञ्छितं मे
यथा कृतस्याघहराप्रमेय ॥ १६ ॥
अच्युतानन्द गोविन्द प्रसीद यदभीप्सितं ।
अक्षय्यं माममेयात्मन् कुरुष्व पुरुषोत्तम ॥ १७ ॥
सप्त वर्षाणि सम्पूज्य भुक्तिमुक्तिमवाप्नुयात् ।
अनन्तव्रतमाख्यास्ये नक्षत्रव्रतकेऽर्चयेद्(१) ॥ १८ ॥
मार्गशीर्षे मृगशिरे गोमूत्राशी यजेद्धरिं ।
अनन्तं सर्वकामानामनन्तो भगवान् फलं ॥ १९ ॥
ददात्यनन्तञ्च पुनस्तदेवान्यत्र जन्मनि ।
अनन्तपुण्योपचयकरोत्येतन्महाव्रतं ॥ २० ॥
यथाभिलषितप्राप्तिं करोत्यक्षयमेव च ।
पादादि पूज्य नक्तं तु भुञ्जीयात्तैलवर्जितं ॥ २१ ॥
घृतेनानन्तमुद्दिश्य होमो मासचतुष्टयं ।
चैत्रादौ शालिना होमः पयसा श्रावणादिषु ॥ २२ ॥
मान्धाताभूद् युवनाश्वादनन्तव्रतपात् सुतः ।

इत्याग्नेये महापुराणे नक्षत्रव्रतानि नाम षण्णवत्य-
धिकशततमोऽध्यायः ॥

---

१ नक्षत्रव्रतमाचरेदिति ख०, ग०, ङ०। नक्षत्रव्रतकेऽर्चयेदिति घ०, छ०, ञ० च।

## अथ सप्तनवत्यधिकशततमोऽध्यायः ।



### दिवसव्रतानि ।

अग्निरुवाच । दिवसव्रतकं वक्ष्ये ह्यादौ धेनुव्रतं वदे ।
यश्चोभयमुखीन्दद्यात् प्रभूतकनकान्वितां ॥ १ ॥
दिनं पयोव्रतस्तिष्ठेत् स याति परमम्पदं ।
त्र्यहं पयोव्रतं कृत्वा काञ्चनं कल्पपादपं ॥ २ ॥
दत्वा ब्रह्मपदं याति कल्पवृक्षव्रतं स्मृतं ।
दद्याद्विंशत् पलादूर्द्ध्वं(१) महीङ्कृत्वा तु काञ्चनीं ॥ ३ ॥
दिनं पयोव्रतस्तिष्ठेद्रुद्रगः स्याद्दिवाव्रती ।
पक्षे पक्षे त्रिरात्रन्तु भक्तेनैकेन यः क्षपेत्(२) ॥ ४ ॥
विपुलं धनमाप्नोति त्रिरात्रव्रतकृद्दिनं ।
मासे मासे त्रिरात्राशी एकभक्ती गणेशतां ॥ ५ ॥
यस्त्रिरात्रव्रतं(३) कुर्य्यात् समुद्दिश्य जनार्दनं ।
कुलानां शतमादाय स याति भवनं हरेः ॥ ६ ॥
नवम्याञ्च सिते पक्षे नरो मार्गशिरस्यथ(४) ।
प्रारभेत त्रिरात्राणां व्रतन्तु विधिवद् व्रती ॥ ७ ॥

---

१ दद्यात् त्रिंशत्पलादूर्द्ध्वमिति क०, ज०, ञ० च ।
२ क्षिपेदिति ख०, ग०, छ०, ज०, ञ० च ।
३ यस्त्रिरात्रव्रतं कुर्य्यादिति ग०, घ०, ज०,
४ मार्गशिरस्य चेति ख०, घ०, ग०, ञ० च

ओं नमो वासुदेवाय सहस्रं वा शतं जपेत् ।
अष्टम्यामेकभक्ताशी दिनत्रयमुपावसेत् ॥ ८ ॥
द्वादश्यां पूजयेद् विष्णुं कार्त्तिके कारयेद् व्रतं ।
विप्रान् सम्भोज्य वस्त्राणि शयनान्यासनानि च ॥ ९ ॥
छत्रोपवीतपात्राणि दद्यात् सम्प्रार्थयेद्द्विजान् ।
व्रतेऽस्मिन् दुष्करे चापि विकलं यद्भूत्मम ॥ १० ॥
भवद्भिस्तदनुज्ञातं परिपूर्णं भवत्विति ।
भुक्तभोगो व्रजेद् विष्णुं त्रिरात्रव्रतकृद्व्रती(१) ॥११ ॥
कार्त्तिकव्रतकं वक्ष्ये भुक्तिमुक्तिप्रदायकं ।
दशम्यां पञ्चगव्याशी एकादश्यामुपोषितः ॥ १२ ॥
कार्त्तिकस्य सितेऽभ्यर्च्य(२) विष्णुं देवविमानगः ।
चैत्रे त्रिरात्रं नक्ताशी अजापञ्चप्रदः सुखी ॥ १३ ॥
त्रिरात्रं पयसः पानमुपवासपरस्त्र्यहं ।
षड्रात्रादि कार्त्तिके शुक्ले कृच्छ्रो माहेन्द्र उच्यते ॥ १४ ॥
पञ्चरात्रं पयः पीत्वा दध्याहारी ह्युपोषितः ।
एकादश्यां कार्त्तिके तु कृच्छ्रोऽयं भास्करोऽर्थदः(३) ॥ १५ ॥
यवागूं यावकं शाकं दधि क्षीरं घृतं जलं ।
पञ्चम्यादि सिते पक्षे कृच्छ्रः शान्तपनः स्मृतः ॥ १६ ॥
इत्याग्नेये महापुराणे दिवसव्रतानि नाम सप्तनवत्यधिकशततमोऽध्यायः ॥

---

१ त्रिरात्रव्रतकव्रती इति ख०, घ०, ज० च। त्रिरात्रव्रतकृद्व्रती इति ङ० ।
२ कार्त्तिकस्य सिते प्राश्य इति ख०, ग०, घ०, ङ०, ङ०, ज०, ञ० च ।
३ भास्करोऽग्रद इति ख०, ग०, घ०, ज०, ञ० च।

# अथाष्टनवत्यधिकशततमोऽध्यायः ।

——:०:——

## मासव्रतानि ।

अग्निरुवाच । मासव्रतकमाख्यास्ये भुक्तिमुक्तिप्रदायकं ।
आषाढादिचतुर्मासमभ्यङ्गं वर्जयेत् सुधीः ॥ १ ॥
वैशाखे पुष्पलवणन्त्यक्ता गोदो नृपो भवेत् ।
गोदो मासोपवासी च(१) भीमव्रतकरो हरिः(२) ॥२ ॥
आषाढादिचतुर्म्मासं प्रातःस्नायी च विष्णुगः ।
माघे माघस्य चैत्रे वा गुडधेनुप्रदो भवेत् ॥ ३ ॥
गुडव्रतस्तृतीयायां गौरीशः स्यान्महाव्रती ।
मार्गशीर्षादिमासेषु नक्तकृद्विष्णुलोकभाक् ॥ ४ ॥
एकभक्तव्रतो तद्वद् द्वादशीव्रतकं पृथक् (३) ।
फलव्रती चतुर्म्मासं फलं त्यक्ता प्रदापयेत् ॥ ५ ॥
श्रावणादिचतुर्मासं धृतैः सर्व्वं सभेद्व्रती ।
आषाढस्य सिते पक्षे एकादश्यामुपोषितः ॥ ६ ॥
चातुर्मास्यव्रतानान्तु कुर्व्वीत परिकल्पनं ।
आषाढ्याञ्चाथ सङ्क्रान्तौ कर्कटस्य(४) हरिं यजेत् ॥ ७ ॥
इदं व्रतं मया देव गृहीतं पुरतस्तव ।

---

१ मासे दयाश्नो चेति ख० । ३ द्वादशीव्रतक परमिति ङ० ।
२ भीमव्रतपरो हरिरिति ङ० । ४ आषाढ्यां रसमङ्क्रान्तौ कर्कटे चेति भ० ।

निर्विघ्नां सिद्धिमायातु प्रसन्ने त्वयि केशव ॥ ८ ॥
गृहीतेऽस्मिन् व्रते देव यद्यपूर्णे म्रिये ह्यहं ।
तन्मे भवतु सम्पूर्णं त्वत्प्रसादाज्जनार्दन ॥ ९ ॥
मांसादि त्यक्त्वा(१) विप्रः स्यात्तैलत्यागी हरिं यजेत् ।
एकान्तरोपवासी च त्रिरात्रं विष्णुलोकभाक् ॥ १० ॥
चान्द्रायणी विष्णुलोको मौनी स्यात् मुक्तिभाजनं ।
प्राजापत्यव्रती स्वर्गी शक्तुयावकभक्षक ॥ ११ ॥
दुग्धाद्याहारवान् स्वर्गी पञ्चगव्याम्बुभुक्तथा ।
शाकमूलफलाहारी नरो विष्णुपुरीं व्रजेत्(२) ॥ १२ ॥
मांसवर्ज्जी यवाहारी रसवर्ज्जी हरिं व्रजेत् ।
कौमुदव्रतमाख्यास्ये आश्विने समुपोषितः ॥ १३ ॥
द्वादश्यां पूजयेद्विष्णुं प्रलिप्याब्जोत्पलादिभिः ।
घृतेन तिलतैलेन दीपनैवेद्यमर्पयेत् ॥ १४ ॥
ओं नमो वासुदेवाय मालत्या मालया यजेत् ।
धर्म्मकामार्थमोक्षांश्च प्राप्नुयात् कौमुदव्रती ॥ १५ ॥
सर्व्वं लभेद्धरिं प्रार्च्य मासोपवासकव्रती ।

इत्याग्नेये महापुराणे मासव्रतानि नाम अष्टनवत्यधिकशततमोऽध्यायः ॥

---

१ मत्स्यादि त्यक्त्वेति ख०, घ०, ङ० च । मासान्ताशी तु इति ङ० ।

२ विष्णुपदं व्रजेदिति ख०, ङ० च ।

## अथैकोनशताधिकशततमोऽध्यायः ।

——:०:——

### नानाव्रतानि ।

अग्निरुवाच । ऋतुव्रतान्यहं वक्ष्ये भुक्तिमुक्तिप्रदानि ते ।
इन्धनानि तु यो दद्याद्वर्षादिचतुरो ह्यृतून् ॥ १ ॥
घृतधेनुप्रदश्चान्ते ब्राह्मणोऽग्निव्रती भवेत् ।
कृत्वा मौनन्तु सन्ध्यायां मासान्ते घृतकुम्भदः ॥ २ ॥
तिलघण्टावस्त्रदाता सुखी सारस्वतव्रती([1]) ।
पञ्चामृतेन स्नपनं कृत्वाब्दं धेनुदो नृपः ॥ ३ ॥
एकादश्यान्तु नक्ताशी चैत्रे भक्तं निवेदयेत् ।
हैमं विष्णोः पदं याति मासान्ते विष्णुसद्व्रती ॥ ४ ॥
पायसाशी गोयुगदः श्रीभाग्देवीव्रती भवेत् ।
निवेद्य पितृदेवेभ्यो यो भुङ्क्ते स भवेन्नृपः ॥ ५ ॥
वर्षव्रतानि चोक्तानि([2]) सङ्क्रान्तिव्रतकं वदे ।
सङ्क्रान्तौ स्वर्गलोकी स्याद्रात्रिजागरणान्नरः ॥ ६ ॥
अमावास्यां तु सङ्क्रान्तौ शिवार्कयजनात्तथा ।
उत्तरे त्वयने धान्यप्रस्थदानेन केशवे ॥ ७ ॥

---

१ सुखी सारस्वतव्रती इति ख०, ग०, घ०, ङ०, ट० च ।
२ सर्वव्रतानि चोक्तानीति ख० ङ०, झ० च ।

द्वात्रिंशत्पलमानेन सर्वपापैः प्रमुच्यते ।
घृतक्षीरादिना स्नाप्य प्राप्नोति विषुवादिषु ॥ ८ ॥
स्त्रीणामुमाव्रतं श्रीदं तृतीयास्वष्टमीषु च ।
गौरीं महेश्वरं चापि यजेत् सौभाग्यमाप्नुयात् ॥ ९ ॥
उमामहेश्वरौ प्रार्च्य अवियोगादि चाप्नुयात् ।
मूलव्रतकरी स्त्री च उमेशव्रतकारिणी ॥ १० ॥
सूर्यभक्ता तु या नारी ध्रुवं सा पुरुषो भवेत् ।

इत्याग्नेये महापुराणे नानाव्रतानि नाम एकोनशताधिकशततमोऽध्यायः ॥

---

## अथ द्विशततमोऽध्यायः ।

---

### दीपदानव्रतं ।

अग्निरुवाच । दीपदानव्रतं वक्ष्ये भुक्तिमुक्तिप्रदायकं ।
देवद्विजातिकगृहे दीपदोऽब्दं स सर्वभाक् ॥ १ ॥
चतुर्मासं विष्णुलोकी कार्त्तिके स्वर्गलोक्यपि ।
दीपदानात् परं नास्ति न भूतं न भविष्यति ॥ २ ॥
दीपेनायुष्यचक्षुष्मान्दीपाल्लक्ष्मीसुतादिकं ।
सौभाग्यं दीपदः प्राप्य स्वर्गलोके महीयते ॥ ३ ॥
विदर्भराजदुहिता ललिता दीपदानभाक् ।

चारुधर्मस्यापपत्नी शतभार्याधिकाऽभवत् ॥ ४ ॥
ददौ दीपसहस्रं सा विष्णोरायतने सतो।
पृष्टा सा दीपमाहात्म्यं सपत्नीभ्य उवाच ह ॥ ५ ॥
ललितोवाच। सौवीरराजस्य पुरा मैत्रेयोऽभूत् पुरोहित.।
तेन चायतनं विष्णोः कारितं देविकातटे ॥ ६ ॥
कार्त्तिके दीपकस्तेन दत्त सम्पेरितो मया।
वस्त्रप्रान्तेन नश्यन्त्या मार्ज्जारस्य तदा भयात् ॥ ७ ॥
निर्व्वाणवान् प्रदीपोऽभूद्वर्त्त्या मूषिकया तदा।
मृता राजात्मजा जाता राजपत्नी शताधिका ॥ ८ ॥
असङ्कल्पितमप्यस्य प्रेरणं यत् कृतं मया।
विष्णायतनदीपस्य तस्येदं भुज्यते फलं ॥ ९ ॥
जातिस्मरा ह्यतो दीपान् प्रयच्छामि त्वहर्न्निशं।
एकादश्यां दीपदो वै विमाने दिवि मोदते ॥ १० ॥
जायते दीपहर्त्ता तु मूको वा जड एव च।
अन्धे तमसि दुष्पारे नरके पतते किल ॥ ११ ॥
विक्रोशमानांश्च नरान् यमकिङ्करआहतान्।
विलापैरलमत्रापि किं वो विलपिते फलं ॥ १२ ॥
यदा प्रमादिभिः पूर्वमत्यन्तमसुपेक्षितः।
जन्तुर्जन्मसहस्रेभ्यो ह्येकस्मिन् मानुषो यदि ॥ १३ ॥
तत्राप्यतिविमूढात्मा किं भोगानभिधावति।
स्वहित(१) विषयास्वादे. क्रन्दनं तदिहागतं ॥ १४ ॥

---

१ स्वर्हितमिति ख०, ङ०, घ० च। दूषित'मिति ढ०।

भुज्यते च कृतं पूर्वमेतत् किं वो न चिन्तितं ।
परस्त्रीषु कुचाभ्यङ्ग प्रीतये दुःखदं हि वः ॥ १५ ॥
सुहूर्त्तविषयास्वादोऽनेककोट्यब्ददुःखदः ।
परस्त्रीहारियद्गीत हा मातः किं विलप्यते ॥ १६ ॥
कोऽतिभारो हरेर्नाम्नि जिह्वया परिकीर्त्तने ।
वर्त्तितैलेऽल्पमूल्येऽपि यदग्निर्लभ्यते सदा ॥ १७ ॥
दानागतैर्हरे र्दीपो हृतस्तद्दोऽस्ति दुःखदं ।
इदानीं किं विलापेन सहध्वं यदुपागतं ॥ १८ ॥
अग्निरुवाच । ललितोक्तश्च ताः श्रुत्वा दीपदानाद्दिवं ययुः ।
तस्माद्दीपप्रदानेन व्रतानामधिकं फलं ॥ १९ ॥

इत्याग्नेये महापुराणे दीपदानव्रतं नाम द्विशतत
मोऽध्यायः ॥

---

## अथैकाधिकद्विशततमोऽध्यायः ।



नवव्यूहार्चनं ।

अग्निरुवाच । नवव्यूहार्चनं वक्ष्ये नारदाय हरीरितं ।
मण्डलेऽब्जेऽर्च्चयेन्मध्ये श्रवीजं वासुदेवकं ॥ १ ॥
आयोजन्तु सङ्कर्षणम् प्रद्युम्नं च दक्षिणे ।

अः अनिरुद्धं नैर्ऋते औं नारायणमप्सु च ॥ २ ॥
तत् सद्ब्रह्माणमनिले हुं विष्णुं क्षौं नृसिंहकं(¹) ।
उत्तरे भूर्वराहञ्च ईशे द्वारि च पश्चिमे ॥ ३ ॥
कं टं सं शं गरुत्मन्तं पूर्व्ववक्त्रञ्च दक्षिणे(²) ।
खं छं वं हुं फड़िति च खं ठं फं शं गदां विधौ ॥ ४ ॥
वं णं मं क्षं कोणेषञ्च घ दं भं हं श्रियं यजेत् ।
दक्षिणे चोत्तरे पुष्टिं गं डं वं शं स्वबीजकं ॥ ५ ॥
पीठस्य पश्चिमे धं वं वनमालाञ्च पश्चिमे ।
श्रीवत्सं चैव सं हं लं छं तं यं कौस्तुभं जले ॥ ६ ॥
दशमाङ्क्रमादिष्णोर्नमोऽनन्तमधोऽर्च्चयेत् ।
वशाङ्गादिमहेन्द्रादीन् पूर्व्वादौ चतुरो घटान् ॥ ७ ॥
तोरणानि वितानं च अम्बनिलेन्द्वीजकैः ।
मण्डलानि क्रमाद्ध्यात्वा तत्तं वन्द्य ततः प्लवेत् ॥ ८ ॥
अम्बरस्थं ततो ध्यात्वा सूक्ष्मरूपमथात्मनः ।
सितामृते निमग्नञ्च(³) चन्द्रविम्बात् स्रुतेन च ॥ ९ ॥
तदेव चात्मनो बीजममृतं प्लवसंस्कृतं ।
उत्पद्यमानं पुरुषमात्मानमुपकल्पयेत् ॥ १० ॥
उत्पन्नोऽस्मि स्वयं विष्णुर्बीजं द्वादशकं न्यसेत् ।
हृच्छिरस्तु शिखा चैव कवचं चास्त्रमेव च ॥ ११ ॥
वक्षोमूर्द्दशिखापृष्ठलोचनेषु न्यसेत पुनः ।
अस्त्रं करद्वये न्यस्य ततो दिव्यतनुर्भवेत् ॥ १२ ॥

---

१ क्षं विष्णु क्षौं नृसिंहकमिति ग०, ङ०, ज० च ।
२ पश्चिमाञ्च दक्षिणे इति ङ० ।
३ सितासिते निमग्नश्चेति ग०, ज० च ।

यथात्मनि तथा देवे शिष्यदेहे न्यसेत्तथा ।
अनिर्माल्या स्मृता पूजा यद्धरेः पूजनं हृदि ॥ १३ ॥
सनिर्माल्या मण्डलादौ बद्धनेत्राश्च शिष्यकाः ।
पुष्पं क्षिपेयुर्यन्मूर्त्तौ तस्य तन्नाम कारयेत् ॥ १४ ॥
निवेश्य वामतः शिष्यांस्तिलव्रीहिघृतं हुनेत् ।
शतमष्टोत्तरं हुत्वा सहस्रं कायशुद्धये ॥ १५ ॥
नवव्यूहस्य मूर्त्तीनामङ्गानां च शताधिकं ।
पूर्णान्दत्वा दीक्षयेत्तान् गुरुः पूज्यश्च तैर्धनैः ॥ १६ ॥

इत्याग्नेये महापुराणे नवव्यूहार्च्चनं नाम एकाधिक-
द्विशततमोऽध्यायः ॥

---

## अथ द्व्यधिकद्विशततमोऽध्यायः ।

—:०:—

### पुष्पाध्यायकथनं ।

अग्निरुवाच । पुष्पगन्धधूपदीपनैवेद्यैस्तुष्यते हरिः ।
पुष्पाणि देवयोग्यानि ह्ययोग्यानि वदामि ते ॥ १ ॥
पुष्पं श्रेष्ठं मालती च तमालो भुक्तिमुक्तिमान् ।
मल्लिका सर्व्वपापघ्नी यूथिका विष्णुलोकदा ॥ २ ॥
अतिमुक्तमयं तद्वत् पाटला विष्णुलोकदा ।

करवीरैर्विष्णुलोकी जवापुष्पैश्च पुण्यवान् ॥ ३॥
पावन्तीकुब्जकाद्यैश्च तगरैर्विष्णुलोकभाक् ।
कर्णिकारैर्विष्णुलोकः कुरुण्टैः पापनाशनं ॥ ४ ॥
पद्मैश्च केतकीभिश्च कुन्दपुष्पैः परा गतिः ।
वाणपुष्पैर्वर्वराभिः कृष्णाभिर्हरिलोकभाक् ॥ ५ ॥
अशोकैस्तिलकैस्तद्वदटरूषभवैस्तथा ।
मुक्तिभागी विल्वपत्रैः शमीपत्रैः परा गतिः ॥ ६ ॥
विष्णुलोकी भृङ्गराजैस्तमालस्य दलैस्तथा ।
तुलसी कृष्णगौराख्या कल्हारोत्पलकानि च ॥ ७ ॥
पद्मं कोकनदं पुण्यं शताब्जमालया हरिः ।
नीपार्जुनकदम्बैश्च(१) वकुलैश्च सुगन्धिभिः ॥ ८ ॥
किंशुकैर्मुनिपुष्पैस्तु गोकर्णैर्नागकर्णकैः ।
सन्ध्यापुष्पैर्विल्वतकै रञ्जनीकेतकीभवैः(२) ॥ ९ ॥
कुष्माण्डतिमिरोत्थैश्च कुशकाशशरोद्भवैः ।
यूतादिभिर्मरुवकैः पत्रैरन्यैः सुगन्धकैः ॥ १० ॥
भुक्तिर्मुक्तिः पापहानिर्भक्त्या सर्वैस्तु तुष्यति ।
स्वर्णलक्षाधिकं पुष्पं माला कोटिगुणाधिका ॥ ११ ॥
स्ववनेऽन्यवने पुष्पैस्त्रिगुणं वनजैः फलं(३) ।
विशीर्णैर्नार्चयेद्विष्णुमधिकाङ्गैर्न मोदितैः ॥ १२ ॥
काञ्चनारैस्तथोन्मत्तैर्गिरिकर्णिकया तथा ।

---

१ मुक्तिभागी कदम्बैश्चेति ङ० ।  ङ०, ख०, ज०, घ ।
२ रजनीकेतकीभवैरिति घ० ।  ३ वनजैः परमिति ङ० ।

कुटजैः शाल्मलीयैश्च(१) शिरीषैर्भरकादिकं ॥ १३ ॥
सुगन्धैर्बल्वपत्रैश्च(२) पुष्पैर्नीलोत्पलैर्हरिः(३) ।
अर्कमन्दारधुस्तूरकुसुमैरर्च्यते हरः ॥ १४ ॥
कुटजैः कर्कटीपुष्पैः केतकीश्च शिवे त्यजेत् ।
कुष्माण्डनिम्बसम्भूतं पैशाचं गन्धवर्जितं ॥ १५ ॥
अहिंसा इन्द्रियजयः(४) चान्तिर्ज्ञानं(५) दया श्रुतं ।
भावाष्टपुष्पैः सम्पूज्य देवान् स्याद् भुक्तिमुक्तिभाक् ॥ १६ ॥
अहिंसा प्रथमं पुष्पं पुष्पमिन्द्रियनिग्रहः ।
सर्वपुष्पं दया भूते पुष्पं शान्तिर्विशिष्यते ॥ १७ ॥
शमः पुष्पं तपः पुष्पं ध्यानं पुष्पं च सप्तमं ।
सत्यञ्चैवाष्टमं पुष्पमेतैस्तुष्यति केशवः ॥ १८ ॥
एतैरेवाष्टभिः पुष्पैस्तुष्यत्येवार्चितो हरिः ।
पुष्पान्तराणि सन्त्यत्र बाह्यानि मनुजोत्तम ॥ १९ ॥
भक्त्या दयान्वितैर्विष्णुः पूजितः परितुष्यति(६) ।
वारुणं सलिलं पुष्पं सौम्यं घृतपयोदधि ॥ २० ॥
प्राजापत्यं तथान्नादि आग्नेयं धूपदीपकं ।
फलपुष्पादिकञ्चैव वानस्पत्यन्तु पञ्चमं ॥ २१ ॥
पार्थिवं कुशमूलाद्यं वायव्यं गन्धचन्दनं ।

---

१ शाल्मलिभैश्चेति ख०, ग०, ङ० च।
२ सुगन्धैः पत्रपुष्पैश्चेति ङ०।
३ पुष्पैर्नीलोत्पलैर्हरिरिति ख०, ग०, ङ०, ज० च।
४ अहिंसा इन्द्रियदम इति ग०।
५ चान्तिर्दानमिति ख०।
६ अहिंसा प्रथमं पुष्पमित्यादिः, पूजितः परितुष्यति इत्यन्तः पाठः ख०, ग०, घ०, ङ०, छ०, ज०, ञ०, ट० पुस्तकेषु नास्ति।

अष्टाख्यं विष्णुपुष्पन्तु सर्वदा चाष्टपुष्पिकाः ॥ २२ ॥
आसनं मूर्त्तिपञ्चाङ्ग(१) विष्णुर्वा चाष्टपुष्पिकाः।
विष्णोस्तु वासुदेवाद्यैरीशानाद्यैः शिवस्य वा ॥ २३ ॥

इत्याग्नेये महापुराणे पुष्पाध्यायो नाम द्व्यधिकद्विशत-
तमोऽध्यायः ॥

## अथ त्र्यधिकद्विशततमोऽध्यायः।



### नरकस्वरूपम्।

अग्निरुवाच। पुष्पाद्यैः पूजनाद्विष्णोर्न याति नरकान्वदे।
आयुषोऽन्ते नरः प्राणैरनिच्छन्नपि मुच्यते ॥ १ ॥
जलमग्निर्विषं शस्त्रं क्षुद्व्याधिः पतनं गिरेः।
निमित्तं किञ्चिदासाद्य देही प्राणैर्विमुच्यते ॥ २ ॥
अन्यच्छरीरमादत्ते यातनीयं स्वकर्मभिः।
भुङ्क्तेऽथ पापकृत् दुःखं सुखं धर्म्माय सङ्गतः ॥ ३ ॥
नीयते यमदूतैस्तु यमं प्राणिभयङ्करैः।
कुपथे दक्षिणद्वारि धार्म्मिकः पश्चिमादिभिः ॥ ४ ॥
यमाज्ञसैः किङ्करैस्तु पात्यते नरकेषु च(२)।

---

१ आसन मूर्त्तिमोडाङ्गमिति ख०। पात्यते नरके सदा इति ग०। पीडने
२ पात्यते नरकेष्वपि इति ख०। नरकेऽधुनेति घ०, ङ० च।

स्वर्गं तु नीयते धर्माद् वसिष्ठाद्युक्तिसंश्रयात् ॥ ५ ॥
गोघाती तु महावीच्यां वर्षलक्षन्तु पीड्यते ।
आमकुम्भे महादीप्ते ब्रह्महा भूमिहारकः ॥ ६ ॥
महाप्रलयकं यावद्रौरवे पीड्यते शनैः ।
स्त्रीबालवृद्धहन्ता तु यावदिन्द्राश्चतुर्दश ॥ ७ ॥
महारौरवके रौद्रे गृहक्षेत्रादिदीपकः ।
दह्यते कल्पमेकं स चौरस्तामिस्रके पतेत् ॥ ८ ॥
नैककल्पन्तु शूलाद्यैर्भिद्यते यमकिङ्करैः ।
महातामिस्रके सर्पजलौकाद्यैश्च पीड्यते ॥ ९ ॥
यावद्भूमिर्मातृहाद्या असिपत्रवनेऽसिभिः(१) ।
नैककल्पन्तु नरके करम्भवालुकासु च ॥ १० ॥
येन दग्धो जनस्तत्र दह्यते वालुकादिभिः ।
काकोले कृमिविष्ठाशी एकाकी मिष्टभोजनः ॥ ११ ॥
कुड्मले मूत्ररक्ताशी पञ्चयज्ञक्रियोज्झितः ।
सुदुर्गन्धे रक्तभोजी भवेच्चाभक्ष्यभक्षकः ॥ १२ ॥
तैलपाके तु तिलवत् पीड्यते परपीडकः ।
तैलपाके तु पच्येत शरणागतघातकः ॥ १३ ॥
निरुच्छ्वासे दाननाशी रसविक्रयकोऽध्वरे ।
नाम्ना वज्रकवाटेन महापाते तदाऽनृती ॥ १४ ॥
महाज्वाले पापबुद्धिः क्रकचेऽगम्यगामिनः ।
सङ्करी गुडपाके च(२) प्रतुदेत् परमर्मनुत् ॥ १५ ॥

---

१ असिपत्रवनेऽसिभिरिति ङ० । २ गुडपाके चेति ख०, ज० च ।

चारकर्दे(१) प्राणिहन्ता क्षुरधारे च भूमिहृत्।
अम्बरीषे गोस्वर्णहृद् द्रुमच्छिद्वज्रशस्त्रके॥ १६॥
मधुहर्त्ता परीतापे कालसूत्रे परार्थहृत्।
कश्मलेऽत्यन्तमांसाशी उग्रगन्धे ह्यपिण्डदः १७॥
दुर्धरे तु कावभक्षी बन्दिग्राहरताय ये।
मञ्जुषे नरके लोहेऽप्रतिष्ठे श्रुतिनिन्दकः॥ १८॥
पूतिवक्त्रे कूटसाक्षी परिलुण्ठे धनापहा।
बालस्त्रीवृद्धघाती च कराले ब्राह्मणार्त्तिकृत्॥ १९॥
विलेपे मद्यपो विप्रो महाताम्रे तु मेदिन (२)॥ २०॥
तथाक्रम्य पारदारान् ज्वलन्तीमायसीं शिलां।
शाल्मलाख्ये तमालिङ्गन् नारी बहुनरङ्गमा॥ २१॥
आस्फोटजिह्वोद्धरणं स्त्रीक्षणात् नेत्रभेदनं।
अङ्गारराशौ क्षिप्यन्ते मातृपुत्र्यादिगामिनः॥ २२॥
चौराः क्षुरैश्च भिद्यन्ते स्वमांसाशी च मांसभुक्।
मासोपवासकर्त्ता वै न याति नरकान्नरः॥ २३॥
एकादशीव्रतकरो भीष्मपञ्चकसद् व्रती।

इत्याग्नेये महापुराणे नरकस्वरूपवर्णनं नाम त्र्यधिक-
द्विशततमोऽध्यायः॥

---

१ चारकूपे इति ख०, ङ० च।　　२ महाप्रेते तु मेदिन इति ख०, ग०, घ०, ङ०, ढ०, ञ० च।

# अथ चतुरधिकद्विशततमोऽध्यायः ।



## मासोपवासव्रतं ।

अग्निरुवाच । व्रतं मासोपवासञ्च(१) सर्व्वोत्कृष्टं वदामि ते ।
कृत्वा तु वैष्णवं यज्ञं गुरोराज्ञामवाप्य च ॥ १ ॥
कृच्छ्राद्यैः स्वबलं बुद्ध्वा कुर्य्यान् मासोपवासकं ।
वानप्रस्थो यतिर्वाथ नारी वा विधवा मुने ॥ २ ॥
आश्विनस्यामले पक्षे एकादश्यामुपोषितः ।
व्रतमेतत्तु गृह्णीयाद्यावत्त्रिंशद्दिनानि तु ॥ ३ ॥
अद्यप्रभृत्यहं विष्णो यावदुत्थानकन्तव ।
अर्च्चयेत्त्वामनश्नन् हि यावत् त्रिंशद्दिनानि तु ॥ ४ ॥
कार्त्तिकाश्विनयोर्विष्णोर्यावदुत्थानकन्तव ।
म्रियेयद्यन्तरालेऽहं व्रतभङ्गो न मे भवेत् ॥ ५ ॥
त्रिकालं पूजयेद्विष्णुं त्रिःस्नातो गन्धपुष्पकैः ।
विष्णोर्गीतादिकं जप्यध्यानं कुर्य्याद् व्रती नरः ॥ ६ ॥
वृथावाद्म्परिहरेदर्थाकाङ्क्षां विवर्जयेत्(२) ।
नाव्रतस्थं स्पृशेत् कञ्चिद्विकर्म्मस्थान्न चालपेत् ॥ ७ ॥

---

१ व्रत मासोपवासाख्यमिति ख॰, ञ॰ च ।

२ आशाकाङ्क्षां विवर्जयेदिति ग॰, ङ॰ च ।

देवतायतने तिष्ठेद्यावत् त्रिंशद्दिनानि तु।
द्वादश्यां पूजयित्वा तु भोजयित्वा द्विजान्व्रती ॥ ८ ॥
समाप्य दक्षिणां दत्त्वा पारणन्तु समाचरेत्।
भुक्तिमुक्तिमवाप्नोति कल्पांश्चैव त्रयोदश ॥ ९ ॥
कारयेद्वैष्णवं यज्ञं यजेद्विप्रांस्त्रयोदश।
तावन्ति वस्त्रयुग्मानि भाजनान्यासनानि च ॥ १० ॥
छत्राणि सपवित्राणि तथोपानद्युगानि च(१)।
योगपट्टोपवीतानि दद्याद्विप्राय तैर्मतः(२) ॥ ११ ॥
अन्यविप्राय शय्यायां हैमं विष्णुं प्रपूज्य च।
आत्मनश्च तथामूर्त्तिं वस्त्राद्यैश्च प्रपूजयेत् ॥ १२ ॥
सर्वपापविनिर्मुक्तो विप्रो विष्णुप्रसादतः।
विष्णुलोकं गमिष्यामि विष्णुरेव भवाम्यहं ॥ १३ ॥
व्रज व्रज देवबुद्धे विष्णोः स्थानमनामयं।
विमानेनाम्बरस्तत्र तिष्ठेद्द विष्णुस्वरूपधृक् ॥ १४ ॥
द्विजानुज्ञाय(३) तां शय्यां गुरवेऽथ निवेदयेत्।
कुलानां शतमुद्धृत्य विष्णुलोकं नयेद्द व्रती ॥ १५ ॥
मासोपवासी यद्देशे स देशो निर्मलो भवेत्।
किं पुनस्तत्कुलं सर्वं यत्र मासोपवासकृत् ॥ १६ ॥
व्रतस्थं मूर्च्छितं दृष्ट्वा क्षीराज्यञ्चैव पाययेत्।
नैते व्रतं विनिघ्नन्ति हविर्विप्रानुमोदितं ॥ १७ ॥

---

१ तत्र पानयुतानि चेति घ०।     २ वै नत इति घ०।
३ द्विजाम् नत्वादेति ङ०।

क्षीरं गुरोर्हितौषध्य आपो मूलफलानि च ।
विष्णोर्महौषध कर्त्ता व्रतमस्मात् समुद्धरेत् ॥ १८ ॥

इत्याग्नेये महापुराणे मासोपवासव्रतं नाम चतुरधिक-
द्विशततमोऽध्यायः ॥

---

## अथ पञ्चाधिकद्विशततमोऽध्यायः ।

भीष्मपञ्चकव्रतं ।

अग्निरुवाच । भीष्मपञ्चकमाख्यास्ये व्रतराजन्तु सर्वदं ।
कार्त्तिकस्यामले पक्षे एकादश्यां समाचरेत् ॥ १ ॥
दिनानि पञ्च त्रिःस्नायी पञ्चव्रीहितिलैस्तथा(१) ।
तर्पयेद्देवपित्रादीन् मौनी सम्पूजयेद्धरिं ॥ २ ॥
पञ्चगव्येन संस्नाप्य देवं पञ्चामृतेन च ।
चन्दनाद्यैः समालिप्य गुग्गुलुं सघृतन्दहेत् ॥ ३ ॥
दीपं दद्याद्दिवारात्रौ नैवेद्यं परमान्नकं ।
ओं नमो वासुदेवाय जपेदष्टोत्तरं शतं ॥ ४ ॥

---

१ पञ्चव्रीहितिलैश्चेति घ०, ङ०, झ०, ञ० च ।

जुहुयाच घृताभ्यक्तांस्तिलव्रीहींस्ततो व्रती।
षडक्षरेण मन्त्रेण स्वाहाकारान्वितेन च॥ ५॥
कमलैः पूजयेत् पादौ द्वितीये बिल्वपत्रकैः।
जानु सक्थि तृतीयेऽथ नाभिं भृङ्गरजेन तु॥ ६॥
बाणबिल्वजवाभिस्तु चतुर्थे पञ्चमेऽहनि।
मालत्या भूमिशायी स्यादेकादश्यान्तु गोमयं॥ ७॥
गोमूत्रं दधि दुग्धं च पञ्चमे पञ्चगव्यकं।
पौर्णमास्याञ्चरेन्नक्तं भुक्तिं मुक्तिं लभेद् व्रती॥ ८॥
भीष्मः कृत्वा हरिं प्राप्तस्तेनैव(१) भीष्मपञ्चकं।
ब्रह्मणः पूजनाद्येव उपवासादिकं व्रतं(२)॥ ९॥

इत्याग्नेये महापुराणे भीष्मपञ्चकं नाम पञ्चाधिकद्विशत-
तमोऽध्यायः॥

---

## अथ षडधिकद्विशततमोऽध्याय.।

—:०:—

### अगस्त्यार्घ्यदान कथनं।

अग्निरुवाच। अगस्त्यो भगवान्विष्णुस्तमभ्यर्च्याप्नुयाद्धरिं।
अप्राप्ते भास्करे कन्यां सत्रिभागैस्त्रिभिर्दिनैः॥ १॥

---

१ हरिं लेभे तेनैतदिति ग०। हरि प्राप तेनैतदिति ट०। हरि प्राप्तस्तेनैतदिति ख०,ङ० च।

२ पूजनात्पूर्वमुपवासादिव्रतमिति क०, घ०, छ०, ज०, भ०, ट० च।

अर्घ्यं दद्यादगस्त्याय पूजयित्वा ह्युपोषितः।
काशपुष्पमयीं मूर्त्तिं प्रदोषे विन्यसेद् घटे॥ २॥
मुनेर्यजेत्तां कुम्भस्थां रात्रौ कुर्यात् प्रजागरं।
अगस्त्य मुनिशार्दूल तेजोराशे महामते(१)॥ ३॥
इमां मम कृतां पूजां गृह्णीष्व प्रियया सह।
आवाह्यार्घ्यं च सम्मुख्यं प्रार्च्चयेचन्दनादिना॥ ४॥
जलाशयसमीपे तु प्रातर्नीत्वार्घ्यमर्पयेत्।
काशपुष्पप्रतीकाश अग्निमारुतसम्भव(१)॥ ५॥
मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते।
आतापिर्भक्षितो येन वातापिश्च महासुरः॥ ६॥
समुद्रः शोषितो येन सोऽगस्त्यः सम्मुखोऽस्तु मे।
अगस्तिं प्रार्थयिष्यामि कर्मणा मनसा गिरा॥ ७॥
अर्चयिष्याम्यहं मैत्रं परलोकाभिकाङ्क्षया।
द्वीपान्तरसमुत्पन्नं देवानां परमं प्रियं॥ ८॥
राजानं सर्व्ववृक्षाणां चन्दनं प्रतिगृह्यतां(२)।
धर्म्मार्थकाममोक्षाणां भाजनी पापनाशनी॥ ९॥
सौभाग्यारोग्यलक्ष्मीदा पुष्पमाला प्रगृह्यतां।
धूपोऽयं गृह्यतां देव भक्तिं मे ह्यचलां कुरु॥ १०॥
ईप्सितं मे वरं देहि परत्र च शुभाङ्गतिं।
सुरासुरैर्मुनिश्रेष्ठ सर्व्वकामफलप्रद॥ ११॥

---

१ तेजोराशे महाद्युते इति ग०, घ०, ङ०, झ०, ञ०, ज०, ट० च। तेजोराशे कमलाक्ष इति छ०।

१ वह्निमारुतसम्भवेति ञ०।

२ चन्दनं मे प्रगृह्यतामिति ग०, ञ० च।

वस्त्रव्रीहिफलैर्हेम्ना दत्तस्त्वर्घ्यो ह्ययं(१) मया ।
अगस्त्यं बोधयिष्यामि यन्मया मनसोद्धृतं(२) ॥ १२ ॥
फलैरर्घ्यं प्रदास्यामि गृहाणार्घ्यं महामुने ।
अगस्त्य एवं खनमानः खनित्रैः प्रजामपत्यं बलमीहमानः ।
उभौ वर्णावृषिरुग्रतेजाः पुपोष सत्या देवेष्वाशिषो जगाम ॥१३॥
राजपुत्रि नमस्तुभ्यं मुनिपत्नि महाव्रते ।
अर्घ्यं गृहीष्व देवेशि लोपामुद्रे यशस्विनि ॥ १४ ॥
पञ्चरत्नसमायुक्तं हेमरूप्यसमन्वितं ।
सप्तधान्ययुतं(३) पात्रं दधिचन्दनसंयुतं ॥ १५ ॥
अर्घ्यं दद्यादगस्त्याय स्त्रीशूद्राणामवैदिकं ।
अगस्त्य मुनिशार्दूल तेजोराशे च सर्वद ॥ १६ ॥
इमां मम कृतां पूजां गृहीत्वा व्रज शान्तये ।
त्यजेदगस्त्यमुद्दिश्य धान्यमेकं फलं रसं ॥ १७ ॥
ततोऽन्नं भोजयेद्विप्रान् घृतपायसमोदकान् ।
गां वासांसि सुवर्णञ्च(४) तेभ्यो दद्याच्च दक्षिणां ॥ १८ ॥
घृतपायसयुक्तेन पात्रेणाच्छादिताननं ।
सहिरण्यञ्च तं कुम्भं ब्राह्मणायोपकल्पयेत्(५) ॥ १९ ॥

---

१ दत्तस्त्वर्घ्योऽव्यय इति ङ० ।
२ मनसेप्सितमिति ग०, घ०, ङ० च । मनसेप्सितमिति ज० ।
३ सप्तधान्ययुतमिति ङ० ।
४ प्रतिमाञ्च सुवर्णञ्चेति ङ० ।
५ ब्राह्मणायोपपादयेदिति घ०, ङ०, ज०, झ० च ।

सप्तवर्षाणि दत्वार्घ्यं सर्व्वं सर्वमवाप्नुयुः ।
नारी पुत्रांश्च सौभाग्यं पतिं कन्या नृपोऽम्बरं ॥ २८ ॥

इत्याग्नेये महापुराणे अगस्त्यार्घ्यदानव्रतं नाम षडधिकद्विशततमोऽध्यायः ॥

---

## अथ सप्ताधिकद्विशततमोऽध्यायः ।

---

### कौमुदव्रतं ।

अग्निरुवाच । कौमुदाख्यं मयोक्तञ्च चरेदाश्वयुजे सिते ।
हरिं यजेन् मासमेकमेकादश्यामुपोषितः ॥ १ ॥
आश्विने शुक्लपक्षेऽहमेकाहारी हरिं जपन् ।
मासमेकं भुक्तिमुक्त्यै करिष्ये कौमुदं व्रतं ॥ २ ॥
उपोष्य विष्णुं द्वादश्यां यजेद्देवं विलिप्य च ।
चन्दनागुरुकाश्मीरैः कमलोत्पलपुष्पकैः ॥ ३ ॥
कल्हारैर्व्वाथ मालत्या दीपं तैलेन वाग्यतः ।
अहोरात्रं च नैवेद्यं पायसापूपमोदकैः ॥ ४ ॥
ओं नमो वासुदेवाय विज्ञाप्याथ क्षमापयेत् ।

भोजनादि(१) द्विजे दद्यावद्यावद् देवः प्रबुद्यते ॥ ५ ॥
तावन्मासोपवासः स्यादधिकं फलमप्यतः।

इत्याग्नेये महापुराणे कौमुदव्रतं नाम सप्ताधिकद्विशततमोऽध्यायः॥

---

## अथाष्टाधिकद्विशततमोऽध्यायः।

---

व्रतदानादिसमुच्चयः।

अग्निरुवाच। व्रतदानानि सामान्यं प्रवदामि समासतः।
तिथौ प्रतिपदादौ च सूर्यादौ कृत्तिकासु च ॥ १ ॥
विष्कुम्भादौ च मेषादौ काले च ग्रहणादिके।
यत्र काले यद् व्रतं दानं यद् द्रव्यं नियमादि यत् ॥ २ ॥
तद् द्रव्याद्यच्च कालाद्यं सर्वं वै विष्णुदैवतं।
रवीशब्रह्मलक्ष्म्याद्याः(२) सर्वे विष्णोर्विभूतयः ॥ ३ ॥
तमुद्दिश्य व्रतं दानं पूजादि स्यात्तु सर्वदं।
जगत्पते समागच्छ आसनं पाद्यमर्घ्यकं ॥ ४ ॥
मधुपर्कं तथाचामं स्नानं वस्त्रञ्च गन्धकं।

---

१ भोजनानि इति ख०, ज०च। २ रवीशब्रह्मलोकेश इति ङ०।

पुष्पं धूपञ्च दीपञ्च नैवेद्यादि नमोऽस्तु ते ॥ ५ ॥
इति पूजाव्रते दाने दानवाक्यं समं शृणु।
अद्यामुकसगोत्राय विप्रायामुकशर्म्मणे ॥ ६ ॥
एतद् द्रव्यं विष्णुदैवं सर्व्वपापोपशान्तये।
आयुरारोग्यवृद्ध्यर्थं सौभाग्यादिविवृद्धये(१) ॥ ७ ॥
गोत्रसन्ततिवृद्ध्यर्थं विजयाय धनाय च।
धर्म्मायैश्वर्य्यकामाय तत्पापशमनाय च ॥ ८ ॥
संसारमुक्तये दानन्तुभ्यं सम्प्रददे ह्यहं।
एतद्दानप्रतिष्ठार्थं तुभ्यमेतद् ददाम्यहं ॥ ९ ॥
एतेन प्रीयतां नित्यं सर्व्वलोकपतिः प्रभुः।
यज्ञदानव्रतपते विद्याकीर्त्त्यादि देहि मे ॥ १० ॥
धर्म्मकामार्थमोक्षांश्च देहि मे मनसेप्सितं।
य पठेच्छृणुयान्नित्यं व्रतदानसमुच्चयं ॥ ११ ॥
स प्राप्तकामो विमलो भुक्तिमुक्तिमवाप्नुयात्।
तिथिवारर्क्षसङ्क्रान्तियोगमन्वादिकं व्रतं ॥ १२ ॥
नैकधा वासुदेवादेर्नियमात् पूजनाद्भवेत्।

इत्याग्नेये महापुराणे व्रतदानसमुच्चयो नाम अष्टाधिकद्विशततमोऽध्यायः ॥

---

१ सौभाग्याय सुखाय इति ख०, घ०, ङ० च। सौभाग्याय सुवृद्धये इति घ०, ज०, ञ० च।

## अथ नवाधिकद्विशततमोऽध्यायः ।

---

### दानपरिभाषा कथनं ।

अग्निरुवाच । दानधर्म्मान् प्रवक्ष्यामि भुक्तिमुक्तिप्रदान् शृणु ।
दानमिष्टं तथा पूर्त्तं धर्म्मं कुर्व्वन् हि सर्व्वभाक् ॥ १ ॥
वापीकूपतडागानि देवतायतनानि च ।
अन्नप्रदानमारामाः पूर्त्तं धर्म्मं च मुक्तिदं ॥ २ ॥
अग्निहोत्रं तपः सत्यं वेदानाञ्चानुपालनं ।
आतिथ्यं वैश्वदेवञ्च प्राहुरिष्टञ्च नाकदं ॥ ३ ॥
ग्रहोपरागे यद्दानं सूर्य्यसङ्क्रमणेषु च ।
द्वादश्यादौ च यद्दानं पूर्त्तं तदपि नाकदं ॥ ४ ॥
देशे काले च पात्रे च दानं कोटिगुणं भवेत् ।
अयने विषुवे पुण्ये व्यतीपाते दिनक्षये ॥ ५ ॥
युगादिषु च सङ्क्रान्तौ चतुर्द्दश्यष्टमीषु च ।
सितपञ्चदशीसर्व्वद्वादशीष्वष्टकासु च ॥ ६ ॥
यज्ञोत्सवविवाहेषु तथा मन्वन्तरादिषु ।
वैधृते दृष्टदुःस्वप्ने द्रव्यब्राह्मणलाभतः ॥ ७ ॥
श्रद्धा वा यद्दिने तत्र सदा वा दानमिष्यते ।
अयने द्वे विषुवे द्वे चतस्रः षडशीतयः ॥ ८ ॥
चतस्रो विष्णुपद्यश्च सङ्क्रान्त्यो द्वादशोत्तमाः ।

कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः ॥ ९ ॥
षडशीतिमुखाः प्रोक्ताः षडशीतिगुणाः फलैः।
अतीतानागते पुण्ये द्वे उदग्दक्षिणायने ॥ १० ॥
त्रिंशत् कर्कटके नाड्यो मकरे विंशतिः स्मृताः।
वर्त्तमाने तुलामेषे नाड्यस्तूभयतो दश ॥ ११ ॥
षडशीत्यां व्यतीतायां षष्टिरुक्तास्तु नाडिकाः।
पुण्याख्या विष्णुपद्याञ्च प्राक्पश्चादपि यौड्य ॥ १२ ॥
श्रवणाश्विधनिष्ठासु नागदैवतमस्तके।
यदा स्याद्रविवारेण व्यतीपातः स उच्यते ॥ १३ ॥
नवम्यां शुक्लपक्षस्य कार्त्तिके निरगात् कृतं।
त्रेता सिततृतीयायां वैशाखे द्वापरं युगं ॥ १४ ॥
दर्शे वै माघमासस्य त्रयोदश्यां नभस्यके।
कृष्णे कलिं विजानीयाज् ज्ञेया मन्वन्तरादयः ॥ १५ ॥
अश्वयुक्छुक्लनवमी द्वादशी कार्त्तिके तथा।
तृतीया चैत्र माघस्य तथा भाद्रपदस्य च ॥ १६ ॥
फाल्गुनस्याप्यमावास्या पौषस्यैकादशी तथा।
आषाढ़स्यापि दशमी माघमासस्य सप्तमी ॥ १७ ॥
श्रावणे चाष्टमी कृष्णा तथाषाढे च पूर्णिमा।
कार्त्तिके फाल्गुने तद्वज् ज्यैष्ठे पञ्चदशी तथा ॥ १८ ॥
ऊर्ध्वं चैवाग्रहायण्या अष्टकास्तिस्र ईरिताः।
अष्टकाख्या चाष्टमी स्यादास(१) दानानि चाक्षयं ॥ १९ ॥

---

१ स्यादक्षयेति ग०, घ०, ञ०, ज० च।

गयागङ्गाप्रयागादौ तीर्थे देवालयादिषु।
अप्रार्थितानि दानानि विद्यार्थं कन्यका न हि ॥ २० ॥
दद्यात् पूर्वमुखो दानं गृह्णीयादुत्तरामुखः।
आयुर्विवर्द्धते दातुर्ग्रहीतुः क्षीयते न तत् ॥ २१ ॥
नाम गोत्रं समुच्चार्य्य सम्प्रदानस्य चात्मनः।
सम्प्रदेयं प्रयच्छन्ति कन्यादाने पुनस्त्रयं ॥ २२ ॥
स्नात्वाभ्यर्च्य व्याहृतिभिर्दद्याद्दानन्तु सोदकं।
कनकाश्वतिला नागा दासीरथमहीगृहाः ॥ २३ ॥
कन्या च कपिला धेनुर्महादानानि वै दश।
श्रुतशौर्य्यतपःकन्यायाज्यशिष्यादुपागतं ॥ २४ ॥
शुक्लं धनं हि सकलं शुक्लं शिल्पानुवृत्तितः।
कुसीदकृषिवाणिज्यप्राप्तं यदुपकारतः ॥ २५ ॥
पार्श्वकद्यूतचौर्य्यादिप्रतिरूपकसाहसैः।
व्याजेनोपार्जितं कृष्णं त्रिविधं त्रिविधं फलं ॥ २६ ॥
अध्यग्न्यध्यावाहनिकं दत्तञ्च प्रीतिकर्म्मणि।
भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतं(१) ॥ २७ ॥
ब्रह्मक्षत्रविशां द्रव्यं शूद्रस्यैषामनुग्रहात्।
बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः ॥ २८ ॥
कुलानान्तु शतं हन्यादप्रयच्छन् प्रतिश्रुतं।
देवानाञ्च गुरूणाञ्च मातापित्रोस्तथैव च ॥ २९ ॥
पुण्यं देयं प्रयत्नेन यत् पुण्यञ्चार्जितं क्वचित्।

---

१ कुसीदेत्यादि स्त्रीधनं इत्यन्तिमः पाठ क० पुस्तके नास्ति।

प्रतिलाभेच्छया दत्तं यदत्तं तदपार्थकं ॥ २० ॥
श्रद्धया साध्यते धर्म्मो दत्तं वार्य्यपि चाक्षयं ।
ज्ञानशीलगुणोपेतः परपीड़ाबहिष्कृतः ॥ २१ ॥
अज्ञानां पालनात्त्राणात् पात्रं परमं स्मृतं ।
मातुः शतगुणं दानं सहस्रं पितुरुच्यते ॥ २२ ॥
अनन्तं दुहितुर्दानं सोदर्य्ये दत्तमक्षयं ।
अमनुष्ये समं दानं पापे ज्ञेयं महाफलं ॥ २३ ॥
वर्णसङ्करे द्विगुणं शूद्रे दानं चतुर्गुणं ।
वैश्ये चाष्टगुणं क्षत्रे षोड़शत्वं द्विजब्रुवे ॥ २४ ॥
वेदाध्याये शतगुणमनन्तं वेदबोधके(१) ।
पुरोहिते याजकादौ(२) दानमक्षयमुच्यते ॥ २५ ॥
श्रोत्रियहीनेषु यद्दत्तं तदनन्तं च यज्वनि ।
अतपस्त्वनधीयानः प्रतिग्रहरुचिर्द्विजः ॥ २६ ॥
अम्भस्यश्मप्लवेनैव सह तेनैव मज्जति ।
स्नातः सम्यगुपस्पृश्य गृह्णीयात् प्रयतः शुचिः ॥ २७ ॥
प्रतिगृहीता सावित्रीं सर्व्वदैव प्रकीर्त्तयेत्(३) ।
ततस्तु कीर्त्तयेत्सार्द्धं द्रव्येण सह दैवतं ॥ २८ ॥
प्रतिग्राही पठेदुच्चैः प्रतिगृह्य द्विजोत्तमात् ।
मन्दं पठेत् क्षत्रियात्तु उपांशु च तथा विशः ॥ २९ ॥

---

१ ब्रह्मबोधके इति घ०, ङ०, अ०, ज०, ट० च।

२ पुरोहिते याचकादाविति ख०, छ०, ट० च।

३ सर्व्वत्रैव प्रकीर्त्तयेदिति ख०, ग०, घ०, ङ०, ज०, अ०, ट० च।

मनसा च तथा शूद्रात् स्वस्तिवाचनकं तथा ।
अभयं सर्वदैवत्यं भूमिर्वै विष्णुदेवता ॥ ४० ॥
कन्या दासस्तथा दासी प्राजापत्याः प्रकीर्त्तिताः ।
प्राजापत्यो गज. प्रोक्तस्तुरगो यमदैवतः ॥ ४१ ॥
तथा चैकशफं सर्वं याम्यश्च महिषस्तथा ।
उष्ट्रश्च नैर्ऋतो धेनू रौद्री छागोऽनलस्तथा ॥ ४२ ॥
आप्यो मेषो हरिः क्रोड़ आरण्याः पशवोऽनिलाः ।
जलाशयं वारुणं स्याद्वारिधानीघटादय. ॥ ४३ ॥
समुद्रजानि रत्नानि हेमलौहानि चानलः ।
प्राजापत्यानि शस्यानि पक्वान्नमपि सत्तम ॥ ४४ ॥
गान्धर्व्वं गन्धमित्याहुर्वस्त्रं वार्हस्पतं स्मृतं ।
वायव्याः पक्षिणः सर्व्वे विद्या ब्राह्मी तथाङ्गकं ॥ ४५ ॥
सारस्वतं पुस्तकादि विश्वकर्म्मा तु शिल्पके ।
वनस्पतिर्द्रुमादीनां द्रव्यदेवा हरिस्तनुः ॥ ४६ ॥
छत्रं कृष्णाजिनं शय्या रथ आसनमेव च ।
उपानहौ तथा यानमुत्तानाङ्गिर ईरितं ॥ ४७ ॥
रणोपकरणं शस्त्रं ध्वजाद्यं सर्वदैवतं ।
गृहञ्च सर्वदैवत्यं सर्व्वेषां विष्णुदेवता ॥ ४८ ॥
शिवो वा न ततो द्रव्यं व्यतिरिक्तं यतोऽस्ति हि(१) ।
द्रव्यस्य नाम गृह्णीयाद्ददानीति तथा वदेत् ॥ ४९ ॥
तोयं दद्यात्ततो हस्ते दाने विधिरयं स्मृतः ।

---

१ चानीव चेति ज० ।

विष्णुर्दाता विष्णुर्द्रव्यं प्रतिगृह्णामि वै वदेत् ॥ ५० ॥
स्वस्ति प्रतिग्रहं धर्म्मं भुक्तिमुक्ती फलप्रदं ।
गुरून् भृत्यांश्च जिहीर्षुरर्च्चिष्यन् देवताः पितॄन् ॥ ५१ ॥
सर्वतः प्रतिगृह्णीयान्न तु तृप्येत् स्वयन्ततः ।
शूद्रीयन्न तु यज्ञार्थं धनं शूद्रस्य तत्फलं ॥ ५२ ॥
गुडतक्ररसाद्याय शूद्राद्गृह्यं निवर्त्तिना ।
सर्वतः प्रतिगृह्णीयाद्दद्यात्कर्षितो द्विजः ॥ ५३ ।
नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात् ।
दोषो भवति विप्राणां ज्वलनार्कसमा हि ते ॥ ५४ ॥
कृते तु दीयते गत्वा त्रेतास्वानीय दीयते ।
द्वापरे याचमानाय कलौ त्वनुगमान्विते ॥ ५५ ॥
मनसा पात्रमुद्दिश्य जलं भूमौ विनिक्षिपेत् ।
विद्यते सागरस्यान्तो नान्तो दानस्य विद्यते[१] ॥ ५६ ॥
अद्य सोमार्कग्रहणसङ्क्रान्त्यादौ च कालके ।
गङ्गागयाप्रयागादौ तीर्थदेशे महागुणे ॥ ५७ ॥
तथा चामुकगोत्राय तथा चामुकशर्म्मणे ।
वेदवेदाङ्गयुक्ताय पात्राय सुमहात्मने ॥ ५८ ॥
यथानाम महाद्रव्यं विष्णुरुद्रादिदैवतं ।
पुत्रपौत्रगृहैश्वर्य्यपत्नीधर्म्मार्थसद्गुणा ॥ ५९ ॥
कीर्त्तिविद्यामहाकामसौभाग्यारोग्यवृद्धये ।
सर्व्वपापोपशान्त्यर्थं स्वर्गार्थं भुक्तिमुक्तये ॥ ६० ॥

---

१ न महानस्य विद्यते इति ख०, ग०, घ०, ङ०, छ०, ज०, ञ०, ट० च ।

एतत्तुभ्यं सम्प्रददे प्रीयतां मे हरिः शिवः ।
दिव्यान्तरीक्षभौमादिसमुत्पातौघघातकृत्[१] ॥ ६१ ॥
धर्म्मार्थकाममोक्षाप्त्यै ब्रह्मलोकप्रदोऽस्तु मे ।
यथानामसगोत्राय विप्रायामुकशर्म्मणे ॥ ६२ ॥
एतद्दानप्रतिष्ठार्थं सुवर्णं दक्षिणां ददे ।
अनेन दानवाक्येन सर्व्वदानानि वै ददेत् ॥ ६३ ॥

इत्याग्नेये महापुराणे दानपरिभाषा नाम नवाधिकद्विशततमोऽध्यायः ॥

---

## अथ दशाधिकद्विशततमोऽध्यायः ।

---

### महादानानि ।

अग्निरुवाच । सर्व्वदानानि वक्ष्यामि महादानानि षोड़श ।
तुलापुरुष आद्यन्तु हिरण्यगर्भदानकं ॥ १ ॥
ब्रह्माण्डं कल्पवृक्षश्च गोसहस्रञ्च पञ्चमं ।
हिरण्यकामधेनुश्च हिरण्याश्वश्च सप्तमं ॥ २ ॥
हिरण्याश्वरथस्तद्वद्धेमहस्तिरथस्तथा ।
पञ्चलाङ्गलकन्तद्वद्धरादानं तथैव च ॥ ३ ॥

---

१ समुत्पातादपापहृत् इति क० । समुत्पातादिपापहृदिति घ० ।

विश्वचक्रं कल्पलता सप्तसागरकं परं ।
रत्नधेनुर्महाभूतघटः शुभदिने ऽर्पयेत् ॥ ४ ॥
मण्डपे मण्डले दानं देवान् प्राच्यार्पयेद्विजे ।
मेरुदानानि पुण्यानि मेरवो दश तान् शृणु ॥ ५ ॥
धान्यद्रोणसहस्रेण उत्तमोऽर्द्धार्धतः परौ ।
उत्तमः षोड़शद्रोणैः कर्त्तव्यो लवणाचलः ॥ ६ ॥
दशभारैर्गुड़ाद्रिः स्यादुत्तमोऽर्द्धार्द्धतः परौ ।
उत्तमः पलसाहस्रैः स्वर्णमेरुस्तथा परौ ॥ ७ ॥
दशद्रोणैस्तिलाद्रिः स्यात् पञ्चभिश्च त्रिभिः क्रमात् ।
कार्पासपर्वतो विंशभारैश्च दशपञ्चभिः ॥ ८ ॥
विंशत्या घृतकुम्भानामुत्तमः स्याद् घृताचल(१) ।
दशभिः पलसाहस्रैरुत्तमो रजताचलः ॥ ९ ॥
अष्टभारैः शर्कराद्रिर्मध्योमन्दोऽर्द्धतोऽर्धतः ।
दश धेनूः प्रवक्ष्यामि या दत्त्वा भुक्तिमुक्तिभाक् ॥ १० ॥
प्रथमा गुड़धेनुः स्याद् घृतधेनुस्तथाऽपरा ।
तिलधेनुस्तृतीया च चतुर्थी जलधेनुका ॥ ११ ॥
क्षीरधेनुर्मधुधेनुः शर्करादधिधेनुके ।
रसधेनुः स्वरूपेण दशमी विधिरुच्यते ॥ १२ ॥
कुम्भाः स्युर्द्रवधेनूनामितरासान्तु राशयः ।
कृष्णाजिनचतुर्हस्तं प्राग्ग्रीवं विन्यसेद्भुवि ॥ १३ ॥
गोमयेनानुलिप्तायां दर्भानास्तीर्य सर्वतः ।

१ अत्र रत्नाचलपोषकपाठः पतितः दानविधानस्याभिधानस्य प्रविधानतयान्न मत्स्यपुराणीयदश धान्यध्याये रत्नाचलपाठस्य रत्नेन रत्नाचलस्य दानविधानस्यानर्थं मत्रै बोध्यं भवात ।

खुरे रूप्यमयं कृत्वा चर्मणा परिकल्पयेत्॥ १४॥
प्राङ्मुखीं कल्पयेद्धेनुमुदक्पादां सवत्सकां।
उत्तमा गुडधेनुः स्यात् सदा भारचतुष्टयात्॥ १५॥
वत्सं भारेण कुर्वीत भाराभ्यां मध्यमा स्मृता।
अर्द्धभारेण वत्सः स्यात् कनिष्ठा भारकेण तु॥ १६॥
चतुर्थांशेन वत्सः स्याद् गुडवित्तानुसारतः।
पञ्च कृष्णलका माषस्ते सुवर्णस्तु षोडश॥ १७॥
पलं सुवर्णाश्चत्वारस्तुला पलशतं स्मृतं।
स्याद्भारो विंशतितुला द्रोणस्तु चतुराढकः॥ १८॥
धेनुवत्सौ गुडस्योभौ सितसूक्ष्माम्बरावृतौ।
शुक्तिकर्णाविक्षुपादौ शुचिमुक्ताफलेक्षणौ॥ १९॥
सितसूत्रशिरालौ च सितकम्बलकम्बलौ।
ताम्रगडुकपृष्ठौ तौ सितचामररोमकौ॥ २०॥
विद्रुमभ्रूयुगावेतौ नवनीतस्तनान्वितौ।
क्षौमपुच्छौ कांस्यदोहाविन्द्रनीलकतारकौ॥ २१॥
सुवर्णशृङ्गाभरणौ रजतक्षुरसंयुतौ।
नानाफलमया दन्ता गन्धघ्राणप्रकल्पितौ॥ २२॥
रचयित्वा यजेद्धेनुमिमैर्मन्त्रैर्द्विजोत्तम।
या लक्ष्मीः सर्वभूतानां या च देवेष्ववस्थिता॥ २३॥
धेनुरूपेण सा देवी मम शान्तिं प्रयच्छतु।
देहस्था या च रुद्राणी शङ्करस्य सदा प्रिया॥ २४॥
धेनुरूपेण सा देवी मम पापं व्यपोहतु।
विष्णुवक्षसि या लक्ष्मीः स्वाहा या च विभावसोः॥ २५॥

चन्द्रार्कशक्रशक्तिर्या धेनुरूपास्तु सा श्रिये ।
चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्धनदस्य च ॥ २६ ॥
लक्ष्मीर्या लोकपालानां सा धेनुर्वरदास्तु मे ।
स्वधा त्वं पितृमुख्यानां स्वाहा यज्ञभुजां यतः ॥ २७ ॥
सर्वपापहरा धेनुस्तस्माच्छान्तिं प्रयच्छ मे ।
एवं सामन्त्रितां धेनुं ब्राह्मणाय निवेदयेत् ॥ २८ ॥
समानं सर्वधेनूनां विधानं चैतदेव हि ।
सर्वयज्ञफलं प्राप्य निर्मलो भुक्तिमुक्तिभाक् ॥ २९ ॥
स्वर्णशृङ्गी शफै रौप्यैः सुशीला वस्त्रसंयुता ।
कांस्योपदोहा दातव्या चीरिणी गौः सदक्षिणा ॥ ३० ॥
दातास्याः स्वर्गमाप्नोति वत्सरान् रोमसम्मितान् ।
कपिला चेत्तारयति भूयश्चासप्तमं कुलं ॥ ३१ ॥
स्वर्णशृङ्गीं रौप्यखुरां कांस्यदोहनकान्वितां ।
शक्तितो दक्षिणायुक्तां दत्त्वा स्याद्भुक्तिमुक्तिभाक् ॥ ३२ ॥
सवत्सरोमतुल्यानि युगान्युभयतोमुखीं ।
दत्त्वा स्वर्गमवाप्नोति पूर्व्वेण विधिना ददेत् ॥ ३३ ॥
आसन्नमृत्युना देया सवत्सा गौस्तु पूर्व्ववत् ।
यमद्वारे महाघोरे तप्ता वैतरणी[1] नदी ॥ ३४ ॥
तान्तर्त्तुञ्च ददाम्येनां[2] कृष्णां वैतरणीञ्च गां ।

इत्याग्नेये महापुराणे महादानानि नाम दशाधिकद्विशततमोऽध्यायः ॥

---

१ कृष्णा वैतरणी इति ख०, छ०, ञ० च । २ तामग्रुं वै ददाम्यमामिति ङ० ।

# अथैकादशाधिकद्विशततमोऽध्यायः ।

—:○:—

## नानादानानि ।

अग्निरुवाच । एकाद्यां दशगुर्दद्याद्दश दद्याच्च गोशती ।
शतं सहस्रगुर्दद्यात् सर्वे तुल्यफला हि ते ॥ १ ॥
प्रासादा यत्र सौवर्णा वसोर्धारा च यत्र सा ।
गन्धर्वाप्सरसो यत्र तत्र यान्ति सहस्रदाः ॥ २ ॥
गवां शतप्रदानेन मुच्यते नरकार्णवात् ।
दत्त्वा वत्सतरीं चैव स्वर्गलोके महीयते ॥ ३ ॥
गोदानादायुरारोग्यसौभाग्यस्वर्गमाप्नुयात् ।
इन्द्रादिलोकपालानां या राजमहिषी शुभा ॥ ४ ॥
महिषीदानमाहात्म्यादस्तु मे सर्वकामदा(१) ।
धर्मराजस्य साहाय्ये(२) यस्याः पुत्रः प्रतिष्ठितः ॥ ५ ॥
महिषासुरस्य जननी या सास्तु वरदा मम ।
महिषीदानाच्च सौभाग्यं वृषदानाद्दिवं व्रजेत् ॥ ६ ॥
संयुक्तहलपङ्क्त्याख्यं दानं सर्वफलप्रदं ।
पङ्क्तिर्दशहला प्रोक्ता दारुजा हेमसंयुता ॥ ७ ॥
सौवर्णपट्टसंबद्धान्दत्त्वा स्वर्गे महीयते ।

---

१ गवां शतप्रदानेनेत्यादि, सर्वकामदा इत्यन्तः पाठः ञ॰ पुस्तके नास्ति ।

२ धर्मराजस्य साहाय्ये इति ञ॰

दशानां कपिलानां तु दत्तानां ज्येष्ठपुष्करे ॥ ८ ॥
तत् फलस्याक्षयं प्रोक्तं(१) वृषभस्य तु मोक्षणे(२) ।
धर्म्मोऽसित्वञ्चतुष्पादश्चत्वारस्ते प्रिया इमाः ॥ ९ ॥
नमो ब्रह्मण्यदेवेश पितृभूतर्षिपोषक ।
त्वयि मुक्तेऽखिला लोका मम सन्तु निरामयाः ॥ १० ॥
मा मे ऋणोऽस्तु दैवत्यो(३) भौतः पैत्रोऽथ मानुषः ।
धर्म्मस्त्वं त्वत्प्रपन्नस्य या गतिः साऽस्तु मे ध्रुवा ॥ ११ ॥
अङ्कयेच्चक्रशूलाभ्यां मन्त्रेणानेन चोत्सृजेत् ।
एकादशाहे प्रेतस्य यस्य चोत्सृज्यते वृषः ॥ १२ ॥
मुच्यते प्रेतलोकात्तु पर्वमासे चाब्दिकादिषु ।
दशहस्तेन दण्डेन त्रिंशद्दण्डा निवर्त्तनं ॥ १३ ॥
तान्येव दशविस्तारो गोचर्म्म तत्प्रदोऽघभित्(४) ।
गोभूहिरण्यसंयुक्तं कृष्णाजिनन्तु योऽर्पयेत्(५) ॥ १४ ॥
सर्वदुष्कृतकर्म्मापि सायुज्यं ब्रह्मणो व्रजेत् ।
भाजनन्तिलसम्पूर्णं मधुना पूर्णमेव च ॥ १५ ॥
दद्यात् कृष्णतिलानाञ्च प्रस्थमेकञ्च मागधं ।
शय्यां दत्त्वा तु सगुणां(६) भुक्तिमुक्तिमवाप्नुयात् ॥ १६ ॥
हैमीं प्रतिकृतिं कृत्वा दत्त्वा स्वर्गस्तथात्मनः ।
विपुलन्तु गृहं कृत्वा दत्त्वा स्याद्भुक्तिमुक्तिभाक् ॥ १७ ॥

---

१ तत् फलं चाक्षयं स्यादिति ङ० ।
२ वृषभस्य विमोचने इति ख० । वृषभस्य च मोचनादिति ज० ।
३ दैवोऽथेति ख०, छ० च ।
४ तत्प्रदोऽश्नुदिति ग० । तत्प्रदोऽश्नि-दिति घ०, ङ० च ।
५ यस्तु कृष्णाजिनं दद्यादिति ट० ।
६ दत्त्वोत्तमगुणामिति ख० ।

गृहं मठं सभां स्तगौं दत्त्वा स्थाच्च प्रतिश्रयं ।
दत्त्वा कृत्वा गोगृहञ्च निष्पापः स्वर्गमाप्नुयात् ॥ १८ ॥
यममाहिषदानात्तु निष्पापः स्वर्गमाप्नुयात् ।
ब्रह्मा हरो हरिर्देवैर्मध्ये च यमदूतकः ॥ १९ ॥
पाशी(१) तस्य शिरश्छित्त्वा तं दद्यात् स्वर्गभाग्भवेत् ।
त्रिमुखाख्यमिदं दानं गृहीत्वा तु द्विजोऽघभाक् ॥ २० ॥
चक्रं कृष्णमयं कृत्वा के धृत्वा तत् प्रदापयेत् ।
हेमयुक्तं द्विजायैतत् कालचक्रमिदम्महत् ॥ २१ ॥
आत्मतुल्यन्तु यो लौहं दद्यान्न नरकं व्रजेत् ।
पञ्चाशत्पलसंयुक्तं लौहदण्डं तु योऽर्पयेत् ॥ २२ ॥
वस्त्रेणाच्छाद्य विप्राय यमदण्डो न विद्यते ।
मूलं फलादि वा द्रव्यं सहस्रं चाथ चैकशः ॥ २३ ॥
मृत्युञ्जय समुद्दिश्य दद्यादायुर्विवर्द्धये ।
पुमान् कृष्णतिलैः कार्य्यो रौप्यदन्तः सुवर्णदृक् ॥ २४ ॥
खड्गोद्यतकरो दीर्घो जवाकुसुमभूषणः ।
रक्ताम्बरधरः स्रग्वी शङ्खमालाविभूषितः ॥ २५ ॥
उपानद्युगयुक्ताङ्घ्रिः कृष्णकम्बलपार्श्वकः ।
गृहीतमांसपिण्डश्च वामे ये काम्यपूरुषः ॥ २६ ॥
सम्पूज्य तञ्च गन्धाद्यैः(२) ब्राह्मणायोपपादयेत् ।
मरणव्याधिहीनः स्याद्राजराजेश्वरो भवेत् ॥ २७ ॥
गोवृषौ तु द्विजे दत्त्वा भुक्तिमुक्तिमवाप्नुयात् ।

---

१ पापो इति ख०, ग०, घ० च ।　　* [illegible]

देवताधिष्ठितशय्यां हैमं दत्त्वा न मृत्युभाक् ॥ २८ ॥
घण्टादिपूर्णमप्येकं दत्त्वा स्याद्भुक्तिमुक्तिभाक्।
सर्वान् कामानवाप्नोति यः प्रयच्छति काञ्चन ॥ २९ ॥
सुवर्णे दीयमाने तु रजतं दक्षिणेष्यते।
अन्येषामपि दानानां सुवर्णं(१) दक्षिणा स्मृता ॥ ३० ॥
सुवर्णं रजतं ताम्रं तण्डुलं धान्यमेव च।
नित्यश्राद्धं देवपूजा सर्वमेतदद्क्षिणं ॥ ३१ ॥
रजतं दक्षिणा पित्र्ये धर्मकामार्थसाधनं।
सुवर्णं रजतं ताम्रं मणिमुक्तावसूनि च ॥ ३२ ॥
सर्वमेतन्महाभागो ददाति वसुधान्ददत्।
पितृंश्च पितृलोकस्थान् देवस्थाने च देवताः ॥ ३३ ॥
सन्तर्पयति शान्तात्मा यो ददाति वसुन्धराम्।
खर्वटं खेटकं वापि ग्रामं वा शस्यशालिनं ॥ ३४ ॥
निवर्त्तनशतं वापि तदर्द्धं वा गृहादिकं।
अपि गोचर्ममात्रां वा दत्त्वोर्वीं सर्वभाग् भवेत् ॥ ३५ ॥
तैलविन्दुर्यथा चाप्सु प्रसर्पेद् भूगतं तथा।
सर्वेषामेवदानानामेकजन्मानुगं फलं ॥ ३६ ॥
हाटकक्षितिगौरीणां सप्तजन्मानुगं फलं।
विमातृकुलमुद्धृत्य कन्यादो ब्रह्मलोकभाक् ॥ ३७ ॥
गज मद्दक्षिणं दत्त्वा निर्मलः स्वर्गभाग् भवेत्।
अश्वं दत्त्वायुरारोग्यसौभाग्यस्वर्गमाप्नुयात् ॥ ३८ ॥

१ हिरण्यमिति ड०।

दासीं दत्त्वा द्विजेन्द्राय अप्सरोलोकमाप्नुयात्।
दत्त्वा ताम्रमयीं स्थालीं पलानां पञ्चभिः शतैः॥ ३९॥
अर्द्धैस्तदर्द्धैरर्द्धैर्वा भुक्तिमुक्तिमवाप्नुयात्(१)।
शकटं वृषसंयुक्तं दत्त्वा यानेन नाकभाक्॥ ४०॥
वस्त्रदानात्तथैवायुरारोग्यं स्वर्गमक्षयं।
धान्यगोधूमकलमयवादीन् स्वर्गभाग् ददत्॥ ४१॥
आसनं तैजसं पात्रं लवणं गन्धचन्दनं।
धूपं दीपञ्च ताम्बूलं लौहं रूप्यञ्च रत्नकं(२)॥ ४२॥
दिव्यानि नानाद्रव्याणि दत्त्वा स्याद् भुक्तिमुक्तिभाक्।
तिलांश्च तिलपात्रञ्च दत्त्वा स्वर्गमवाप्नुयात्॥ ४३॥
अन्नदानात् परं नास्ति न भूतं न भविष्यति।
हस्त्यश्वरथदानानि दासीदासगृहाणि च॥ ४४॥
अन्नदानस्य सर्वाणि कलां नार्हन्ति षोडशीं।
कृत्वापि सुमहत्पापं यः पश्चादन्नदो भवेत्॥ ४५॥
सर्वपापविनिर्मुक्तो लोकानाप्नोति चाक्षयान्।
पानीयञ्च प्रपान्दत्त्वा भुक्तिमुक्तिमवाप्नुयात्॥ ४६॥
अग्निं काष्ठञ्च मार्गादौ दत्त्वा दीप्ताग्निमाप्नुयात्(३)।
देवगन्धर्वनारीभिर्विमाने सेव्यते दिवि॥ ४७॥
घृतं तैलञ्च लवणं दत्त्वा सर्वमवाप्नुयात्।

---

१ तमोर्द्धैस्तदर्द्धैरर्द्धैर्युक्तो भुक्तिमवाप्नुयात् इति ख०।
२ धूपदीपञ्च नैवेद्यं ताम्बूलं लौहरत्नकमिति ख०।
३ दीप्ताग्निमाप्नुयादिति ङ०।

छत्रोपानहकाष्ठादि दत्त्वा स्वर्गे सुखी वसेत्(१) ॥ ४८ ॥
प्रतिपत्तिविमुख्येषु विष्कुम्भादिकयोगके।
चैत्रादौ वत्सरादौ च अश्विन्यादौ हरिं हरं ॥ ४९ ॥
ब्रह्माणं लोकपालादीन् प्रार्च्य दानं महाफलं।
हयारामान् भोजनादीन् मार्गसंवाहनादिकान् ॥ ५० ॥
पादाभ्यङ्गादिकं दत्त्वा भुक्तिमुक्तिमवाप्नुयात्।
त्रीणि तुल्यफलानीह गावः पृथ्वी सरस्वती ॥ ५१ ॥
ब्राह्मीं सरस्वतीन्दत्त्वा निर्मलो ब्रह्मलोकभाक्।
सप्तद्वीपमहीदः स ब्रह्मज्ञानं ददाति यः ॥ ५२ ॥
अभयं सर्वभूतेभ्यो यो दद्यात् सर्वभाङ् नरः।
पुराणं भारतं वापि रामायणमथापि वा ॥ ५३ ॥
लिखित्वा पुस्तकं दत्त्वा भुक्तिमुक्तिमवाप्नुयात्।
वेदशास्त्रं नृत्यगीतं योऽध्यापयति नाकभाक् ॥ ५४ ॥
वित्तं दद्यादुपाध्याये छात्राणां भोजनादिकं।
किमदत्तं भवेत्तेन धर्मकामादिदर्शिना ॥ ५५ ॥
वाजपेयसहस्रस्य सम्यग्दत्तस्य यत् फलं।
तत्फलं सर्वमाप्नोति विद्यादानान्न संशयः ॥ ५६ ॥
शिवालये विष्णुगृहे सूर्यस्य भवने तथा।
सर्वदानप्रदः स स्यात् पुस्तकं वाचयेत्तु यः ॥ ५७ ॥
त्रैलोक्ये चतुरो वर्णाश्चत्वारश्चाश्रमाः पृथक्।
ब्रह्माद्या देवताः सर्वा विद्यादाने प्रतिष्ठिताः ॥ ५८ ॥

---

१ स्वर्गे महीयते इति ख०। स्वर्गसुखी भवेदिति घ०, ङ० च।

विद्या कामदुघा धेनुर्विद्या चक्षुरनुत्तमं।
उपवेदप्रदानेन गन्धर्वैः सह मोदते ॥ ५९ ॥
वेदाङ्गानाञ्च दानेन स्वर्गलोकमवाप्नुयात्।
धर्मशास्त्रप्रदानेन धर्मेण सह मोदते ॥ ६० ॥
सिद्धान्तानां प्रदानेन मोक्षमाप्नोत्यसंशयं।
विद्यादानमवाप्नोति प्रदानात् पुस्तकस्य तु ॥ ६१ ॥
शास्त्राणि च पुराणानि दत्त्वा सर्वमवाप्नुयात्।
शिष्यांश्च शिक्षयेद्यस्तु पुण्डरीकफलं लभेत् ॥ ६२ ॥
येन जीवति तद्दत्त्वा फलस्यान्तो न विद्यते।
लोके श्रेष्ठतमं सर्वमात्मनश्चापि यत् प्रियं ॥ ६३ ॥
सर्वं पितृणां दातव्यं तेषामेवाक्षयार्थिना।
विष्णुं रुद्रं पद्मयोनिं देवीविघ्नेश्वरादिकान् ॥ ६४ ॥
पूजयित्वा प्रदद्याद्यः पूजाद्रव्यं स सर्वभाक्।
देवालयं च प्रतिमां कारयन् सर्वमाप्नुयात् ॥ ६५ ॥
सम्मार्जनं चोपलेपं कुर्वन् स्याद्विमलः पुमान्।
नानामण्डलकार्य्यग्रे मण्डलाधिपतिर्भवेत्(१) ॥ ६६ ॥
गन्धं पुष्पं धूपदीपं नैवेद्यञ्च प्रदक्षिणं।
घण्टाध्वजवितानञ्च प्रेक्षणं वाद्यगीतकं ॥ ६७ ॥
वस्त्रादिदत्त्वादेवाय भुक्तिमुक्ति मवाप्नुयात्।
कस्तूरिकां शिह्लकञ्च श्रीखण्डमगुरुन्तथा ॥ ६८ ॥
कर्पूरञ्च तथामुस्तं गुग्गुलुं विजयं दहेत्।

---

सम्मार्जनमित्यादिः मण्डलाधिपतिर्भवेदित्यन्तः पाठः ज० पुस्तके नास्ति।

घृतप्रस्थेन संस्थाप्य सद्भान्त्यादौ स सर्वभाक्॥ ६८ ॥
स्नानं पलशतं ज्ञेयमभ्यङ्गं पञ्चविंशतिः।
पलानान्तु सहस्रेण महास्नानं प्रकीर्त्तितं॥ ७० ॥
दशापराधास्तोयेन क्षीरेण स्नापनाच्छतं।
सहस्रं पयसा दध्ना घृतेनायुतमिष्यते ॥ ७१ ॥
दासीदासमलङ्कारं गोभूम्यश्वगजादिकं।
देवाय दत्त्वा सौभाग्यं धनायुष्मान् व्रजेद्दिवं ॥ ७२ ॥

इत्याग्नेये महापुराणे नानादानानि नामैकादशाधिकद्विशततमोऽध्यायः ॥

---

## अथ द्वादशाधिकद्विशततमोऽध्यायः।

—:○:—

### मेरुदानानि।

अग्निरुवाच। काम्यदानानि वक्ष्यामि सर्वकाम प्रदानि ते।
नित्यपूजां मासि मासि कृत्वाथो काम्यपूजनं ॥ १ ॥
व्रतार्हणं गुरोः पूजा वत्सरान्ते महार्चनं।
आश्वयुजे मार्गशीर्षे तु कमलं पिष्टसम्भवं ॥ २ ॥
शिवाय पूज्य यो दद्यात् सूर्य्यलोके चिरं वसेत्(१)।

---

१ सर्वलोके चिरं वसेदिति क॰, ख॰, घ॰, ट॰ च। शिवलोके चिरं वसेदिति ग॰।

गजं पौषे पिष्टमयं विसप्तकुलमुद्धरेत् ॥ ३ ॥
माघे चाश्वरथं पैष्टं दत्त्वा न नरकं व्रजेत् ।
फाल्गुने तु रथं पैष्टं स्वर्गभुक् स्यान्महीपतिः ॥ ४ ।
चैत्रे चेक्षुमयीं गावन्दासदासीसमन्वितां ।
दत्त्वा स्वर्गे चिरं स्थित्वा तदन्ते स्यान्महीपतिः ॥ ५ ॥
सप्तव्रीहीश्च वैशाखे दत्त्वा शिवमयो भवेत् ।
बलिमण्डलकस्यान्ते. ज्यैष्ठाषाढे शिवो भवेत् ॥ ६ ॥
विमानं श्रावणे पौष्यं दत्त्वा स्वर्गी ततो नृपः ।
शतद्वयं फलानान्तु दत्त्वोद्धृत्य कुलं नृपः ॥ ७ ॥
गुग्गुलादि दद्द्भाद्रे स्वर्गी स स्यात्ततो नृपः ।
क्षीरसर्पिर्भृतं पात्रमाश्विने स्वर्गदश्चरेत् ॥ ८ ॥
कार्त्तिके गुडखण्डाज्यं दत्त्वा स्वर्गी ततो नृपः ।
मेरुदानं द्वादशकं वक्ष्येऽहं भुक्तिमुक्तिदं ॥ ९ ॥
मेरुव्रते तु कार्त्तिक्यां रत्नमेरुन्ददेद् द्विजे ।
सर्व्वयाश्चैव मेरूणां प्रमाणं क्रमशः शृणु ॥ १० ॥
वज्रपद्ममहानीलनीलस्फटिकसञ्ज्ञितः ।
पुष्य मरकत मुक्ता प्रस्थमात्रेण चोत्तमः ॥ ११ ॥
मध्योऽर्द्धः स्यात्तदर्द्धोऽधो वित्तशाठ्यं विवर्जयेत् ।
कर्णिकायां न्यसेन्मेरुं ब्रह्मविष्णुशिवदैवतं ॥ १२ ।
माल्यवान् पूर्वतः पूर्व्वस्ततपूर्वे भद्रसञ्ज्ञितः ।
अश्वरथस्ततः प्रोक्तो निषधो मेरुदक्षिणे ॥ १३ ॥
हेमकूटोऽथ हिमवान् त्रयं सौम्ये तथा त्रयं ।
नीलः श्वेतश्च शृङ्गी च पश्चिमे गन्धमादनः ॥ १४ ॥

वैकङ्कः केतुमालः स्यान्मेरुर्द्वादशसंयुतः ।
सोपवासोऽर्चयेद्विष्णुं शिवं वा स्नानपूर्वकं ॥ १५ ॥
देवाग्रे चार्घ्यं मेरुञ्च मन्त्रैर्विप्राय वै ददेत् ।
विप्रायामुकगोत्राय मेरुन्द्रव्यमयम्परं ॥ १६ ॥
भुक्त्यै मुक्त्यै निर्मलत्वे विष्णुदैवं ददामि ते ।
इन्द्रलोके ब्रह्मलोके शिवलोके हरेः पुरे ॥ १७ ॥
कुलमुद्धृत्य क्रीडेत विमाने देवपूजितः ।
अन्येष्वपि च कालेषु सङ्क्रान्त्यादौ प्रदापयेत् ॥ १८ ॥
पलानान्तु सहस्रेण हेममेरुमकल्पयेत् ।
शृङ्गत्रयसमायुक्तं ब्रह्मविष्णुहरान्वितं ॥ १९ ॥
एकैकं पर्वतन्तस्य शतैकैकेन कारयेत् ।
मेरुणा सह शैलास्तु ख्यातास्तत्र त्रयोदश ॥ २० ॥
अयने ग्रहणादौ च विष्णवे हरिसन्निधौ च ।
स्वर्णमेरुं द्विजायार्प्य विष्णुलोके चिरं वसेत् ॥ २१ ॥
परमाणवो यावन्त इह राजा भवेच्चिरं ।
रौप्यमेरुं द्वादशाद्रियुतं सङ्कल्पतो ददेत्(१) ॥ २२ ॥
प्रागुक्तं च फलं तस्य विष्णुं विप्रञ्च पूज्य च ।
भूमिमेरुञ्च विषयं मण्डलं ग्राममेव च(२) ॥ २३ ॥
परिकल्प्याष्टमांशेन शेषांशाः(३) पूर्ववत् फलं ।
द्वादशाद्रिसमायुक्तं हस्तिमेरुस्वरूपिणं ॥ २४ ॥

१ [illegible] ददेदिति ग०, घ०, ङ०, ट० च । ज० च ।
३ शेषांशा इति घ० ।
२ मण्डलं ग्राममेव चेति ग०, ज०,

दद्देचिपुरुषैर्युक्तं दत्त्वानन्तं फलं लभेत् ।
त्रिपञ्चाश्चैरश्वमेकं हयदाद्यसयुतं ॥ २५ ॥
विष्णादीन् पूज्य तं दत्त्वा भुक्तभोगो त्वमो भवेत् ।
अश्वसङ्ख्याप्रमाणेन गोमेरुं पूर्ववद्ददेत् ॥ २६ ॥
पट्टवस्त्रैर्भारमात्रैर्वस्त्रमेरुश्च मध्यतः ।
शैलैर्दादशवस्त्रैश्च दत्त्वा तथाचयं फलं ॥ २७ ॥
घृतपञ्चसहस्रैश्च पलानामाज्यपर्वत ।
शतैः पञ्चभिरेकैकः पर्वतेऽस्मिन् हरिं यजेत् ॥ २८ ॥
विष्णवे ब्राह्मणायार्घ्यं सर्वं प्राप्य हरिं व्रजेत् ।
एवं च खण्डमेरुश्च कृत्वा दत्त्वाप्नुयात् फलं ॥ २९ ॥
धान्यमेरुः पञ्चखारोऽपर एकैकखारकाः ।
स्वर्णत्रिशृङ्गकाः सर्वे ब्रह्मविष्णुमहेश्वरान् ॥ ३० ॥
सर्वेषु पूज्य विष्णुं वा विशेषादक्षयं फलं ।
एवं दशांशमानेन तिलमेरुं प्रकल्पयेत् ॥ ३१ ॥
शृङ्गाणि पूर्ववत्तस्य तथैवान्यनगेषु च ।
तिलमेरुं प्रदायाथ बन्धुभिर्विष्णुलोकभाक्(¹) ॥ ३२ ॥
नमो विष्णुस्वरूपाय धराधराय वै नमः ।
ब्रह्मविष्णीशशृङ्गाय धरानाभिस्थिताय च ॥ ३३ ॥
भगदादशनाथाय सर्वपापापहारिणे ।
विष्णुभक्ताय शान्ताय पापं मे कुरु सर्वथा ॥ ३४ ॥
निष्पापः पितृभिः सार्द्धं विष्णुं गच्छामि ओं नमः ।

---

१ बन्धुभिर्ब्रह्मलोकभागिति ख० ।

त्वं हरिस्तु हरेरग्रे अहं विष्णुर विपाये ॥ ३५ ॥
निवेदयामि भक्त्या तु भुक्तिमुक्त्यर्थहेतवे ।

इत्याग्नेये महापुराणे मेरुदानानि नाम द्वादशाधिक-
द्विशततमोऽध्यायः ॥

## अथ त्रयोदशाधिकद्विशततमोऽध्यायः ।

### पृथ्वीदानानि ।

अग्निरुवाच । पृथ्वीदानं प्रवक्ष्यामि पृथिवी त्रिविधा मता ।
शतकोटियोजनानां सप्तद्वीपा ससागरा ॥ १ ॥
जम्बुद्वीपावधिः सा च उत्तमा मेदिनीरिता ।
उत्तमां पञ्चभिर्भारैः काञ्चनैश्च प्रकल्पयेत् ॥ २ ॥
तदर्धोत्तरं कूर्मं तथा पद्मं समादिशेत् ।
उत्तमा कथिता पृथ्वी दशांशेनैव तु मध्यमा ॥ ३ ॥
कन्यसा च त्रिभागेन(१) त्रिहान्या कूर्मपङ्कजे ।
पलानान्तु सहस्रेण कारयेत् कल्पपादपं ॥ ४ ॥
मूलदण्डं सपत्रञ्च फलपुष्पसमन्वितं ।

१ कन्यसा या तु त्रिभागेनेति ग

पञ्चस्कन्धन्तु सङ्कल्प्य यज्ञानान्दापयेत् सुधीः ॥ ५ ॥
एतद्दाता ब्रह्मलोके पितृभिर्मोदते चिरं ।
विष्णवे कामधेनुन्तु पलानां पञ्चभिः शतैः ॥ ६ ॥
ब्रह्मविष्णुमहेशाद्या देवा धेनौ व्यवस्थिताः ।
धेनुदानं सर्व्वदानं सर्व्वदं ब्रह्मलोकदं ॥ ७ ॥
विष्णवे कपिलां दत्त्वा तारयेत् सकलं कुलं ।
अलङ्कृत्य स्त्रियं दद्यादश्वमेधफलं लभेत्(१) ॥ ८ ॥
भूमिं दत्त्वा सर्व्वभाक् स्यात् सर्व्वशस्यप्ररोहिणीम् ।
ग्रामं वाथ पुरं वापि(२) खेटकञ्च ददत् सुखी ॥ ९ ॥
कार्त्तिक्यादौ(३) वृषोत्सर्गं कुर्व्वंस्तारयते कुलं(४) ।

इत्याग्नेये महापुराणे वृषोत्सर्गो नाम त्रयोदशाधिकद्विशततमोऽध्यायः ॥

---

## अथ चतुर्दशाधिकद्विशततमोऽध्यायः ।

—:०:—

### मन्त्रमाहात्म्यकथनं ।

अग्निरुवाच । नाडीचक्रं प्रवक्ष्यामि यज्ज्ञानाज् ज्ञायते हरिः ।
नाभेरधस्ताद्यत् कन्दमङ्कुरास्तत्र निर्गताः ॥ १ ॥

---

१ नरमेधफलं लभेदिति ग०, घ०, ङ० च ।
२ पुरी वापीति ख० ।
३ कार्त्तिकादाविति ग०, ट० च ।
४ कुलम् समारयेत् कुलमिति ग०, ख०, घ०, ट० च ।

सूकरो भघणे चैव देवदत्तो विजृम्भिते ॥ १३ ॥
धनञ्जयः स्थितो घोषे मृतस्यापि न मुञ्चति।
जीवः प्रयाति दशधा नाडीचक्रं हि तेन तत् ॥ १४ ॥
सङ्क्रान्तिर्विषुवच्चैव अहोरात्रायनानि च।
अधिमास ऋणञ्चैव ऊनरात्र धनन्तथा(१) ॥ १५ ॥
ऊनरात्रं भवेद्धिक्का अधिमासो विजृम्भिका।
ऋणञ्चात्र भवेत् कासो निश्वासो धनमुच्यते(२) ॥ १६ ॥
उत्तरं दक्षिणं ज्ञेयं वामं दक्षिणसञ्ज्ञितं।
मध्ये तु विषुवं प्रोक्तं पुटद्वयविनिःसृतं ॥ १७ ॥
सङ्क्रान्तिः पुनरस्यैव स्वस्थानात् स्थानयोगतः।
सुसुम्णा मध्यमे ह्यङ्गे इड़ा वामे प्रतिष्ठिता ॥ १८ ॥
पिङ्गला दक्षिणे विप्र ऊर्द्धं प्राणो ह्यहः स्मृतं।
अपानो रात्रिरेवं स्यादेको वायुर्दशात्मक ॥ १९ ॥
आयामो देहमध्यस्थः सोमग्रहणमिष्यते।
देहातितत्त्वमायामं आदित्यग्रहणं विदुः ॥ २० ॥
उदरं पूरयेत्तावद्वायुना यावदीप्सितं।
प्राणायामो भवेदेष पूरको देहपूरक. ॥ २१ ॥
पिधाय सर्व्वद्वाराणि निश्वासोच्छ्वासवर्जितः।
सम्पूर्णकुम्भवत्तिष्ठेत् प्राणायामः स कुम्भकः ॥ २२ ॥
मुञ्चेद्वायुं ततस्तूर्द्धं श्वासेनैकेन मन्त्रवित्।
उच्छ्वासयोगयुक्तश्च वायुमूर्द्धं विरेचयेत् ॥ २३ ॥

---

१ ऋणमथेति ख०। २ धनमुच्यत इति अ०, ख० च।

उच्चरति स्वयं यस्मात् स्वदेहावस्थितः शिवः ।
तस्मात् तत्त्वविदाश्चैव स एव जप उच्यते ॥ २४ ॥
अयुते द्वे सहस्रैकं षट्शतानि तथैव च ।
अहोरात्रेण योगीन्द्रो जपसङ्ख्यां करोति सः ॥ २५ ॥
अजपा नाम गायत्री ब्रह्मविष्णुमहेश्वरी ।
अजपां जपते यस्तां पुनर्जन्म न विद्यते ॥ २६ ॥
चन्द्राग्निरविसंयुक्ता आद्या कुण्डलिनी मता ।
हृत्प्रदेशे तु सा ज्ञेया अङ्कुराकारसंस्थिता ॥ २७ ॥
सृष्टिन्यासो भवेत्तत्र स वै सर्गावलम्बनात् ।
स्रवन्तं चिन्तयेत्तस्मिन्नमृतं सात्त्विकोत्तमः ॥ २८ ॥
देहस्थः सकलो ज्ञेयो निष्कलो देहवर्जितः(१) ।
हंसहंसेति यो ब्रूयाद्धंसो देवः सदाशिवः ॥ २९ ॥
तिलेषु च यथा तैलं पुष्पे गन्धः समाश्रितः ।
पुरुषस्य तथा देहे स बाह्याभ्यन्तरं स्थितः ॥ ३० ॥
ब्रह्मणो हृदये स्थानं कण्ठे विष्णुः समाश्रितः ।
तालुमध्ये(२) स्थितो रुद्रो ललाटे तु महेश्वरः ॥ ३१ ॥
प्राणाग्रन्तु शिवं विद्यात्तस्यान्ते तु परापरं ।
पञ्चधा सकलः प्रोक्तो विपरीतस्तु निष्कलः ॥ ३२ ॥
प्रासादं नादमुत्थाप्य शततन्तु जपेद्यदि ।
षण्मासात्सिद्धिमाप्नोति योगयुक्तो न संशयः ॥ ३३ ॥
गमागमस्य ज्ञानेन सर्व्वपापक्षयो भवेत् ।

---

१ देहपूजित इति ख०, ग०, ङ० च।　　२ तालुमूले इति ग०।

अणिमादिगुणैश्वर्यं षड्भिर्मासैरवाप्नुयात् ॥ ३४ ॥
स्थूलः सूक्ष्मः परश्चेति प्रासादः कथितो मया ।
ह्रस्वो दीर्घः प्लुतश्चेति प्रासादं लक्षयेत्त्रिधा ॥ ३५ ॥
ह्रस्वो दहति पापानि दीर्घो मोक्षप्रदो भवेत् ।
आप्यायने प्लुतश्चेति मूर्द्ध्नि विन्दुविभूषितः ॥ ३६ ॥
आदावन्ते च ह्रस्वस्य फट्कारो मारणे हितः ।
आदावन्ते च हृदयमाकृष्टौ सम्प्रकीर्त्तितम् ॥ ३७ ॥
देवस्य दक्षिणां मूर्त्तिं पञ्चलक्षं स्थितो जपेत् ।
जपान्ते घृतहोमस्तु दशसाहस्रिको भवेत् ॥ ३८ ॥
एवमाप्यायितो मन्त्रो वश्योच्चाटादि कारयेत् ।
ऊर्द्ध्व शून्यमधः शून्यं मध्ये शून्यं निरामयं ॥ ३९ ॥
त्रिशून्यं यो विजानाति मुच्यतेऽसौ ध्रुवं द्विजः ।
प्रासादं यो न जानाति पञ्चमन्त्रमहातनुं ॥ ४० ॥
अष्टत्रिंशत्कलायुक्तं न स आचार्य्य उच्यते ।
तथोङ्कारञ्च गायत्रीं रुद्रादीन् वेत्त्यसौ गुरुः ॥ ४१ ॥

इत्याग्नेये महापुराणे मन्त्रमहात्म्यं नाम चतुर्दशाधिकद्विशततमोऽध्यायः ॥

---

उच्चरति स्वयं यस्मात् स्वदेहावस्थितः शिवः।
तस्मात् तत्त्वविदाश्चैव स एव जप उच्यते ॥ २४ ॥
अयुते द्वे सहस्रैकं षट्शतानि तथैव च।
अहोरात्रेण योगीन्द्रो जपसङ्ख्यां करोति सः ॥ २५ ॥
अजपा नाम गायत्री ब्रह्मविष्णुमहेश्वरी।
अजपां जपते यस्तां पुनर्जन्म न विद्यते ॥ २६ ॥
चन्द्राग्निरविसंयुक्ता आद्या कुण्डलिनी मता।
हृत्प्रदेशे तु सा ज्ञेया अङ्कुराकारसंस्थिता ॥ २७॥
सृष्टिन्यासो भवेत्तत्र स वै सर्वावलम्बनात्।
स्रवन्तं चिन्तयेत्तस्मिन्नमृतं सात्त्विकोत्तमः ॥ २८ ॥
देहस्थः सकलो ज्ञेयो निष्कलो देहवर्जितः(१)।
हंसहंसेति यो ब्रूयाद्धंसो देवः सदाशिवः ॥ २९ ॥
तिलेषु च यथा तैलं पुष्पे गन्धः समाश्रितः।
पुरुषस्य तथा देहे स बाह्याभ्यन्तरं स्थितः ॥ ३० ॥
ब्रह्मणो हृदये स्थानं कण्ठे विष्णुः समाश्रितः।
तालुमध्ये(२) स्थितो रुद्रो ललाटे तु महेश्वरः ॥ ३१ ॥
प्राणाग्रन्तु शिवं विद्यात्तस्यान्ते तु परापरं।
पञ्चधा सकलः प्रोक्तो विपरीतस्तु निष्कलः ॥ ३२ ॥
प्रासादं नादमुत्थाप्य शततन्तु जपेद्यदि।
षण्मासात्सिद्धिमाप्नोति योगयुक्तो न संशयः ॥ ३३ ॥
गमागमस्य ज्ञानेन सर्व्वपापक्षयो भवेत्।

---

१ देवपूजित इति ख०, घ०, ङ० च। २ तालुमूले इति घ०।

अणिमादिगुणैश्वर्य्यं षड्भिर्म्मासैरवाप्नुयात् ॥ ३४ ॥
स्थूलः सूक्ष्मः परश्चेति प्रासादः कथितो मया।
ह्रस्वो दीर्घः प्लुतश्चेति प्रासादं लक्षयेत्त्रिधा ॥ ३५ ॥
ह्रस्वो दहति पापानि दीर्घो मोक्षप्रदो भवेत्।
आप्यायने प्लुतश्चेति मूर्द्ध्नि विन्दुविभूषितः ॥ ३६ ॥
आदावन्ते च ह्रस्वस्य फट्कारो मारणे स्थितः।
आदावन्ते च हृदयमाकृष्टौ सम्प्रकीर्त्तितम् ॥ ३७ ॥
देवस्य दक्षिणां मूर्त्तिं पञ्चलक्षं स्थितो जपेत्।
जपान्ते घृतहोमस्तु दशसाहस्रिको भवेत् ॥ ३८ ॥
एवमाप्यायितो मन्त्रो वश्योच्चाटादि कारयेत्।
ऊर्द्ध्वं शून्यमधः शून्यं मध्ये शून्यं निरामयं ॥ ३९ ॥
त्रिशून्यं यो विजानाति मुच्यतेऽसौ ध्रुवं द्विजः।
प्रासादं यो न जानाति पञ्चमन्त्रमहातनुं ॥ ४० ॥
षट्त्रिंशत्कलायुक्तं न स आचार्य्य उच्यते।
तयोद्धारश्च गायत्रीं रुद्रादीन् वेत्त्यसौ गुरुः ॥ ४१ ॥

इत्याग्नेये महापुराणे मन्त्रमहात्म्यं नाम चतुर्दशाधि-
कद्विशततमोऽध्यायः॥

# अथ पञ्चदशाधिकद्विशततमोऽध्यायः ।



## सन्ध्याविधिः ।

अग्निरुवाच । ओङ्कारं यो विजानाति स योगी स हरिः पुमान् ।
ओङ्कारमभ्यसेत्तस्मान्मन्त्रसारन्तु सर्वदं ॥ १ ॥
सर्वमन्त्रप्रयोगेषु प्रणवः प्रथमः स्मृतः ।
तेन सम्परिपूर्णं यत्तत् पूर्णं कर्म्म नेतरत् ॥ २ ॥
ओङ्कारपूर्व्विकास्तिस्रो महाव्याहृतयोऽव्ययाः ।
त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखं ॥ ३ ॥
योऽधीतेऽहन्यहन्येतास्त्रीणि वर्षाण्यतन्द्रितः ।
स ब्रह्मपरमभ्येति वायुभूतः खमूर्त्तिमान् ॥ ४ ॥
एकाक्षरं परं ब्रह्म प्राणायामपरन्तपः ।
सावित्र्यास्तु परन्नास्ति मौनात् सत्यं विशिष्यते ॥ ५ ॥
सप्तावर्त्ता पापहरा दशभिः प्रापयेद्दिवं ।
विंशावर्त्ता तु सा देवी नयते ह्मीश्वरालयं ॥ ६ ॥
अष्टोत्तरशतं जप्ता तीर्णः संसारसागरात् ।
रुद्रकुष्माण्डजप्येभ्यो गायत्री तु विशिष्यते ॥ ७ ॥
न गायत्र्याः परञ्जप्यं न व्याहृतिसमं हुतं ।
गायत्र्याः पादमप्यर्द्धमृगर्द्धमृचमेव वा ॥ ८ ॥
ब्रह्महत्या सुरापानं सुवर्णस्तेयमेव च ।
गुरुदारागमश्चैव जप्येनैव पुनाति सा ॥ ९ ॥

पापे कृते तिलैर्होमो गायत्रीजप ईरितः ।
जप्त्वा सहस्रं गायत्र्या उपवासी स पापहा(१) ॥ १० ॥
गोघ्नः पितृघ्नो मातृघ्नो ब्रह्महा गुरुतल्पगः ।
ब्रह्मघ्नः स्वर्णहारी च सुरापो लक्षजप्यतः ॥ ११ ॥
शुध्यते वाऽथ वा स्नात्वा शतमन्तर्ज्जले जपेत् ।
अपः शतेन पीत्वा तु गायत्र्याः पापहा भवेत् ॥ १२ ॥
शतं जप्ता तु गायत्री पापोपशमनी स्मृता ।
सहस्रं जप्ता सा देवी उपपातकनाशिनी ॥ १३ ॥
अभीष्टदा कोटिजप्ता देवत्वं राजतामियात् ।
ओङ्कारं पूर्व्वमुच्चार्य्य भूर्भुवः स्वस्तथैव च ॥ १४ ॥
गायत्री प्रणवश्चान्ते जपे चैवमुदाहृतं ।
विश्वामित्र ऋषिश्छन्दो गायत्रं सविता तथा ॥ १५ ॥
देवतोपनये जप्ये विनियोगो हुते तथा ।
अग्निर्व्वायू रविर्व्विद्युत् यमो जलपतिर्गुरुः ॥ १६ ॥
पर्ज्जन्य इन्द्रो गन्धर्वः पूषा च तदनन्तरं ।
मित्रोऽथ वरुणस्त्वष्टा वसवो मरुतः शशी ॥ १७ ॥
अङ्गिरा विश्वनासत्यौ कस्तथा सर्व्वदेवताः ।
रुद्रो ब्रह्मा च विष्णुश्च क्रमशोऽक्षरदेवताः ॥ १८ ॥
गायत्र्या जपकाले तु कथिताः पापनाशनाः ।
पादाङ्गुष्ठौ च गुल्फौ च नलकौ जानुनी तथा ॥ १९ ॥
जङ्घे शिश्नश्च वृषणौ कटिर्नाभिस्तथोदरं ।

१ उपपातकपापहेति ख०, घ०, ङ० च ।

## अथ पञ्चदशाधिकद्विशततमोऽध्यायः ।



### सन्ध्याविधिः ।

अग्निरुवाच । ओङ्कारं यो विजानाति स योगी स हरिः पुमान् ।
ओङ्कारमभ्यसेत्तस्मान्मन्त्रसारन्तु सर्वदं ॥ १ ॥
सर्वमन्त्रप्रयोगेषु प्रणवः प्रथमः स्मृतः ।
तेन सम्परिपूर्णं यत्तत् पूर्णं कर्म नेतरत् ॥ २ ॥
ओङ्कारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः ।
त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखं ॥ ३ ॥
योऽधीतेऽहन्यहन्येतांस्त्रीणि वर्षाण्यतन्द्रितः ।
स ब्रह्मपरमभ्येति वायुभूतः खमूर्त्तिमान् ॥ ४ ॥
एकाक्षरं परं ब्रह्म प्राणायामपरन्तपः ।
सावित्र्यास्तु परन्नास्ति मौनात् सत्यं विशिष्यते ॥ ५ ॥
सप्तावर्त्ता पापहरा दशभिः प्रापयेद्दिवं ।
विंशावर्त्ता तु सा देवी नयते ह्रीश्वरालयं ॥ ६ ॥
अष्टोत्तरशतं जप्ता तीर्णः संसारसागरात् ।
रुद्रकुष्माण्डजप्येभ्यो गायत्री तु विशिष्यते ॥ ७ ॥
न गायत्र्याः परञ्जप्यं न व्याहृतिसमं हुतं ।
गायत्र्याः पादमप्यर्द्धमृगर्द्धमृचमेव वा ॥ ८ ॥
ब्रह्महत्या सुरापानं सुवर्णस्तेयमेव च ।
गुरुदारागमश्चैव जप्येनैव पुनाति सा ॥ ९ ॥

पापे कृते तिलैर्होमो गायत्रीजप ईरितः।
जप्त्वा सहस्रं गायत्र्या उपवासी स पापहा(१) ॥ १० ॥
गोघ्नः पितृघ्नो मातृघ्नो ब्रह्महा गुरुतल्पगः।
ब्रह्मघ्नः स्वर्णहारी च सुरापो लक्षजप्यतः ॥ ११ ॥
शुध्यते वाऽथ वा स्नात्वा शतमन्तर्जले जपेत्।
अपः शतेन पीत्वा तु गायत्र्याः पापहा भवेत् ॥ १२ ॥
शतं जप्ता तु गायत्री पापोपशमनी स्मृता।
सहस्रं जप्ता सा देवी उपपातकनाशिनी ॥ १३ ॥
अभीष्टदा कोटिजप्या देवत्वं राजतामियात्।
ओङ्कारं पूर्वमुच्चार्य्य भूर्भुवः स्वस्तथैव च ॥ १४ ॥
गायत्री प्रणवश्चान्ते जपे चैवमुदाहृतं।
विश्वामित्र ऋषिश्छन्दो गायत्रं सविता तथा ॥ १५ ॥
देवतोपनये जप्ये विनियोगो हुते तथा।
अग्निर्व्वायू रविर्व्विद्युत् यमो जलपतिर्गुरुः ॥ १६ ॥
पर्जन्य इन्द्रो गन्धर्वः पूषा च तदनन्तरं।
मित्रोऽथ वरुणस्त्वष्टा वसवो मरुतः शशी ॥ १७ ॥
अङ्गिरा विश्वनासत्यौ कस्तथा सर्वदेवताः।
रुद्रो ब्रह्मा च विष्णुश्च क्रमशोऽक्षरदेवताः ॥ १८ ॥
गायत्र्या जपकाले तु कथिताः पापनाशनाः।
पादाङ्गुष्ठौ च गुल्फौ च नलकौ जानुनी तथा ॥ १९ ॥
जङ्घे शिश्नश्च वृषणौ कटिर्नाभिस्तथोदरं।

१ उपपातकपापहेति ग०, घ०, ङ० च।

स्तनौ च हृदयं ग्रीवा मुखन्तालु च नासिके ॥ २० ॥
चक्षुषी च भ्रुवोर्मध्यं ललाटं पूर्वमाननं ।
दक्षिणोत्तरपार्श्वे द्वे शिर आस्यमनुक्रमात् ॥ २१ ॥
पीतः श्यामश्च कपिलो मरकतोऽग्निसन्निभः ।
रुक्मविद्युद्धूम्रकृष्णरक्तगौरेन्द्रनीलभाः ॥ २२ ॥
स्फाटिकस्वर्णपाण्ड्वाभाः पद्मरागोऽग्निसद्युतिः(१) ।
हेमधूम्ररक्तनीलरक्तकृष्णसुवर्णभाः ॥ २३ ॥
शुक्लकृष्णपालाशाभा(२) गायत्र्या वर्णकाः क्रमात् ।
ध्यानकाले पापहरा हुतैषा सर्वकामदा ॥ २४ ॥
गायत्र्या तु तिलैर्होमः सर्वपापप्रणाशनः ।
शान्तिकामो यवैः कुर्य्यादायुष्कामो घृतेन च ॥ २५ ॥
सिद्धार्थकैः कर्मसिद्धौ पयसा ब्रह्मवर्चसे ।
पुत्रकामस्तथा दध्ना धान्यकामस्तु शालिभिः ॥ २६ ॥
क्षीरिवृक्षसमिद्भिस्तु ग्रहपीडोपशान्तये ।
धनकामस्तथा बिल्वैः श्रीकामः कमलैस्तथा ॥ २७ ॥
आरोग्यकामो दूर्वाभिर्गुरूत्पाते स एव हि ।
सौभाग्येच्छुर्गुग्गुलुना विद्यार्थी पायसेन च ॥ २८ ॥
अयुतेनोक्तसिद्धिः स्याल्लक्षेण मनसेप्सितं ।
कोट्या ब्रह्मवधात् मुक्तः कुलोद्धारी हरिर्भवेत् ॥ २८ ॥
ग्रहयज्ञमुखो वापि होमोऽयुतमुखोऽर्थकृत् ।

---

१ पद्मरागोऽमलद्युतिरिति ख०, ङ०, २ शुक्लपद्मपलाशाभेति ङ०, ञ० च । ज०, ट० च ।

आवाहनञ्च गायत्र्यास्तत ओङ्कारमभ्यसेत् ॥ ३० ॥
स्मृत्वोङ्कारन्तु गायत्र्या निबध्नीयाच्छिखान्ततः ।
पुनराचम्य हृदयं नाभिं स्कन्धौ च संस्पृशेत् ॥ ३१ ॥
प्रणवस्य ऋषिर्ब्रह्मा गायत्रीच्छन्द एव च ।
देवोऽग्निः परमात्मा स्याद्योगो वै सर्वकर्मसु ॥ ३२ ॥
शुक्ला चाग्निमुखी दिव्या कात्यायनसगोत्रजा ।
त्रैलोक्यवरणा दिव्या पृथिव्याधारसंयुता ॥ ३३ ॥
अक्षसूत्रधरा देवी पद्मासनगता शुभा ।
ओं तेजोऽसि महोऽसि बलमसि भ्राजोऽसि देवानान्धामनामासि ।
विश्वमसि विश्वायुः सर्वमसि सर्व्वायुः ओं अभि भूः ।
आगच्छ वरदे देवि जप्ये मे सन्निधौ भव ॥ ३४ ॥
व्याहृतीनान्तु सर्वासामृषिरेव प्रजापतिः ।
व्यस्तायैव समस्ताय ब्राह्ममक्षरमोमिति ॥ ३५ ॥
विश्वामित्रो यमदग्निर्भरद्वाजोऽथ गौतमः ।
ऋषिरत्रिर्वसिष्ठश्च काश्यपश्च यथाक्रमं ॥ ३६ ॥
अग्निर्वायू रविश्चैव वाक्पतिर्वरुणस्तथा ।
इन्द्रो विष्णुर्व्याहृतीनां दैवतानि यथाक्रमं ॥ ३७ ॥
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ।
त्रिष्टुप् च जगती चेति छन्दांस्याहुरनुक्रमात् ॥ ३८ ॥
विनियोगो व्याहृतीनां प्राणायामे च होमके ।
आपोहिष्ठेत्यृचा चापान्द्रुपदादीति वा स्मृता[१] ॥ ३९ ॥

---

१ द्रुपदादीति माप्नुया इति क॰, ख॰, ज॰ च ।

तथा हिरण्यवर्णाभिः पावमानीभिरन्ततः।
विप्रुषोऽष्टौ क्षिपेदूर्द्धमाजन्मकृतपापजित् ॥ ४० ॥
अन्तर्जले ऋतञ्चेति जपेत्त्रिरघमर्षणं।
आपोहिष्ठेत्यृचोऽस्याश्च सिन्धुद्वीप ऋषिः स्मृतः ॥ ४१ ॥
ब्रह्मस्नानाय छन्दोऽस्य गायत्री देवता जलं।
मार्जने विनियोगश्च ह्यवभृथके क्रतौ ॥ ४२ ॥
अघमर्षणसूक्तस्य ऋषिरेवाघमर्षणं।
अनुष्टुप् च भवेच्छन्दो भाववृत्तस्तु दैवतं ॥ ४३ ॥
आपोज्योतीरस इति गायत्र्यास्तु शिरः स्मृतं।
ऋषिः प्रजापतिस्तस्य छन्दोहीनं यजुर्यतः ॥ ४४ ॥
ब्रह्माग्निवायुसूर्य्याश्च देवताः परिकीर्त्तिताः।
प्राणरोधात्तु वायुः स्याद्वायोरग्निश्च जायते ॥ ४५ ॥
अग्नेरापस्ततः शुद्धिस्ततश्चाचमनञ्चरेत्।
अन्तश्चरसि भूतेषु गुहायां विश्वमूर्त्तिषु ॥ ४६ ॥
तपोयज्ञवषट्कार आपो ज्योती रसोऽमृतं।
उदुत्यं जातवेदसमृषिः प्रस्कन्न उच्यते ॥ ४७ ॥
गायत्रीच्छन्द आख्यातं सूर्य्यश्चैव तु दैवतम्।
अतिरात्रे नियोगः स्यादग्नीषोमो नियोगकः ॥ ४८ ॥
चित्रं देवेति इत्यृचके ऋषिः कौत्स उदाहृतः।
त्रिष्टुप् छन्दो दैवतञ्च सूर्य्योऽस्याः परिकीर्त्तितं ॥ ४९ ॥

इत्याग्नेये महापुराणे सन्ध्याविधिर्नाम पञ्चदशाधिकद्विशततमोऽध्यायः ॥

## अथ षोड़शाधिकद्विशततमोऽध्याय ।

---

### गायत्रीनिर्वाणं ।

अग्निरुवाच । एवं सन्ध्याविधिं कृत्वा गायत्रीञ्च जपेत् स्मरेत् ।
गायन्‌च्छिष्यान् यतस्त्रायेत् भार्यां प्राणांस्तथैव च(१)॥१॥
ततः स्मृतेयं गायत्री सावित्रीयं ततो यतः ।
प्रकाशनात्सा सवितुर्वाग्रूपत्वात् सरस्वती ॥ २ ॥
तज् ज्योतिः परमं ब्रह्म भर्गस्तेजो यतः स्मृतं ।
भा दीप्ताविति रूपं हि भ्रस्ज: पाकोऽथ तत् स्मृतं ॥ ३ ॥
ओषध्यादिकं पचति भ्राज् दीप्तौ तथा भवेत् ।
भर्गः स्याद् भ्राजत इति वहुलं छन्द ईरितं ॥ ४ ॥
वरेण्यं सर्वतेजोभ्यः श्रेष्ठं वै परमं पदं ।
स्वर्गापवर्गकामैर्वा वरणीयं सदैव हि ॥ ५ ॥
वृणोतेर्व्वरणार्थत्वाज्जाग्रत्स्वप्नादिवर्जितं ।
नित्यशुद्धबुद्धमेकं सत्यन्तद्धीमहीश्वरं ॥ ६ ॥
अहं ब्रह्म परं ज्योतिर्ध्यायेमहि विमुक्तये ।
तज् ज्योतिर्भगवान् विष्णुर्जगज्जन्मादिकारणं ॥ ७ ॥
शिवं केचित् पठन्ति स्म शक्तिरूपं पठन्ति च ।
केचित् सूर्य्यं केचिदग्निं वेदगा अग्निहोत्रिणः ॥ ८ ॥

---

१ कायान् भार्यांस्तदेव चेति ख॰ ।

अग्न्यादिरूपी विष्णुर्हि वेदादौ ब्रह्म गीयते ।
तत् पदं परमं विष्णोर्देवस्य सवितुः स्मृतं ॥ ८ ॥
महदाद्यं सूयते हि स्वयं ज्योतिर्हरिः प्रभुः ।
पर्जन्यो वायुरादित्यः शीतोष्णाद्यैश्च पाचयेत् ॥ १० ॥
अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ ११ ॥
दधातेर्वा धीमहीति मनसा धारयेमहि ।
नोऽस्माकं यश्च भर्गश्च सर्वेषां प्राणिनां धियः ॥ १२ ॥
चोदयात् प्रेरयेद् बुद्धीर्भोक्तॄणां सर्वकर्मसु ।
दृष्टादृष्टविपाकेषु विष्णुसूर्याग्निरूपवान् ॥ १३ ॥
ईश्वरप्रेरितो गच्छेत् स्वर्गं वाऽश्वभ्रमेव वा ।
ईशावास्यमिदं सर्वं महदादिजगद्धरिः ॥ १४ ॥
स्वर्गाद्यैः क्रीड़ते देवो योऽहं स पुरुषः प्रभुः ।
आदित्यान्तर्गतं यच्च भर्गाख्यं वै मुमुक्षुभिः ॥ १५ ॥
जन्ममृत्युविनाशाय दुःखस्य त्रिविधस्य च ।
ध्यानेन पुरुषोऽयञ्च द्रष्टव्यः सूर्यमण्डले ॥ १६ ॥
तत्त्वं सदसि चिद्ब्रह्म विष्णोर्यत् परमं पदं ।
देवस्य सवितुर्भर्गो वरेण्यं हि तुरीयकं ॥ १७ ॥
देहादिजाग्रदाद्ब्रह्म अहं ब्रह्मेति धीमहि ।
योऽसावादित्यपुरुषः सोऽसावहमनन्त ओं ॥ १८ ॥
ज्ञानानि शुभकर्मादीन् प्रवर्त्तयति यः सदा ।

इत्याग्नेये महापुराणे गायत्रीनिर्वाणं नाम षोड़शाधिकद्विशततमोऽध्यायः ॥

## अथ सप्तदशाधिकद्विशततमोऽध्यायः ।



### गायत्रीनिर्वाणं ।

ऋषिरुवाच । लिङ्गमूर्त्तिं शिवं स्तुत्वा गायत्र्या योगमाप्तवान् ।
निर्वाण(१) परमं ब्रह्म वसिष्ठोऽन्यश्च शङ्करात्(२) ॥ १ ॥
नमः कनकलिङ्गाय(३) वेदलिङ्गाय वै नमः ।
नमः परमलिङ्गाय(४) व्योमलिङ्गाय वै नमः ॥ २ ॥
नमः सहस्रलिङ्गाय वह्निलिङ्गाय वै नमः ।
नमः पुराणलिङ्गाय श्रुतिलिङ्गाय वै नमः ॥ ३ ॥
नमः पाताललिङ्गाय ब्रह्मलिङ्गाय वै नमः ।
नमो रहस्यलिङ्गाय सप्तद्वीपोर्द्ध्वलिङ्गिने ॥ ४ ॥
नमः सर्वात्मलिङ्गाय सर्वलोकाङ्गलिङ्गिने ।
नमस्त्वव्यक्तलिङ्गाय बुद्धिलिङ्गाय वै नमः ॥ ५ ॥
नमोऽहङ्कारलिङ्गाय भूतलिङ्गाय वै नमः ।
नम इन्द्रियलिङ्गाय नमस्तन्मात्रलिङ्गिने ॥ ६ ॥
नमः पुरुषलिङ्गाय भावलिङ्गाय वै नमः ।

---

१ निर्म्मलमिति घ० ।
२ वसिष्ठोऽथ च शङ्करादिति घ०, घ० च ।
३ कमललिङ्गायेति ङ० ।
४ नमः पवनलिङ्गायेति घ०, ख०, ग०, छ०, ङ० च ।

नमो रजोर्द्धलिङ्गाय सत्त्वलिङ्गाय(१) वै नमः(२) ॥ ७ ॥
नमस्ते भवलिङ्गाय नमस्त्रैगुण्यलिङ्गिने ।
नमोऽनागतलिङ्गाय तेजोलिङ्गाय वै नमः ॥ ८ ॥
नमो वायूर्द्धलिङ्गाय(३) श्रुतिलिङ्गाय वै नमः ।
नमस्तेऽथर्वलिङ्गाय सामलिङ्गाय(४) वै नमः ॥ ९ ॥
नमो यज्ञाङ्गलिङ्गाय यज्ञलिङ्गाय वै नमः ।
नमस्ते तत्त्वलिङ्गाय देवानुगतलिङ्गिने(५) ॥ १० ॥
दिश नः परमं योगमपत्यं मत्समन्तथा ।
ब्रह्म चैवाक्षयं देव शमञ्चैव परं विभो(६) ॥ ११ ॥
अक्षयत्वञ्च वंशस्य धर्मे च मतिमक्षयां ।
अग्निरुवाच । वसिष्ठेन स्तुतः शम्भुस्तुष्टः श्रीपर्वते पुरा ॥ १२ ॥
वसिष्ठाय वरं दत्त्वा तत्रैवान्तरधीयत ।

इत्याग्नेये महापुराणे गायत्रीनिर्वाणं नाम सप्तदशाधिकद्विशततमोऽध्यायः ॥

---

१ तत्त्वलिङ्गायेति ख॰, ङ॰ च ।
२ नमः इन्द्रियलिङ्गायेत्यादिः, यज्ञलिङ्गाय वै नमः इत्यन्तः पाठः ज॰ पुस्तके नास्ति ।
३ नमो वायूर्द्धलिङ्गायेति घ॰ ।
४ नमस्ते सर्व्वलिङ्गाय नामलिङ्गायेति ख॰, ङ॰ च ।
५ नमोऽनागतलिङ्गायेत्यादिः, देवानुगतलिङ्गिने इत्यन्तः पाठः ज॰ पुस्तके नास्ति ।
६ परमात्मा पर विभो इति ज॰ ।

# अथाष्टादशाधिकद्विशततमोऽध्यायः ।

—:०:—

## राजाभिषेककथनं ।

अग्निरुवाच । पुष्करेण च रामाय राजधर्मं हि पृच्छते ।
यथादौ कथितं तद्वद्वसिष्ठ कथयामि ते ॥ १ ॥
पुष्कर उवाच । राजधर्मं प्रवक्ष्यामि सर्वस्मात् राजधर्मतः ।
राजा भवेत्(१) शत्रुहन्ता प्रजापालः सुदण्डवान् ॥ २ ॥
पालयिष्यति वः सर्वान् धर्मस्थान् व्रतमाचरेत् ।
संवत्सरं स वृणुयात् पुरोहितमथ द्विजं(२) ॥ ३ ॥
मन्त्रिणश्चाखिलात्मानो महिषीं धर्मलक्षणां ।
संवत्सरं नृपः काले ससम्भारोऽभिषेचनं ॥ ४ ॥
कुर्य्यान्मृते नृपे नात्र कालस्य नियमः स्मृतः ।
तिलैः सिद्धार्थकैः स्नानं सांवत्सरपुरोहितौ ॥ ५ ॥
घोषयित्वा जयं राज्ञो राजा भद्रासने स्थितः ।
अभयं घोषयेद् दुर्गान्मोचयेद्राज्यपालके ॥ ६ ॥
पुरोधसाऽभिषेकात् प्राक् कार्य्यैन्द्री शान्तिरेव च ।
उपवास्यभिषेकाहे वेद्यग्नौ जुहुयान्मनून्(३) ॥ ७ ॥

---

१ राजा चरेदिति ख०, ग०, घ०, ङ०, ज०, ट० च ।

२ पुरोहितमथर्व्वणमिति घ०, ङ०, ख०, ज०, ट० च ।

३ जुहुयादमूनिति ङ० ।

ब्राह्मानैन्द्रमन्त्रांस्तु सावित्रान् वैश्वदैवतान् ।
सौम्यान् स्वस्त्ययनं शर्म्मायुष्याभयदान्मनून् ॥ ८ ॥
अपराजिताञ्च कलसं वह्नेर्दक्षिणपार्श्वगं ।
सम्पातवन्तं हैमञ्च पूजयेद्गन्धपुष्पकैः ॥ ९ ॥
प्रदक्षिणावर्त्तशिखस्तप्तजाम्बूनदप्रभः ।
रथौघमेघनिर्घोषो विधूमश्च हुताशनः ॥ १० ॥
अनुलोमः सुगन्धश्च स्वस्तिकाकारसन्निभः ।
प्रसन्नार्च्चिर्महाज्वालः स्फुलिङ्गरहितो हितः ॥ ११ ॥
न व्रजेयुश्च मध्येन मार्जारमृगपक्षिणः ।
पर्व्वताग्रमृदा तावन्मूर्द्धानं शोधयेन्नृपः ॥ १२ ॥
वल्मीकाग्रमृदा कर्णौ वदनं केशवालयात् ।
इन्द्रालयमृदा(१) ग्रीवां हृदयन्तु नृपाजिरात् ॥ १३ ॥
करिदन्तोद्धृतमृदा दक्षिणन्तु तथा भुजं ।
वृषशृङ्गोद्धृतमृदा वामञ्चैव तथा भुजं ॥ १४ ॥
सरोमृदा तथा पृष्ठमुदरं सङ्गमान्मृदा ।
नदीतटद्वयमृदा पार्श्वे संशोधयेत्तथा(२) ॥ १५ ॥
वेश्याद्वारमृदा राज्ञः कटिशौचं विधीयते ।
यज्ञस्थानात्तथैवोरू गोस्थानाज्जानुनी तथा ॥ १६ ॥
अश्वस्थानात्तथा जङ्घे रथचक्रमृदाङ्घ्रिके ।
मूर्द्धानं पञ्चगव्येन भद्रासनगतं नृपं ॥ १७ ॥
अभिषिञ्चेदमात्यानां चतुष्टयमथो घटैः ।

---

१ चन्द्रालयमृदेति ख॰ ।

२ नदीमृदेत्यादिः संशोधयेत्तथेत्यन्तः पाठः ज॰ पुस्तके नास्ति ।

पूर्वतो हेमकुम्भेन घृतपूर्णेन ब्राह्मणः ॥ १८ ॥
रूप्यकुम्भेन याम्ये च क्षीरपूर्णेन क्षत्रियः ।
दध्ना च ताम्रकुम्भेन वैश्यः पश्चिमगेन च ॥ १९ ॥
मृण्मयेन जलेनोदक् शूद्रामात्योऽभिषेचयेत् ।
ततोऽभिषेकं नृपतेर्बह्वृचप्रवरो द्विजः ॥ २० ॥
कुर्वीत मधुना विप्रश्छन्दोगश्च कुशोदकैः ।
सम्पातवन्तं कलशं तथा गत्वा पुरोहितः ॥ २१ ॥
विधाय वह्निरक्षान्तु सदस्येषु यथाविधि ।
राजश्रियाभिषेके च ये मन्त्राः परिकीर्त्तिताः ॥ २२ ॥
तैस्तु दद्यान्महाभाग ब्राह्मणानां स्वनैस्तथा ।
ततः पुरोहितो गच्छेद्वेदिमूलन्तदैव तु(१) ॥ २३ ॥
शतच्छिद्रेण पात्रेण सौवर्णेनाभिषेचयेत् ।
या ओषधीत्योषधीभीरथेत्युक्ते ति गन्धकैः ॥ २४ ॥
पुष्पैः पुष्पवतीत्येव ब्राह्मणेति च बीजकैः(२) ।
रत्नैराशुः शिशानश्च ये देवाश्च कुशोदकैः ॥ २५ ॥
यजुर्वेद्यथर्ववेदो(३) गन्धद्वारेति संस्पृशेत् ।
शिरः कण्ठं रोचनया सर्वतीर्थोदकैर्द्विजाः ॥ २६ ॥
गीतवाद्यादिनिर्घोषैश्चामरव्यजनादिभिः ।
सर्वौषधिमयं कुम्भं धारयेयुर्नृपाग्रतः ॥ २७ ॥
तं पश्येद्दर्पणं राजा घृतं वै मङ्गलादिकं ।
अभ्यर्च्य विष्णुं ब्रह्माणमिन्द्रादींश्च ग्रहेश्वरान्(४) ॥ २८ ॥

---

१ वेदिमूलमदेशम् इति ख० ।　　३ यजुर्वेदच अथर्ववेदो इति ग० ।
२ दीपकैरिति ग० ।　　४ दशादिकानिति ख०, ग०, घ० च ।

व्याघ्रचर्म्मोत्तरां शय्यामुपविष्टः पुरोहितः ।
मधुपर्कादिकं दत्त्वा पट्टबन्धं प्रकारयेत् ॥ २८ ॥
राज्ञो मुकुटबन्धञ्च पञ्चचर्म्मोत्तरं ददेत् ।
ध्रुवाद्यैरिति च विशेद्‌ वृषजं वृषदंशजं ॥ ३० ॥
द्वीपिजं सिंहजं व्याघ्रजातचर्म्म तदासने ।
अमात्यसचिवादींश्च प्रतीहारः प्रदर्शयेत् ॥ ३१ ॥
गोजाविगृहदानाद्यैः सांवत्सरपुरोहितौ ।
पूजयित्वा द्विजान् प्राच्य ह्यन्यभूगोन्नमुख्यकैः ॥ ३२ ॥
वह्निं प्रदक्षिणीकृत्य गुरुं नत्वाथ पृष्ठतः ॥
वृषमालभ्य गां वत्सां पूजयित्वाथ मन्त्रितं ॥ ३३ ॥
अश्वमारुह्य नागञ्च पूजयेत्तं समारुहेत् ।
परिभ्रमेद्राजमार्गे बलयुक्तः प्रदक्षिणं ॥ ३४ ॥
पुरं विशेच्च दानाद्यैः प्रार्च्य सर्वान् विसर्ज्जयेत् ।

इत्याग्नेये महापुराणे राजाभिषेको नाम अष्टादशाधिकद्विशततमोऽध्यायः ॥

# अथोनविंशाधिकद्विशततमोऽध्यायः ।



## अभिषेकमन्त्राः ।

पुष्करउवाच । राजदेवाद्यभि
कुम्भान् कुर्य्योदकैः

सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः।
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ॥ २ ॥
भवन्तु विजयायैते इन्द्राद्या दशदिग्गताः[1]।
रुद्रो धर्मो मनुर्दक्षो रुचिः श्रद्धा च सर्वदा ॥ ३ ॥
भृगुरत्रिर्वसिष्ठश्च सनकश्च सनन्दनः।
सनत्कुमारोऽङ्गिराश्च पुलस्त्यः पुलहः क्रतुः ॥ ४ ॥
मरीचिः कश्यपः पान्तु प्रजेशाः पृथिवीपतिः।
प्रभासुरा बर्हिषद अग्निष्वात्ताश्च पान्तु ते[१]॥ ५ ॥
क्रव्यादाश्चोपहूताश्च आज्यपाश्च सुकालिनः।
अग्निभिश्चाभिषिञ्चन्तु लक्ष्म्याद्या धर्मवल्लभाः ॥ ६ ॥
आदित्याद्याः कश्यपस्य बहुपुत्रस्य(१) वल्लभाः।
कृशाश्वस्याग्निपुत्रस्य भार्य्या याऽरिष्टनेमिनः ॥ ७ ॥
अश्विन्याद्याश्च चन्द्रस्य पुलहस्य(२) तथा प्रियाः।
भूता च कपिशा दंष्ट्री सुरसा सरमा दनुः ॥ ८ ॥
श्येनी भासी तथा क्रौञ्ची धृतराष्ट्री शुकी तथा।
पत्न्यस्त्वामभिषिञ्चन्तु अरुणश्चार्कसारथिः ॥ ९ ॥
आयतिर्नियतीरात्रिर्निद्रा लोकस्थितौ स्थिताः।
उमा मेना शची पान्तु धूमोर्णानिर्ऋतिर्जये ॥ १० ॥
गौरी शिवा च ऋद्धिश्च वेला या चैव नड्वला।
असिक्नी च(३) तथा ज्योत्स्ना देवपत्न्यो वनस्पतिः ॥ ११ ॥
महाकल्पश्च कल्पश्च मन्वन्तरयुगानि च।

१ देवपुत्रस्येति ज०।    २ पुलस्त्यस्येति ग०, घ०, ज० च।
३ असिता चेति ङ०।

संवत्सराणि वर्षाणि पान्तु त्वामयनद्वयं ॥ १२ ॥
ऋतवश्च तथा मासाः पक्षा रात्र्यहनी तथा।
सन्ध्यातिथिमुहूर्त्ताश्च कालस्यावयवाकृतिः ॥ १३ ॥
सूर्याद्याश्च ग्रहाः पान्तु मनुः स्वायम्भुवादिकः।
स्वायम्भुवः स्वारोचिष औत्तमिस्तामसो मनुः ॥ १४ ॥
रैवतश्चाक्षुषः षष्ठो वैवस्वत इहेरितः।
सावर्णो ब्रह्मपुत्रश्च धर्मपुत्रश्च रुद्रजः ॥ १५ ॥
दक्षजो रौच्यभौत्यौ च मनवस्तु चतुर्द्दश।
विश्वभुक् च विपश्चिच्च सुचित्तिश्च शिखी विभुः ॥ १६ ॥
मनोजवस्तथौजस्वी बलिरद्भुतशान्तयः।
वृषश्च ऋतधामा च दिवस्पृक् कविरिन्द्रकः ॥ १७ ॥
रेवन्तश्च कुमारश्च तथा वत्सविनायकः।
वीरभद्रश्च नन्दी च विश्वकर्मा पुरोजवः ॥ १८ ॥
एते त्वामभिषिञ्चन्तु सुरमुख्याः समागताः।
नासत्यौ देवभिषजौ ध्रुवाद्या वसवोऽष्ट च ॥ १९ ॥
दश चाङ्गिरसो वेदास्त्वाभिषिञ्चन्तु सिद्धये।
आत्मा ह्यायुर्मनो दक्षो मदः प्राणस्तथैव च ॥ २० ॥
हविष्मांश्च गरिष्ठश्च ऋतः सत्यश्च पान्तु वः।

भरतश्च तथा मृत्युः कापालिरथ किङ्किणिः ॥ २३ ॥
भवनो भावनः पान्तु स्वजन्यः स्वजनस्तथा(१)।
क्रतुश्चवाश्च मूर्द्धा च याजनोऽभ्युशनास्तथा ॥ २४ ॥
प्रसवश्चाव्ययश्चैव दक्षश्च भृगवः सुराः।
मनोऽनुमन्ता प्राणश्च नवोपानश्च वीर्य्यवान् ॥ २५ ॥
वीतिहोत्रो नयः साध्यो हंसी नारायणोऽवतु।
विभुश्चैव प्रभुश्चैव देवश्रेष्ठा जगद्धिताः ॥ २६ ॥
धाता मित्रोऽर्य्यमा पूषा शक्रोऽथ वरुणो भगः।
त्वष्टा विवस्वान् सविता विष्णुर्द्वादश भास्कराः ॥ २७ ॥
एकज्योतिश्च द्विज्योतिस्त्रियतुर्ज्योतिरेव च।
एकशक्रो द्विशक्रश्च त्रिशक्रश्च महाबलः ॥ २८ ॥
इन्द्रश्च मेत्यादिश्चतु ततः प्रतिमकृत्तथा।
मितश्च सम्मितश्चैव अमितश्च महाबलः ॥ २९ ॥
ऋतजित् सत्यजिच्चैव सुषेणः सेनजित्तथा।
अतिमित्रोऽनुमित्रश्च पुरुमित्रोऽपराजितः ॥ ३० ॥
ऋतश्च ऋतवाग् धाता विधाता(२) धारणो ध्रुवः।
विधारणो महातेजा वासवस्य परः सखा ॥ ३१ ॥
ईदृक्षश्चाप्यदृक्षश्च(३) एतादृगमिताशनः।
क्रीडितश्च सदृक्षश्च सरभश्च महातपाः ॥ ३२ ॥

---

१ दुन्नमश्चयेति कं॰, ख॰ च।
२ विधाकेति क॰।
३ ईदृक्षचाप्यदृक्षश्चेति ङ॰।

संवत्सराणि वर्षाणि पान्तु त्वामयनद्वयं ॥ १२ ॥
ऋतवश्च तथा मासाः पक्षा रात्र्यहनी तथा ।
सन्ध्यातिथिमुहूर्त्ताश्च कालस्यावयवाकृतिः ॥ १३ ॥
सूर्याद्याश्च ग्रहाः पान्तु मनुः स्वायम्भुवादिकः ।
स्वायम्भुवः स्वारोचिष औत्तमिस्तामसो मनुः ॥ १४ ॥
रैवतश्चाक्षुषः षष्ठो वैवस्वत इहेरितः ।
सावर्णो ब्रह्मपुत्रश्च धर्मपुत्रश्च रुद्रजः ॥ १५ ॥
दक्षजो रौच्यभौत्यौ च मनवस्तु चतुर्द्दश ।
विश्वभुक् च विपश्चिच्च सुचित्तिश्च शिखी विभुः ॥ १६ ॥
मनोजवस्तथौजस्वी बलिरद्भुतशान्तयः ।
वृषश्च ऋतधामा च दिवस्पृक् कविरिन्द्रकः ॥ १७ ॥
रेवन्तश्च कुमारश्च तथा वत्सविनायकः ।
वीरभद्रश्च नन्दी च विश्वकर्मा पुरोजवः ॥ १८ ॥
एते त्वामभिषिञ्चन्तु सुरमुख्याः समागताः ।
नासत्यौ देवभिषजौ ध्रुवाद्या वसवोऽष्ट च ॥ १९ ॥
दश चाङ्गिरसो वेदास्त्वाभिषिञ्चन्तु सिद्धये ।
आत्मा ह्यायुर्मनो दक्षो मदः प्राणस्तथैव च ॥ २० ॥
हविष्मांश्च गरिष्ठश्च ऋतः सत्यश्च पान्तु वः ।
क्रतुर्दक्षो वसुः सत्यः कालकामो धुरिर्जये ॥ २१ ॥
पुरूरवा माद्रवाश्च विश्वेदेवाश्च रोचनः ।
अङ्गारकाद्याः सूर्यस्त्वान्निरृतिश्च तथा यमः ॥ २२ ॥
अजैकपादहिर्बुध्न्यो धूमकेतुश्च रुद्रजाः(१) ।

---

१ रुद्रका इति ग०, घ०, ङ०, ज० च ।

भरतश्च तथा मृत्युः कापालिरथ किङ्किणिः ॥ २३ ॥
भवनो भावनः पान्तु स्वजन्यः सजनस्तथा(१) ।
क्रतुश्चवाश्च मूर्द्धा च याजनोऽभ्युशनास्तथा ॥ २४ ॥
प्रसवश्चाव्ययश्चैव दक्षश्च भृगवः सुराः ।
मनोऽनुमन्ता प्राणश्च नवोपानश्च वीर्य्यवान् ॥ २५ ॥
वीतिहोत्रो नयः साध्यो हंसो नारायणोऽवतु ।
विभुश्चैव प्रभुश्चैव देवश्रेष्ठा जगद्धिताः ॥ २६ ॥
धाता मित्रोऽर्यमा पूषा शक्रोऽथ वरुणो भगः ।
त्वष्टा विवस्वान् सविता विष्णुर्द्वादश भास्कराः ॥ २७ ॥
एकज्योतिश्च द्विज्योतिस्त्रियतुर्ज्योतिरेव च ।
एकशक्रो द्विशक्रश्च त्रिशक्रश्च महाबलः ॥ २८ ॥
इन्द्रश्च मेत्यादिशतु ततः प्रतिमकस्तथा ।
मितश्च सम्मितश्चैव अमितश्च महाबलः ॥ २९ ॥
ऋतजित् सत्यजिच्चैव सुषेणः सेनजित्तथा ।
अतिमित्रोऽनुमित्रश्च पुरुमित्रोऽपराजितः ॥ ३० ॥
ऋतश्च ऋतवाग् धाता विधाता(२) धारणो ध्रुवः ।
विधारणो महातेजा वासवस्य परः सखा ॥ ३१ ॥
ईदृक्षश्चाप्यदृक्षश्च(३) एतादृगमिताशनः ।
क्रीडितश्च सदृक्षश्च सरभश्च महातपाः ॥ ३२ ॥

---

१ सुजन्यश्चेति घ०, ञ० च ।     ३ ईदृक्षयान्यदृक्षश्चे ति ङ० ।
२ विधार्त्ते ति ङ० ।

धर्त्ता धुर्य्यो धुरिर्भीम अभिमुक्तः क्षपासहः(१)।
धृतिर्व्वसुरनाधृष्यो(२) रामः कामो जयो विराट् ॥ २३ ॥
देवा एकोनपञ्चाशन्मरुतस्त्वामवन्तु ते।
चित्राङ्गदश्चित्ररथः चित्रसेनश्च वै कलिः ॥ २४ ॥
उर्णायुरुग्रसेनश्च धृतराष्ट्रश्च नन्दकः।
हाहा हूहूर्नारदश्च विश्वावसुश्च तुम्बुरुः ॥ २५ ॥
एते त्वामभिषिञ्चन्तु गन्धर्वा विजयाय ते।
पान्तु ते कुरुपा मुख्या दिव्याश्चाप्सरसाङ्गणाः ॥ २६ ॥
अनवद्या सुकेशी च मेनकाः सह जन्यया(३)।
क्रतुस्थला घृताची च विश्वाची पुञ्जिकस्थला ॥ २७ ॥
प्रम्लोचा चोर्व्वशी रम्भा पञ्चचूड़ा तिलोत्तमा।
चित्रलेखा लक्ष्मणा च पुण्डरीका च वारुणी ॥ २८ ॥
प्रह्लादो विरोचनोऽथ बलिर्व्वाणोऽथ तत्सुताः।
एते चान्येऽभिषिञ्चन्तु दानवा राक्षसास्तथा ॥ २९ ॥
हेतिश्चैव प्रहेतिश्च विद्युत्स्फूर्जथुरग्रकाः।
यक्षः सिद्धार्थकः पातु माणिभद्रश्च नन्दनः ॥ ४० ॥
पिङ्गाक्षो द्युतिमांश्चैव पुष्पदन्तो जयावहः।
शङ्खः पद्मश्च मकरः कच्छपश्च निधिर्जये ॥ ४१ ॥
पिशाचा ऊर्द्ध्वकेशाद्या भूता भूम्यादिवासिनः।
महाकालं पुरस्कृत्य नरसिंहश्च मातरः ॥ ४२ ॥

१ अभिमुक्त क्षमापहेति ख०। ३ सह कन्ययेति ग०।
२ धनाधृष्ट इति ख०, घ०, ज० च।

गुहः स्कन्दो विशाखस्त्वां नैगमेयोऽभिषिञ्चतु।
डाकिन्यो याश्च योगिन्यः खेचरा भूचराश्च याः॥ ४३॥
गरुड़श्चारुणः पान्तु सम्पातिप्रमुखाः खगाः।
अनन्ताद्या महानागाः शेषवासुकितक्षकाः॥ ४४॥
ऐरावतो महापद्मः कम्बलाश्वतरावुभौ।
शङ्खः कर्कोटकश्चैव धृतराष्ट्रो धनञ्जयः॥ ४५॥
कुमुदैरावणौ पद्मः पुष्पदन्तोऽथ वामनः।
सुप्रतीकोऽञ्जनो नागाः पान्तु त्वां सर्व्वतः सदा॥ ४६॥
पैतामहस्तथा हंसो वृषभः शङ्करस्य च।
दुर्गासिंहश्च पान्तु त्वां यमस्य महिषस्तथा॥ ४७॥
उच्चैःश्रवाश्चाश्वपतिस्तथा धन्वन्तरिः सदा।
कौस्तुभः शङ्खराजश्च वज्रं शूलञ्च चक्रकं॥ ४८॥
नन्दकोऽस्त्राणि रक्षन्तु धर्म्मश्च व्यवसायकः।
चित्रगुप्तश्च दण्डश्च पिङ्गलो मृत्युकालकौ॥ ४९॥
वालखिल्यादिमुनयो व्यासवाल्मीकिमुख्यकाः।
पृथुर्दिलीपो भरतो दुष्मन्तः शक्रजिद्बली(१)॥ ५०॥
मलः ककुत्स्थश्चानेन युवनाश्वो जयद्रथः।
मान्धाता मुचुकुन्दश्च पान्तु त्वाञ्च पुरूरवाः॥ ५१॥
वास्तुदेवाः पञ्चविंशत्तत्त्वानि विजयाय ते।
रुक्मभौमः शिलाभौमः पातालो नीलमूर्त्तिकः(२)॥ ५२॥

---

१ शक्रजिद्दली इति क०, ख० च।
२ नीलमृत्तिक इति ख०, ग०, घ०, ङ०, ज०, ट० च। नीलमृद्भूत इति छ०।

पीतरक्तः चितिश्चैव श्वेतभौमो रसातलं ।
भूर्लोकोऽथ भुवर्मुख्या जम्बूद्वीपादयः श्रिये ॥ ५३ ॥
उत्तराः कुरवः पान्तु रम्या हिरण्मकस्तथा(१) ।
भद्राश्वः केतुमालश्च वर्षश्चैव वलाहकः ॥ ५४ ॥
हरिवर्षः किम्पुरुष इन्द्रद्वीपः कशेरुमान् ।
ताम्रवर्णो गभस्तिमान् नागद्वीपश्च सौम्यकः ॥ ५५ ॥
गन्धर्वो वरुणो यश्च नवमः पान्तु राज्यदाः ।
हिमवान् हेमकूटश्च निषधो नील एव च ॥ ५६ ॥
श्वेतश्च शृङ्गवान् मेरुर्माल्यवान् गन्धमादनः ।
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवान् गिरिः ॥ ५७ ॥
विन्ध्यश्च पारिपात्रश्च गिरयः शान्तिदास्तु ते ।
ऋग्वेदाद्याः षडङ्गानि इतिहासपुराणकं ॥ ५८ ॥
आयुर्वेदश्च गन्धर्व्वधनुर्वेदोपवेदकाः ।
शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषाङ्गतिः ॥ ५९ ॥
छन्दोगानि च वेदाश्च मीमांसा न्यायविस्तरः ।
धर्म्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश ॥ ६० ॥
साङ्ख्यं योगः पाशुपतं वेदा वै पञ्चरात्रकं ।
कृतान्तपञ्चकं ह्येतद् गायत्री च शिवा तथा ॥ ६१ ॥
दुर्गा विद्या च गान्धारी पान्तु त्वां शान्तिदाश्च ते ।
लवणेक्षुसुरासर्पिर्दधिदुग्धजलाश्रयः ॥ ६२ ॥
चत्वारः सागराः पान्तु तीर्थानि विविधानि च ।

१ हैरण्वकाश्चेति ख, ग, ङ च । हिरण्मयश्चेति घ ।

पुष्करश्च प्रयागश्च प्रभासो नैमिषः परः ॥ ६३ ॥
गयाशीर्षो ब्रह्मशिरस्तीर्थमुत्तरमानसं ।
कालोदको नन्दिकुण्डस्तीर्थं पञ्चनदस्तथा ॥ ६४ ॥
भृगुतीर्थं प्रभासश्च तथा चामरकण्टकं ।
जम्बुमार्गश्च विमलः कपिलस्य तथाश्रमः ॥ ६५ ॥
गङ्गाद्वारकुशावर्त्तौ विन्ध्यको नीलपर्वतः ।
वराहपर्वतश्चैव तीर्थं कणखलं तथा ॥ ६६ ॥
कालञ्जरश्च केदारो रुद्रकोटिस्तथैव च ।
वाराणसी महातीर्थं वदर्य्याश्रम एव च ॥ ६७ ॥
द्वारका श्रीगिरिस्तीर्थं तीर्थञ्च पुरुषोत्तमः ।
शालग्रामोथ वाराहः सिन्धुसागरसङ्गमः ॥ ६८ ॥
फल्गुतीर्थं विन्दुसरः करवीराश्रमस्तथा ।
नद्यो गङ्गासरस्वत्यः शतद्रुर्गण्डकी तथा ॥ ६९ ॥
अच्छोदा च विपाशा च वितस्ता देविका नदी ।
कावेरी वरुणा चैव निश्चिरा गोमती नदी ॥ ७० ॥
पारा चर्मण्वती रूपा मन्दाकिनी महानदी ।
तापी पयोष्णी वेणा च गौरी वैतरणी तथा ॥ ७१ ॥
गोदावरी भीमरथी तुङ्गभद्रा प्रणी तथा ।
चन्द्रभागा शिवा गौरी अभिषिञ्चन्तु पान्तु वः(१) ॥ ७२ ॥

इत्याग्नेये महापुराणे अभिषेकमन्त्रा नामोनविंशत्यधिकद्विशततमोऽध्यायः ॥

१ अभिषिञ्चन्तु पान्तु चेति ख०, ग०, घ०, ङ०, च०, ज०, झ० ट० च ।

# अथ विंशत्यधिकद्विशततमोऽध्यायः।



सहायसम्पत्तिः।

पुष्कर उवाच। सोऽभिषिक्तः सहामात्यो जयेच्छत्रून्नृपोत्तमः।
राज्ञा सेनापतिः कार्य्यो ब्राह्मणः क्षत्रियोऽथ वा॥ १॥
कुलीनो नीतिशास्त्रज्ञः प्रतीहारश्च नीतिवित्।
दूतश्च प्रियवादी स्यादक्षीणोऽतिबलान्वितः॥ २॥
ताम्बूलधारी ना स्त्री वा भक्तः क्लेशसहप्रियः।
सान्धिविग्रहिकः कार्य्यः षाड्गुण्यादिविशारदः॥ ३॥
खड्गधारी रक्षकः स्यात्सारथिः स्याद्बलादिवित्।
सूदाध्यक्षो हितो विज्ञो महानसगतो हि सः॥ ४॥
सभासदस्तु धर्म्मज्ञा लेखकोऽक्षरविद्धितः।
आह्वानकालविज्ञाः स्युर्हिता दौवारिका जनाः॥ ५॥
रत्नादिज्ञो धनाध्यक्षः अनुद्वारे हितो नरः।
स्यादायुर्वेदविद्वैद्यो गजाध्यक्षोऽथ हस्तिवित्॥ ६॥
जितश्रमो गजारोही हयाध्यक्षो हयादिवित्।
दुर्गाध्यक्षो हितो धीमान् स्थपतिर्वास्तुवेदवित्॥ ७॥
यन्त्रमुक्ते पाणिमुक्ते चमुक्ते मुक्तधारिते।
अस्त्राचार्य्यो नियुद्धे च कुशलो नृपतेर्हितः॥ ८॥
वृद्धश्चान्तःपुराध्यक्षः पञ्चाशद्वार्षिकाः स्त्रियः।

समत्यब्दास्तु पुरुषायरेयुः सर्वकर्मसु ॥ ९ ॥
जायत्याद्दायुधागारे ज्ञात्वा वृत्तिर्विधीयते।
उत्तमाधममध्यानि बुद्ध्वा कर्माणि पार्थिवः ॥ १० ॥
उत्तमाधममध्यानि पुरुषाणि नियोजयेत्।
जयेच्छुः पृथिवीं राजा सहायानानयेद्धितान् ॥ ११ ॥
धर्मिष्ठान् धर्मकार्येषु शूरान् सङ्ग्रामकर्मसु।
निपुणानर्थकृत्येषु(१) सर्वत्र च तथा शुचीन् ॥ १२ ॥
स्त्रीषु षण्डान्नियुञ्जीत तीक्ष्णान् दारुणकर्मसु।
यो यत्र विदितो राज्ञा शुचित्वेन तु तत्परं ॥ १३ ॥
धर्मे चार्थे च कामे च नियुञ्जीताधमेऽधमान्।
राजा यथार्हं कुर्य्याच्च उपधाभिः परीक्षितान् ॥ १४ ॥
समन्त्री च यथान्यायात् कुर्य्याद्धस्तिवनेचरान्।
तत्पदान्वेषणे यत्तानध्यक्षांस्तत्र कारयेत् ॥ १५ ॥
यस्मिन् कर्मणि कौशल्यं यस्य तस्मिन् नियोजयेत्।
पितृपैतामहान् भृत्यान् सर्वकर्मसु योजयेत् ॥ १६ ॥
विना दायादकृत्येषु तत्र ते हि समागताः।
परराजगृहात् प्राप्तान् जनान् संश्रयकाम्यया(२) ॥ १७ ॥
दुष्टानप्यथ वाऽदुष्टान् संश्रयेत प्रयत्नतः।
दुष्टं ज्ञात्वा विश्वसेन्न तद्वृत्तिं वर्त्तयेद्वशे ॥ १८ ॥
देशान्तरागतान् पार्श्वे चारैर्ज्ञात्वा हि पूजयेत्।
शत्रवोऽग्निर्विषं सर्पो निस्त्रिंशमपि चैकतः ॥ १९ ॥

---

१ रिपुमनर्थकृत्येष्विति ख०। २ जनामाश्रयकाम्ययेति ख०।

भृत्या वणिक्ष्व विज्ञेयाः कुभृत्याश्च तथैकतः।
चारचक्षुर्भवेद्राजा नियुञ्जीत सदाचरान्॥ २०॥
जनस्याविदितान् सौम्यांस्तथाज्ञातान् परस्परं।
वणिजो मन्त्रकुशलान् सांवत्सरचिकित्सकान्॥ २१॥
तथा प्रव्रजिताकारान् बलाबलविवेकिनः।
नैकस्य राजा श्रद्दध्याच्छ्रद्दध्याद् बहुवाक्यतः॥ २२॥
रागापरागौ भृत्यानां जनस्य च गुणागुणान्।
शुभानामशुभानाञ्च ज्ञानङ्कुर्य्याद्वशाय च॥ २३॥
अनुरागकरं कर्म चरेज्जह्याद्विरागजं।
जनानुरागया लक्ष्म्या राजा स्याज्जनरञ्जनात्॥ २४॥

इत्याग्नेये महापुराणे सहायसम्पत्तिर्नाम विंशत्यधिकद्विशततमोऽध्यायः॥

---

## अथ एकविंशाधिकद्विशततमोऽध्यायः।

——:०:——

पुष्कर उवाच। भृत्यः कुर्य्यात्तु राजाज्ञां शिष्यवत्सच्छ्रियः पतेः।
न क्षिपेद्वचनं राज्ञो अनुकूलं प्रियं वदेत्॥ १॥
रहोगतस्य वक्तव्यमप्रियं यद्धितं भवेत्।
न नियुक्तो हरेद्वित्तं नोपेक्षेतास्य मानकं॥ २॥
राज्ञश्च न तथाकार्य्यं वेशभाषाविचेष्टितं।
अन्तःपुरचराध्यक्षो वैरभूतैर्निराकृतैः॥ ३॥

संसर्गं न व्रजेद्भृत्यो राज्ञो गुह्यञ्च गोपयेत् ।
प्रदर्श्य कौशलं किञ्चिद्राजानन्तु विशेषयेत् ॥ ४ ॥
राज्ञा यच्छ्रावितं गुह्यं न तल्लोके प्रकाशयेत् ।
आज्ञाप्यमाने वान्यस्मिन् किङ्करोमीति वा वदेत् ॥ ५ ॥
वस्त्रं रत्नमलङ्कारं राज्ञा दत्तं च धारयेत्[1] ।
नानिर्दिष्टो[2] द्वारि विशेन्नायोग्ये भुवि राजदृक् ॥ ६ ॥
जृम्भानिष्ठीवनह्रासं कोपं पर्य्यन्तिकाश्रयं ।
भृकुटीं वातमुद्गारं तत्समीपे विसर्जयेत्[3] ॥ ७ ॥
स्वगुणाख्यापने युक्त्या परानेव प्रयोजयेत्[4] ।
शाठ्यं लौल्यं सपैशुन्यं नास्तिक्यं चुद्रता तथा ॥ ८ ॥
चापल्यञ्च परित्याज्यं नित्यं राजानुजीविना ।
श्रुतेन विद्याशिल्पैश्च संयोज्यात्मानमात्मना ॥ ९ ॥
राजसेवान्ततः कुर्य्याद्भूतये भूतिवर्द्धनः[5] ।
नमस्कार्य्याः सदा चास्य पुत्रवल्लभमन्त्रिणः ॥ १० ॥
सचिवैश्चास्य विश्वासो राजचित्तप्रियश्चरेत् ।
त्यजेद्विरक्तं रक्तात्तु वृत्तिमीहेत राजवित् ॥ ११ ॥
अपृष्टश्चास्य न ब्रूयात् कामं कुर्य्यात्तथापदि ।
प्रसन्नो वाक्यसङ्ग्राही रहस्ये न च शङ्कते ॥ १२ ॥

---

१ राज्ञाऽदत्तं न धारयेदिति ग० ।
२ नानिर्दिष्ट इति ख०, ग०, घ०, ङ० च ।
३ विवर्जयेदिति ग०, घ०, ङ०, ट० च ।
४ नियोजयेदिति ग०, घ०, ङ० च ।
५ भूतिवर्द्धिनीमिति ग०, ट० च ।

कुशलादिपरिप्रश्नं सम्प्रयच्छति चासनं।
तत्कथायवणाहृष्टो अप्रियाण्यपि मन्यते ॥ १३ ॥
अल्पं दत्तं प्रगृह्णाति स्मरेत् कथान्तरेष्वपि।
इति रक्तस्य कर्त्तव्यं सेवामन्यस्य वर्जयेत् ॥ १४ ॥

इत्याग्नेये महापुराणे अनुजीविवृत्तं नाम विंशत्यधिक-
द्विशततमोऽध्यायः ॥

---

## अथैकविंशत्यधिकद्विशततमोऽध्यायः।

---

### दुर्गसम्पत्तिः।

पुष्कर उवाच। दुर्गसम्पत्तिमाख्यास्ये दुर्गदेशे वसेन्नृपः।
वैश्यशूद्रजनप्रायोऽनाहार्य्यस्तथापरैः ॥ १ ॥
किञ्चिद्ब्राह्मणसंयुक्तो बहुकर्मकरस्तथा।
अदेवमातृको भक्तजनो देशः प्रशस्यते ॥ २ ॥
परैरपीडितः पुष्पफलधान्यसमन्वितः(१)।
अगम्यः परचक्राणां व्यालतस्करवर्जितः ॥ ३ ॥
षण्णामेकतमं दुर्गं तत्र कृत्वा वसेद्बली।
धनुर्दुर्गं महीदुर्गं नरदुर्गं तथैव च ॥ ४ ॥
वार्क्षञ्चैवाम्बुदुर्गञ्च गिरिदुर्गञ्च भार्गव।
सर्वोत्तमं शैलदुर्गमभेद्यं चान्यभेदनं ॥ ५ ॥

---

१ पुष्पफलधान्यधनान्वित इति ख॰, घ॰, ञ॰, ट॰ च।

पुरन्तत्र च हट्टाद्यदेवतायतनादिकं।
अमुयन्त्रायुधोपेतं सोदकं दुर्गमुत्तमं॥ ६॥
राजरक्षां प्रवक्ष्यामि रक्ष्यो भूपो विषादितः।
पञ्चाङ्गन्तु शिरीषः स्यान्मूत्रपिष्टो विषार्दनः॥ ७॥
शतावरी छिन्नरुहा विषघ्नो तण्डुलीयकं।
कोषातकी च कल्हारो ब्राह्मी चित्रपटोलिका॥ ८॥
मण्डूकपर्णी वाराही धात्र्यानन्दकमेव च।
उन्मादिनी सोमराजी विषघ्नं रत्नमेव च॥ ९॥
वास्तुलक्षणसंयुक्ते वसन् दुर्गे सुरान्यजेत्।
प्रजाश्च पालयेदुष्टाञ्जयेद्दानानि दापयेत्॥ १०॥
देवद्रव्यादिहरणात् कल्पन्तु नरके वसेत्।
देवालयानि कुर्वीत देवपूजारतो नृपः॥ ११॥
सुरालयाः पालनीयाः स्थापनीयाश्च देवताः।
मृण्मयाद्दारुजं पुण्यं दारुजादिष्टकामयं॥ १२॥
ऐष्टकाच्छैलजं पुण्यं शैलजात् स्वर्णरत्नजं।
क्रीडन् सुरगृहं कुर्वन् भुक्तिमुक्तिमवाप्नुयात्॥ १३॥
चित्रकृद्गीतवाद्यादिप्रेक्षणीयादिदानकृत्।
तैलाज्यमधुदुग्धाद्यैः स्नाप्य देवं दिवं व्रजेत्॥ १४॥
पूजयेत् पालयेद्विप्रान् द्विजस्वञ्च हरेन्नृपः।
सुवर्णमेकं गामेकां भूमेरप्येकमङ्गुलं॥ १५॥
हरन्नरकमाप्नोति यावदाहूतसम्प्लवं।
दुराचारश्च हिंस्यश्च सर्वपापेष्वपि स्थितं॥ १६॥
नैवास्ति ब्रह्मवधात् पापं गुरुतरं क्वचित्।

अदैवं दैवतं कुर्युः कुर्युर्दैवमदैवतं ॥ १७ ॥
ब्राह्मणा हि महाभागास्तान्नमस्येत्सदैव तु([1])।
ब्राह्मणी रुदती हन्ति कुलं राज्यं प्रजास्तथा ॥ १८ ॥
साध्वीस्त्रीणां पालनञ्च राजा कुर्य्याच्च धार्मिकः।
स्त्रिया प्रहृष्टया भाव्यं गृहकार्य्येषु दक्षया ॥ १९ ॥
सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया।
यस्मै दद्यात्पिता त्वेनां शुश्रूषेत्तं पतिं सदा ॥ २० ॥
मृते भर्त्तरि स्वर्यायात् ब्रह्मचर्य्ये स्थिताङ्गना।
परवेश्मरुचिर्न स्यान्न स्यात् कलहशालिनी ॥ २१ ॥
मण्डनं वर्जयेन्नारी तथा प्रोषितभर्तृका।
देवताराधनपरा तिष्ठेद्भर्त्तृहिते रता ॥ २२ ॥
धारयेन्मङ्गलार्थाय किञ्चिदाभरणन्तथा।
भर्त्राग्निं या विशेन्नारी सापि स्वर्गमवाप्नुयात् ॥ २३ ॥
श्रियः सम्पूजनङ्कार्य्यं गृहसम्मार्जनादिकं।
द्वादश्यां कार्त्तिके विष्णुं गां सवत्सां ददेत्तथा ॥ २४ ॥
सावित्र्या रक्षितो भर्त्ता सत्याचारव्रतेन च([2])।
सप्तम्यां मार्गशीर्षे तु सितेऽभ्यर्च्य दिवाकरं ॥ २५ ॥
पुत्रानाप्नोति च स्त्रीह नात्र कार्य्या विचारणा।

इत्याग्नेये महापुराणे राजधर्मो नाम एकविंशत्यधिक-
द्विशततमोऽध्यायः ॥

---

१ नान्नमस्येत्सदैव तु इति ञ०। २ सत्यवान् सुव्रतेनेति घ०, ञ०च।

## अथ द्वाविंशत्यधिकद्विशततमोऽध्यायः ।

——:○:——

राजधर्म्माः ।

पुष्कर उवाच । ग्रामस्याधिपतिं कुर्य्याद्दशग्रामाधिपं नृपः ।
शतग्रामाधिपञ्चान्यं तथैव विषयेश्वरं ॥ १ ॥
तेषां भोगविभागश्च भवेत् कर्म्मानुरूपतः ।
नित्यमेव तथा कार्य्यं तेषाञ्चारैः परीक्षणं ॥ २ ॥
ग्रामे दोषान् समुत्पन्नान् ग्रामेशः प्रशमं नयेत् ।
अशक्तो दशपालस्य स तु गत्वा निवेदयेत् ॥ ३ ॥
श्रुत्वापि दशपालोऽपि तत्र युक्तिमुपाचरेत् ।
वित्ताद्याप्नोति राजा वै विषयात्तु सुरक्षितात् ॥ ४ ॥
धनवान्धर्ममाप्नोति धनवान् काममश्नुते ।
उच्छिद्यन्ते विना ह्यर्थैः(१) क्रिया ग्रीष्मे सरिद्यथा ॥ ५ ॥
विशेषो नास्ति लोकेषु पतितस्याधनस्य च ।
पतितान्न तु गृह्णन्ति दरिद्रो न प्रयच्छति ॥ ६ ॥
धनहीनस्य भार्य्यापि नैका स्यादुपवर्त्तिनी(२) ।
राष्ट्रपीडाकरो राजा नरके वसते चिरं ॥ ७ ॥
नित्यं राज्ञा तथा भाव्यं गर्भिणी सहधर्म्मिणी ।
यथा स्वं सुखमुत्सृज्य गर्भस्य सुखमावहेत्(३) ॥ ८ ॥

---

१ विना ह्यर्थैरिति ख०, ज० च।
२ नैव स्यादनुवर्त्तिनीति घ०, ङ० च। नैव स्यादनुवर्त्तिनीति ख०, ज०, ञ० च।
३ सुखमाचरेदिति ज०, ट० च।

किं यज्ञैस्तपसा तस्य प्रजा यस्य न रक्षिताः ।
सुरक्षिताः प्रजा यस्य स्वर्गस्तस्य गृहोपमः ॥ ९ ॥
अरक्षिताः प्रजा यस्य नरकं तस्य मन्दिरं ।
राजा षड्भागमादत्ते सुकृताद्दुष्कृतादपि ॥ १० ॥
धर्मागमो रक्षणाच्च पापमाप्नोत्यरक्षणात् ।
सुभगा विटभीतेव राजवल्लभतस्करैः ॥ ११ ॥
भक्ष्यमाणाः प्रजा रक्ष्याः कायस्थैश्च विशेषतः ।
रक्षिता तद्भयेभ्यस्तु राज्ञो भवति सा प्रजा(१) ॥ १२ ॥
अरक्षिता सा भवति तेषामेवेह भोजनं ।
दुष्टसम्मर्द्दनं कुर्य्याच्छास्त्रोक्तं करमाददेत्(२) ॥ १३ ॥
कोषे प्रवेशयेदर्द्धं नित्यमर्द्धं द्विजे ददेत्(३) ।
निधिं द्विजोत्तमः प्राप्य गृह्णीयात्सकलं तथा ॥ १४ ॥
चतुर्थमष्टमं भागं तथा षोडशमं द्विजः ।
वर्णक्रमेण दद्याच्च निधिं पात्रे तु धर्मतः ॥ १५ ॥
अनृतन्तु वदन् दण्ड्यः(४) सुवित्तस्यांशमष्टमं ।
प्रणष्टस्वामिकमृक्थं राजात्र्यब्दं निधापयेत् ॥ १६ ॥
अर्वाक् त्र्यब्दाद्धरेत् स्वामी परेण नृपतिर्हरेत् ।
ममेदमिति यो ब्रूयात् सोऽर्थयुक्तो यथाविधि ॥ १७ ॥
सम्पाद्य रूपसङ्ख्यादीन् स्वामी तद् द्रव्यमर्हति ।

---

१ सा प्रजा इति ख०, ञ० च ।
२ सुभगा विटभीतेवेत्यादि, करमाददे दित्यन्तः पाठः ञ० पुस्तके नास्ति ।
३ द्विजेऽर्पयेदिति ख०, ठ० च ।
४ अनृतं वदतो प्राप्नुमिति ट० ।

बालदायादिकमृक्थं(१) तावद्राजानुपालयेत् ॥ १८ ॥
यावत्स्यात्स समावृत्तो यावद्वातीतशैशवः ।
बालपुत्रासु चैवं स्याद्रक्षणं निष्कुलासु च ॥ १९ ॥
पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च ।
जीवन्तीनान्तु तासां ये संहरेयुः स्वबान्धवाः ॥ २० ॥
तांश्छिष्याच्चौरदण्डेन धार्म्मिकः पृथिवीपतिः ।
सामान्यतो हृतं चौरैस्तद्वै दद्यात् स्वयं नृपः ॥ २१ ॥
चौररक्षाधिकारिभ्यो राजापि हृतमाप्नुयात् ।
अहृते यो हृतं ब्रूयान्निःसार्यो दण्ड्य एव सः ॥ २२ ॥
न तद्राज्ञा प्रदातव्यं गृहे यद् गृहगैर्हृतं ।
स्वराष्ट्रपण्यादादद्याद्राजा विंशतिमं द्विज ॥ २३ ॥
शुल्कांशं परदेशाच्च क्षयव्ययप्रकाशकं ।
ज्ञात्वा सङ्कल्पयेच्छुल्कं लाभं वणिग्यथाप्नुयात् ॥ २४ ॥
विंशांशं लाभमादद्याद्दण्डनीयस्ततोऽन्यथा ।
स्त्रीणां प्रव्रजितानाञ्च(२) तरशुल्कं विवर्ज्जयेत् ॥ २५ ॥
तरेषु दासदोषेण नष्टं दासांस्तु दापयेत् ।
शूकधान्येषु षड्भागं शिम्बिधान्ये तथाष्टमं ॥ २६ ॥
राजा वन्यार्थमादद्याद्देशकालानुरूपकं ।
पञ्चषड्भागमादद्याद् राजा पशुहिरण्ययोः ॥ २७ ॥
गन्धौषधिरसानाञ्च पुष्पमूलफलस्य च ।

---

१ बालदायादिकं तुल्यमिति ख०,   २ स्त्रीणाञ्चैव द्विजातीनामिति ख०, ग०, घ०, ङ० च।

पत्रशाकतृणानाञ्च वंशवैणवचर्मणां ॥ २८ ॥
वैदलानाञ्च भाण्डानां सर्वस्याश्ममयस्य च ।
षड्भागमेव चाददयात् मधुमांसस्य सर्पिषः ॥ २८ ॥
म्रियन्नपि न चाददयाद् ब्राह्मणेभ्यस्तथा करं ।
यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा ॥ ३० ॥
तस्य सीदति तद्राष्ट्रं व्याधिदुर्भिक्षतस्करैः ।
श्रुतं वृत्तन्तु विज्ञाय वृत्तिं तस्य प्रकल्पयेत् ॥ ३१ ॥
रक्षेच्च सर्वतस्त्वेनं पिता पुत्रमिवौरसं ।
संरक्ष्यमाणो राज्ञा यः कुरुते धर्ममन्वहं ॥ ३२ ॥
तेनायुर्वर्धते राज्ञो द्रविणं राष्ट्रमेव च ।
कर्म कुर्युर्नरेन्द्रस्य मासेनैकञ्च(१) शिल्पिनः ॥ ३३ ॥
भुक्तमात्रेण ये चान्ये स्वशरीरोपजीविनः ।

इत्याग्नेये महापुराणे राजधर्मो नाम द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥

---

## अथ त्रयोविंशत्यधिकद्विशततमोऽध्यायः ।

### राजधर्माः ।

पुष्कर उवाच । वक्ष्येऽन्तःपुरचिन्तां च धर्माद्याः पुरुषार्थकाः ।
अन्योन्यरक्षया तेषां सेवा कार्या स्त्रिया नृपैः ॥ १ ॥

---

१ मासेनैकेनेति ख०, ज० च ।

धर्म्ममूलोऽर्थविटपस्तथा कर्म्मफलो महान् ।
त्रिवर्गपादपस्तस्य रक्षया फलभाग् भवेत् ॥ २ ॥
कामाधीनाः(१) स्त्रियो राम तदर्थं रत्नसङ्ग्रहः ।
सेव्यास्ता नातिसेव्याश्च भूभुजा विषयैषिणा ॥ ३ ॥
आहारो मैथुनं निद्रा सेव्या नाति हि रुग् भवेत् ।
मञ्चाधिकारे(२) वक्तव्याः स्त्रियः सेव्याः स्वरामिकाः(३) ॥४॥
दुष्टान्याचरते(४) या तु नाभिनन्दति तत्कथां ।
ऐक्यं द्विषद्भिर्व्रजति गर्व्वं वहति चोद्धता ॥ ५ ॥
चुम्बिता मार्ष्टि वदनं दत्तन्न बहु मन्यते ।
स्वपित्यादौ प्रसुप्तापि तथा पश्चाद्विबुध्यते ॥ ६ ॥
स्पृष्टा धुनोति गात्राणि गात्रञ्च विरुणद्धि या ।
ईषच्छृणोति वाक्यानि प्रियाण्यपि पराङ्मुखी ॥ ७ ॥
न पश्यत्यग्रदत्तन्तु जघनञ्च निगूहति ।
दृष्टे विवर्णवदना मित्रेष्वथ पराङ्मुखी(५) ॥ ८ ॥
तत्कामितासु च स्त्रीषु मध्यस्थेव च लक्ष्यते ।
ज्ञातमण्डनकालापि न करोति च मण्डनं ॥ ९ ॥
या सा विरक्ता तान्त्यक्त्वा सानुरागां स्त्रियम्भजेत्(६) ।
दृष्ट्वैव हृष्टा भवति वीक्षिते च पराङ्मुखी ॥ १० ॥

---

१ कामाधारा इति ख०, ञ० च ।
२ मन्त्राधिकारे इति ख०, ञ० च ।
३ स्वरामिका इति ञ० ।
४ द्विष्टान्याचरते इति ञ० ।
५ न पश्यत्यग्रदत्तमित्यादि, मित्रेष्वथ पराङ्मुखीत्यन्तः पाठः ञ० पुस्तके नास्ति ।
६ स्त्रियं व्रजेदिति ख०, ञ० च ।

दृश्यमाना तथाऽन्यत्र दृष्टिं क्षिपति चञ्चलां ।
तथाप्युपावर्त्तयितुं नैव शक्नोत्यशेषतः ॥ ११ ॥
विवृणोति तथाङ्गानि स्वस्या गुह्यानि भार्गव ।
गर्हितञ्च तथैवाङ्गं प्रयत्नेन निगूहति ॥ १२ ॥
तद्दर्शने च कुरुते बालालिङ्गनचुम्बनं ।
आभाष्यमाणा भवति सत्यवाक्या तथैव च ॥ १३ ॥
स्पृष्टा पुलकितैरङ्गैः स्वेदेनैव च भज्यते ।
करोति च तथा राम सुलभद्रव्ययाचनं ॥ १४ ॥
ततः स्वल्पमपि प्राप्य करोति परमां मुदं ।
नामसङ्कीर्त्तनादेव मुदिता बहु मन्यते ॥ १५ ॥
करजाङ्काङ्कितान्यस्य फलानि प्रेषयत्यपि ।
तत्प्रेषितञ्च हृदये विन्यसत्यपि चादरात् ॥ १६ ॥
आलिङ्गनैश्च गात्राणि लिम्पतीवामृतेन या ।
सुप्ते स्वपित्यथादौ च तथा तस्य विबुध्यते ॥ १७ ॥
ऊरू स्पृशति चात्यर्थं सुप्तश्चैनं विबुध्यते ।
कपित्थचूर्णयोगेन तथा दध्नः स्रजा तथा ॥ १८ ॥
घृतं सुगन्धि भवति दुग्धैः क्षिप्तैस्तथा यवैः ।
भोज्यस्य कल्पनैवं स्यात्गन्धयुक्तिः प्रदर्श्यते ॥ १९ ॥
शौचमाचमनं राम तथैव च विरेचनं ।
भावना चैव पाकश्च बोधनं धूपनन्तथा ॥ २० ॥
वासनञ्चैव निर्दिष्टं कर्माष्टकमिदं स्मृतं ।
कपित्थबिल्वजम्बाम्रकरवीरकपल्लवैः ॥ २१ ॥
कृत्वोदकन्तु यद्द्रव्यं शौचितं शौचनन्तु तत् ।

तेषामभावे शौचन्तु मृगदर्पाम्भसा भवेत् ॥ २२ ॥
नखं कुष्ठं घनं मांसी स्पृक्कशैलेयजं जलं।
तथैव कुङ्कुमं लाक्षा चन्दनागुरुनीरदं(१) ॥ २३ ॥
सरलं देवकाष्ठञ्च(२) कर्पूरं कान्तया सह।
वालः कुन्दुरुकश्चैव गुग्गुलुः श्रीनिवासकः ॥ २४ ॥
सह सर्जरसेनैवं धूपद्रव्यैकविंशतिः।
धूपद्रव्यगणादस्मादेकविंशाद्यथेच्छया ॥ २५ ॥
द्वे द्वे द्रव्ये समादाय सर्जभागैर्नियोजयेत्।
नखपिण्याकमलयैः संयोज्य मधुना तथा ॥ २६ ॥
धूपयोगा भवन्तीह यथावत् स्वेच्छया कृताः।
त्वचवाडीं फलन्तैलं कुङ्कुमं ग्रन्थि पर्वकं(३) ॥ २७ ॥
शैलेयन्तगरं क्रान्तां चोलकर्पूरमेव च(४)।
मांसीं सुराञ्च कुष्ठञ्च स्नानद्रव्याणि निर्दिशेत् ॥ २८ ॥
एतेभ्यस्तु समादाय द्रव्यत्रयमथेच्छया।
मृगदर्पयुतं स्नानं कार्यं कन्दर्पवर्द्धनं ॥ २९ ॥
त्वङ्मुरानलदैस्तुल्यैर्वालकार्द्धसमायुतैः।
स्नानमुत्पलगन्धि स्यात् सतैलं कुङ्कुमायते ॥ ३० ॥
जातीपुष्पसुगन्धि स्यात् तगरार्द्धेन योजितं।
सद्यामकं स्याद्वकुलैस्तुल्यगन्धि मनोहरं ॥ ३१ ॥

---

१ चन्दनागुरुशैलजमिति ख०, ङ० च। ४ सह सर्जरसेनेत्यादिः चोल कर्पूरमे
२ देवदारुचेति ग०, ञ० च। व चेत्यन्त पाठ ट० पुस्तके नास्ति।
३ ग्रन्थिपर्णकमिति ङ०, छ०, ञ० च।

मञ्जिष्ठातगरं चोलं त्वचं व्याघ्रनखं नखं ।
गन्धपत्रञ्च विन्यस्य गन्धतैलं भवेच्छुभं ॥ ३२ ॥
तैलं निपीडितं राम तिलैः पुष्पाधिवासितैः ।
वासनात् पुष्पसदृशं गन्धेन तु भवेद् ध्रुवं ॥ ३३ ॥
एलालवङ्गकक्कोलजातीफलनिशाकराः ।
जातीपत्रिकया सार्द्धं स्वतन्त्रा मुखवासकाः ॥ ३४ ॥
कर्पूरं कुङ्कुमं कान्ता मृगदर्पं हरेणुकं ।
कक्कोलैलालवङ्गञ्च जाती कोशकमेव च ॥ ३५ ॥
त्वक्पत्रं त्रुटिमुस्तौ च लतां कस्तूरिकां तथा ।
कण्टकानि लवङ्गस्य फलपत्रे च जातितः ॥ ३६ ॥
कटुकञ्च(१) फलं राम कार्षिकाण्युपकल्पयेत् ।
तच्चूर्णे खदिरं सारं दद्यात्तुर्यं तु वासितं(२) ॥ ३७ ॥
सहकाररसेनास्मात् कर्त्तव्या गुटिकाः शुभाः(३) ।
मुखे न्यस्ताः सुगन्धास्ता मुखरोगविनाशनाः ॥ ३८ ॥
पूगं प्रक्षालितं सम्यक् पञ्चपल्लववारिणा ।
गन्धा तु गुटिकाद्रव्यैर्वासितं मुखवासकं ॥ ३९ ॥
कटुकं दन्तकाष्ठञ्च गोमूत्रे वासितं त्र्यहं ।
कृतञ्च पूगवद्राम मुखसौगन्धिकारकं ॥ ४० ॥
त्वक्पथ्ययोः समावंशौ शशिभागार्द्धसंयुतौ ।
नागवल्लीसमो भाति मुखवासो मनोहरः ॥ ४१ ॥

---

१ कन्दुकञ्चेति घ०, ङ० च ।
२ दद्यात्तुर्यं ह्यल्पमिति ट०, ङ० च ।
३ कक्कोलैरित्यादिः गुटिका शुभा इत्यन्तः पाठः घ० ञ० पुस्तकद्वये नास्ति ।

एवं कुर्य्यात् सदा स्त्रीणां रक्षणं पृथिवीपतिः।
न चासां विश्वसेज्जातु पुत्रमातुर्विशेषतः॥ ४२॥
न स्वपेत् स्त्रीगृहे रात्रौ विश्वासः कृत्रिमो भवेत्।

इत्याग्नेये महापुराणे स्त्रीरक्षादिकामशास्त्रं नाम
त्रयोविंशत्यधिकद्विशततमोऽध्यायः॥

---

## अथ चतुर्विंशत्यधिकद्विशततमोऽध्यायः।

—:○:—

### राजधर्माः।

पुष्कर उवाच। राजपुत्रस्य रक्षा च कर्त्तव्या पृथिवीक्षिता।
धर्मार्थकामशास्त्राणि धनुर्वेदञ्च शिक्षयेत्॥ १॥
शिल्पानि शिक्षयेच्चैवमाप्तैर्मिथ्याप्रियंवदैः।
शरीररक्षाव्याजेन रक्षिणोऽस्य नियोजयेत्॥ २॥
न चास्य सङ्गो दातव्यः क्रुद्धलुब्धविमानितैः।
अशक्यन्तु गुणाधानं कर्त्तुं तं बन्धयेत् सुखैः॥ ३॥
अधिकारेषु सर्वेषु विनीतं विनियोजयेत्।
मृगयां पानमक्षांश्च राज्यनाशं स्त्यजेन्नृपः॥ ४॥
दिवास्वप्नं वृथाट्याञ्च वाक्पारुष्यं विवर्जयेत्।
निन्दाञ्च दण्डपारुष्यमर्थदूषणमुत्सृजेत्॥ ५॥
आकाराणां समुच्छेदो दुर्गादीनामसत्क्रिया।

अर्थानां दूषणं प्रोक्तं विप्रकीर्णत्वमेव च ॥ ६ ॥
अदेशकाले यद्दानमपात्रे दानमेव च ।
अर्थेषु दूषणं प्रोक्तमसत्कर्मप्रवर्त्तनं ॥ ७ ॥
काम क्रोधं मदं मानं लोभं दर्पञ्च वर्जयेत् ।
ततो भृत्यजयं कृत्वा पौरजानपदं जयेत् ॥ ८ ॥
जयेद्बाह्यानरीन् पश्चाद्बाह्याश्च त्रिविधारयः ।
गुरवस्ते यथा पूर्वं कुल्यानन्तरकृत्रिमाः ॥ ९ ॥
पितृपैतामहं मित्रं सामन्तश्च तथा रिपोः ।
कृत्रिमञ्च महाभाग मित्रन्त्रिविधमुच्यते ॥ १० ॥
स्वाम्यमात्यञ्जनपदा दुर्गं दण्डस्तथैव च ।
कोषो मित्रञ्च धर्मज्ञ सप्ताङ्गं राज्यमुच्यते ॥ ११ ॥
मूलं स्वामी स वै रक्ष्यस्तस्माद्राज्यं(१) विशेषतः ।
राज्याङ्गद्रोहिणं हन्यात्काले तीक्ष्णो मृदुर्भवेत् ॥ १२ ॥
एवं लोकद्वयं राज्ञो भृत्यैर्हासं विवर्जयेत् ।
भृत्याः परिभवन्तीह नृपं हर्षणसत्कथं ॥ १३ ॥
लोकसङ्ग्रहणार्थाय कृतकव्यसनो भवेत् ।
स्मितपूर्वाभिभाषी स्यात् लोकानां रञ्जनं चरेत् ॥ १४ ॥
दीर्घसूत्रस्य नृपतेः कर्महानिर्ध्रुवं भवेत् ।
रागे दर्पे च माने च द्रोहे पापे च कर्मणि ॥ १५ ॥
अप्रिये चैव वक्तव्ये दीर्घसूत्रः प्रशस्यते ।
गुप्तमन्त्रो भवेद्राजा नापदो गुप्तमन्त्रतः ॥ १६ ॥

---

१ मत्स्याद्राष्ट्रमिति ख०, ग०, घ०, ङ०, ज०, झ०, ट० च ।

ज्ञायते हि कृतं कर्म्म नारब्धं तस्य राज्यकं(१)।
आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च ॥ १७ ॥
नेत्रवक्त्रविकाराभ्यां गृह्यतेऽन्तर्गतं पुनः।
नैकस्तु मन्त्रयेन् मन्त्रं न राजा बहुभिः सह ॥ १८ ॥
बहुभिर्मन्त्रयेत् कामं राजा मन्त्रान् पृथक् पृथक्।
मन्त्रिणामपि नो कुर्य्यान् मन्त्री मन्त्रप्रकाशनं। १९ ॥
क्वापि कस्यापि(२) विश्वासो भवतीह सदा नृणां।
निश्चयश्च तथा मन्त्रे कार्य्य एकेन सूरिणा ॥ २० ॥
नश्येदविनयाद्राजा राज्यञ्च विनयाल्लभेत्।
त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिञ्च शाश्वतीं ॥ २१ ॥
आन्वीक्षिकीञ्चार्थविद्यां वार्त्तारम्भांश्च लोकतः।
जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः ॥ २२ ॥
पूज्या देवा द्विजाः सर्वे दद्याद्दानानि तेषु च।
द्विजे दानञ्चाक्षयोऽयं निधिः कैश्चिन्न नाश्यते ॥ २३ ॥
सङ्ग्रामेष्वनिवर्त्तित्वं प्रजानां परिपालनं।
दानानि ब्राह्मणानाञ्च राज्ञो निःश्रेयसम्परं ॥ २४ ॥
कृपणानाथवृद्धानां विधवानाञ्च योषितां।
योगक्षेमञ्च वृत्तिञ्च तथैव परिकल्पयेत् ॥ २५ ॥
वर्णाश्रमव्यवस्थानं कार्य्यन्तापसपूजनं।
न विश्वसेच्च सर्वत्र तापसेषु च विश्वसेत् ॥ २६ ॥
विश्वासयेच्चापि परन्तत्त्वभूतेन हेतुना।

---

१ तस्य कर्मकर्मेति ख०।　　ग०, ज०, ट० च।
२ क्वचित् कस्यापि इति ख०, ग०,

वकवच्चिन्तयेदर्थं सिंहवच्च पराक्रमेत् ॥ २७ ॥
वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत् ।
दृढप्रहारी च भवेत् तथा शूकरवन्नृपः ॥ २८ ॥
चित्राकारश्च शिखिवद् दृढभक्तिस्तथाश्ववत् ।
भवेच्च मधुराभाषी तथा कोकिलवन्नृपः ॥ २९ ॥
काकशङ्की भवेन्नित्यमज्ञातां वसतिं वसेत् ।
नापरीक्षितपूर्वञ्च भोजनं शयनं स्पृशेत् ॥ ३० ॥
नाविज्ञातां स्त्रियं गच्छेन्नाज्ञातं नावमारुहेत् ।
राष्ट्रकर्षी भ्रश्यते च राज्यार्थाच्चैव जीवितात् ॥ ३१ ॥
भृतो वत्सो जातबलः कर्मयोग्यो यथा भवेत् ।
तथा राष्ट्रं महाभाग भृतं कर्मसहं भवेत् ॥ ३२ ॥
सर्वं कर्मेदमायत्तं विधाने दैवपौरुषे ।
तयोर्दैवमचिन्त्यं हि पौरुषे विद्यते क्रिया ॥ ३३ ॥
जनानुरागप्रभवा राज्ञो राज्यमहीश्रियः ।

इत्याग्नेये महापुराणे राजधर्मो नाम चतुर्विंशत्यधिक-
द्विशततमोऽध्यायः ॥

## अथ पञ्चविंशत्यधिकद्विशततमोऽध्यायः ।

——:०:——

### राजधर्माः ।

पुष्कर उवाच । स्वमेव कर्म दैवाख्यं विद्धि देहान्तरार्जितं ।
तस्मात् पौरुषमेवेह श्रेष्ठमाहुर्मनीषिणः ॥ १ ॥

प्रतिकूलं तथा दैवं पौरुषेण विहन्यते।
सात्त्विकात् कर्मणः पूर्वात् सिद्धिः स्यात्पौरुषं विना ॥२॥
पौरुषं दैवसम्पत्त्या काले फलति भार्गव।
दैवं पुरुषकारश्च द्वयं पुंसः फलावहं ॥ ३ ॥
कृषेर्वृष्टिसमायोगात् काले स्युः फलसिद्धयः।
सधर्म्मं पौरुषं कुर्य्यान्नालसो न च दैववान् ॥ ४ ॥
सामादिभिरुपायैस्तु सर्वे सिद्ध्यन्त्युपक्रमाः।
साम चोपप्रदानञ्च भेददण्डौ तथापरौ ॥ ५ ॥
मायोपेक्षेन्द्रजालञ्च उपायाः सप्त ताञ्छृणु।
द्विविधं कथितं साम तथ्यञ्चातथ्यमेव च ॥ ६ ॥
तत्राप्यतथ्यं साधूनामाक्रोशायैव जायते।
महाकुलीना ह्यृजवो धर्मनित्या जितेन्द्रियाः ॥ ७ ॥
सामसाध्या अतथ्यैश्च गृह्यन्ते राक्षसा अपि।
तथा तदुपकाराणां कृतानाञ्चैव वर्णनं ॥ ८ ॥
परस्परन्तु ये द्विष्टाः क्रुद्धभीतावमानिताः।
तेषाम्भेदं प्रयुञ्जीत परमं दर्शयेद्भयं(१) ॥ ९ ॥
आत्मीयान् दर्शयेदाशां येन दोषेण बिभ्यति।
परास्तेनैव ते भेद्या रक्ष्यो वै ज्ञातिभेदकः ॥ १० ॥
सामन्तकोपो बाह्यस्तु मन्त्रामात्यात्मजादिकः(२)।
अन्तःकोपश्चोपशाम्यं कुर्वन् शत्रोश्च तं जयेत् ॥ ११ ॥
उपायश्रेष्ठं दानं स्याद्दानादुभयलोकभाक्।
न सोऽस्ति नाम दानेन वशगो यो न जायते ॥ १२ ॥

१ परस्माद्दर्शयेद्भयमिति ज०। २ मन्त्रामात्यात्मजादिक इति ज०।

दानवानेव शक्नोति संहतान् भेदितुं परान्।
चयासाध्यं साधयेत्तं दण्डेन च कृतेन च ॥ १३ ॥
दण्डे सर्वं स्थितं दण्डो नाशयेद्दुष्प्रणीतकः।
अदण्ड्यान् दण्डयन्नश्येद्दण्ड्यान्राजाप्यदण्डयन्॥ १४ ॥
देवदैत्योरगनराः सिद्धा भूताः पतत्रिणः।
उत्क्रमेयुः स्वमर्यादां यदि दण्डान् न पालयेत् ॥ १५ ॥
यस्माददान्तान् दमयत्यदण्ड्यान्दण्डयत्यपि।
दमनाद्दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः ॥ १६ ॥
तेजसा दुर्निरीक्ष्यो हि राजा भास्करवत्ततः।
लोकप्रसादं गच्छेत दर्शनाच्चन्द्रवत्ततः ॥ १७ ॥
जगद्व्याप्नोति वै चारैरतो राजा समीरणः।
दोषनिग्रहकारित्वाद्राजा वैवस्वतः प्रभुः ॥ १८ ॥
यदा दहति दुर्बुद्धिं तदा भवति पावकः।
यदा दानं द्विजातिभ्यो दद्यात् तस्माद्धनेश्वरः॥ १९ ॥
धनधाराप्रवर्षित्वाद्देवादौ वरुणः स्मृतः।
क्षमया धारयंल्लोकान् पार्थिवः पार्थिवो भवेत् ॥ २० ॥
उत्साहमन्त्रशक्त्याद्यैं रक्षेद्यस्माद्धरिस्ततः ॥

इत्याग्नेये महापुराणे सामाद्युपायो नाम पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥

---

## अथ षड्‌विंशत्यधिकद्विशततमोऽध्यायः।



### राजधर्माः।

पुष्कर उवाच। दण्डप्रणयनं वक्ष्ये येन राज्ञः परा गतिः।
विधवं कृष्णलं विद्धि माषस्तत्पञ्चकं भवेत्॥ १॥
कृष्णलानां तथा षष्ट्या (१) कर्षार्द्धं राम कीर्त्तितं।
सुवर्णश्च विनिर्द्दिष्टो राम षोडशमाषकः॥ २॥
निष्कः सुवर्णाश्चत्वारो धरणं दशभिस्तु तैः।
ताम्ररूप्यसुवर्णानां मानमेतत् प्रकीर्त्तितं॥ ३॥
ताम्रिकैः कार्षिको राम प्रोक्तः कार्षापणो बुधैः।
पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः(२)॥ ४॥
मध्यमः पञ्च विज्ञेयः सहस्रमपि चोत्तमः।
चौरैरमुषितो यस्तु मुषितोऽस्मीति भाषते॥ ५॥
तत्प्रदातरि भूपाले स दण्ड्यस्तावदेव तु।
यो यावद्विपरीतार्थं मिथ्या वा यो वदेत्तु तं॥ ६॥
तौ नृपेण ह्यधर्मज्ञौ दाप्यौ तद्द्विगुणं दमं(३)।
कूटसाक्ष्यन्तु कुर्व्वाणांस्त्रीन् वर्णांश्च प्रदापयेत्॥ ७॥
विवासयेद्ब्राह्मणन्तु भोज्यो विधिर्न हीरितः।
निक्षेपस्य समं मूल्यं दण्ड्यो निक्षेपभुक् तथा॥ ८॥

---

१ तथा षष्ट्या इति क०, ञ० च।

२ ताम्रिकैः कार्षिक इत्यादि, साहस स्मृत इत्यन्त पाठ झ० पुस्तके नास्ति।

३ योयावदित्यादि, तद्द्विगुण दममित्यन्त पाठ झ० पुस्तके नास्ति।

वस्त्रादिकस्य धर्मज्ञ तथा धर्मो न हीयते।
यो निक्षेपं घातयति यश्चानिक्षिप्य याचते ॥ ९ ॥
तावुभौ चौरवच्छास्यौ दण्ड्यौ वा द्विगुणं दमं।
अज्ञानाद्यः पुमान् कुर्य्यात् परद्रव्यस्य विक्रयं ॥ १० ॥
निर्दोषो ज्ञानपूर्वन्तु चौरवद्दण्डमर्हति(१)।
मूल्यमादाय यः शिल्पं न दद्याद् दण्ड्य एव सः ॥ ११ ॥
प्रतिश्रुत्याप्रदातारं सुवर्णं दण्डयेन्नृपः।
भृतिं गृह्य न कुर्य्याद्यः कर्माष्टौ कृष्णला दमः ॥ १२ ॥
अकाले तु त्यजन् भृत्यं दण्ड्यः स्यात्तावदेव तु।
क्रीत्वा विक्रीय वा किञ्चिद्यस्येहानुशयो भवेत् ॥ १३ ॥
सोऽन्तर्दशाहात्तत्स्वामी दद्याच्चैवाददीत च।
परेण तु दशाहस्य नादद्यान्नैव दापयेत् ॥ १४ ॥
आददद्धि ददच्चैव राज्ञा दण्ड्यः शतानि षट्।
वरे दोषानविख्याप्य यः कन्यां वरयेदिह(२) ॥ १५ ॥
दत्ताप्यदत्ता सा तस्य राज्ञा दण्ड्यः शतद्वयं।
प्रदाय कन्यां योऽन्यस्मै पुनस्तां सम्प्रयच्छति ॥ १६ ॥
दण्डः कार्य्यो नरेन्द्रेण तस्याप्युत्तमसाहसः।
सत्यङ्कारेण वाचा च युक्तं पुण्यमसंशयं ॥ १७ ॥
लुब्धोऽन्यत्र च विक्रेता षट्शतं दण्डमर्हति।
दद्याद्धेनुं न यः पालो गृहीत्वा भक्तवेतनं ॥ १८ ॥
स तु दण्ड्यः शतं राज्ञा सुवर्णं वाप्यरक्षिता।

---

१ चौरवद्दण्डमर्हतीति ख०, ज० च। २ वरयेदपि इति ख०, ज० च।

धनुःशतं परीणाहो ग्रामस्य तु समन्ततः ॥ १८ ॥
द्विगुणं त्रिगुणं वापि नगरस्य च कल्पयेत् ।
वृतिं तत्र प्रकुर्वीत यामुष्ट्रो नावलोकयेत् ॥ २० ॥
तत्रापरिवृते धान्ये हिंसिते नैव दण्डनं ।
गृहन्तडागमारामं क्षेत्रं वा भीषया हरन् ॥ २१ ॥
शतानि पञ्च दण्ड्यः स्यादज्ञानाद्द्विशतो दमः ।
मर्यादाभेदकाः सर्वे दण्ड्याः प्रथमसाहसं ॥ २२ ॥
शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति ।
वैश्यश्च द्विशतं राम शूद्रश्च बधमर्हति ॥ २३ ॥
पञ्चाशद्ब्राह्मणो दण्ड्यः क्षत्रियस्याभिशंसने ।
वैश्ये वाप्यर्द्धपञ्चाशच्छूद्रे द्वादशको दमः ॥ २४ ॥
क्षत्रियस्याप्नुयाद्वैश्यः साहसं पूर्वमेव तु ।
शूद्रः क्षत्रियमाक्रुश्य जिह्वाच्छेदनमाप्नुयात् ॥ २५ ॥
धर्मोपदेशं विप्राणां शूद्रः कुर्वंश्च दण्डभाक् ।
श्रुतदेशादिवितथी दाप्यो द्विगुणसाहसं ॥ २६ ॥
उत्तमः साहसस्तस्य यः पापैरुत्तमान् क्षिपेत् ।
प्रमादाद्यैर्मया प्रोक्तं प्रीत्या दण्डार्द्धमर्हति ॥ २७ ॥
मातरं पितरं ज्येष्ठं भ्रातरं श्वशुरं गुरुं ।
आचारयञ्छतं दण्ड्यः पन्थानं चाददद्गुरोः ॥ २८ ॥
अन्त्यजातिर्द्विजातिन्तु येनाङ्गेनापराध्नुयात् ।
तदेवच्छेदयेत्तस्य चिप्रमेवाविचारयन् ॥ २९ ॥
अवनिष्ठीवतो दर्पाद् द्वावोष्ठौ छेदयेन्नृपः ।
अपमूत्रयतो मेढ्रमपशब्दयतो गुदं ॥ ३० ॥

उत्कृष्टासनसंस्थस्य नीचस्याधोनिकृन्तनं ।
यो यदङ्गं च रुजयेत्तदङ्गन्तस्य कर्त्तयेत् ॥ ३१ ॥
अर्द्धपादकराः कार्या गोगजाश्वोष्ट्रघातकाः ।
वृक्षन्तु विफलं कृत्वा सुवर्णं दण्डमर्हति ॥ ३२ ॥
द्विगुणं दापयेच्छिन्ने पथि सीम्नि जलाशये ।
द्रव्याणि यो हरेद्यस्य ज्ञानतोऽज्ञानतोऽपि वा ॥ ३३ ॥
स तस्योत्पाद्य तुष्टिन्तु राज्ञे दद्यात्ततो दमं ।
यस्तु रज्जुं घटं कूपाद्धरेच्छिन्द्याच्च तां प्रपां ॥ ३४ ॥
स दण्डं प्राप्नुयान् मासं दण्डः स्यात् प्राणिताड़ने ।
धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं वधः ॥ ३५ ॥
शेषेऽप्येकादशगुणं तस्य दण्डं प्रकल्पयेत् ।
सुवर्णरजतादीनां नृस्त्रीणां हरणे वधः ॥ ३६ ॥
येन येन यथाङ्गेन स्तेनो नृषु विचेष्टते ।
तत्तदेव हरेदस्य प्रत्यादेशाय पार्थिवः ॥ ३७ ॥
ब्राह्मणः शाकधान्यादि अल्पं गृह्णन्न दोषभाक् ।
गोदेवार्थं हरंश्चापि हन्याद्दुष्टं वधोद्यतं ॥ ३८ ॥
गृहक्षेत्रापहर्त्तारं तथा पत्न्यभिगामिनं ।
अग्निदं गरदं हन्यात्तथा चाभ्युद्यतायुधं ॥ ३९ ॥
राजा गवाभिचाराद्यं हन्याच्चैवाततायिनः ॥
परस्त्रियं न भाषेत प्रतिषिद्धो विशेच्च हि ॥ ४० ॥
अदण्ड्या स्त्री भवेद्राज्ञा वरयन्ती पतिं स्वयं ।
उत्तमां सेवमानः स्त्रीं जघन्यो वधमर्हति ॥ ४१ ॥
भर्त्तारं लङ्घयेद्या तां श्वभिः सङ्घातयेत् स्त्रियं ।

सवर्णदूषितां कुर्य्यात् पिण्डमात्रोपजीविनीं ॥ ४२ ॥
ज्यायसा दूषिता नारी मुण्डनं समवाप्नुयात्।
वैश्यागमे तु विप्रस्य क्षत्रियस्यान्त्यजागमे ॥ ४३ ॥
क्षत्रियः प्रथमं वैश्यो दण्ड्यः शूद्रागमे भवेत्।
गृहीत्वा वेतनं वेश्या लोभादन्यत्र गच्छति ॥ ४४ ॥
वेतनद्विगुणं दद्याद्दण्डञ्च द्विगुणं तथा।
भार्य्या पुत्राश्च दासाश्च शिष्यो भ्राता च सोदरः ॥ ४५ ॥
कृतापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा।
पृष्ठे न मस्तके हन्याच्चौरस्याप्नोति किल्विषं ॥ ४६ ॥
रक्षास्वधिकृतैर्यस्तु प्रजाऽत्यर्थं विलुप्यते।
तेषां सर्वस्वमादाय राजा कुर्य्यात् प्रवासनं ॥ ४७ ॥
ये नियुक्ताः स्वकार्य्येषु हन्युः कार्य्याणि कर्म्मिणां।
निर्घृणाः क्रूरमनसस्तान्निःस्वान् कारयेन्नृपः ॥ ४८ ॥
अमात्यः प्राड्विवाको वा यः कुर्य्यात् कार्य्यमन्यथा।
तस्य सर्वस्वमादाय तं राजा विप्रवासयेत् ॥ ४९ ॥
गुरुतल्पे भगः कार्य्यः सुरापाणे सुराध्वजः।
स्तेयेषु श्वपदं विद्याद् ब्रह्महत्याशिरः पुमान् ॥ ५० ॥
शूद्रादीन् घातयेद्राजा पापान् विप्रान् प्रवासयेत्।
महापातकिनां वित्तं वरुणायोपपादयेत् ॥ ५१ ॥
ग्रामेष्वपि च ये केचिच्चौराणां भक्तदायकाः।
भाण्डारकोषदाश्चैव सर्वांस्तानपि घातयेत् ॥ ५२ ॥
राष्ट्रेषु राष्ट्राधिकृतान् सामन्तान् पापिनो हरेत्।
सन्धिं कृत्वा तु ये चौर्य्यं रात्रौ कुर्वन्ति तस्कराः ॥ ५३ ॥

तेषां च्छित्वा नृपो हस्तौ सोष्णे शूले निवेशयेत्।
तडागदेवतागारभेदकान् घातयेन्नृपः ॥ ५४ ॥
समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि ।
स हि कार्षापणन्दण्ड्यस्तममेध्यञ्च शोधयेत् ॥ ५५ ॥
प्रतिमासङ्क्रमभिदो दद्युः पञ्चशतानि ते।
समे च विषमं यो वा चरते मूल्यतोऽपि वा ॥ ५६ ॥
समाप्नुयान्नरः पूर्वं दमं मध्यममेव वा।
द्रव्यमादाय वणिजामनर्घेणावरुन्धतां ॥ ५७ ॥
राजा पृथक् पृथक् कुर्य्याद्दण्डमुत्तमसाहसं।
द्रव्याणां दूषको यश्च प्रतिच्छन्दकविक्रयी ॥ ५८ ॥
मध्यमं प्राप्नुयाद्दण्डं कूटकर्त्ता तथोत्तमं।
कलहापकृतं देयं दण्डश्च द्विगुणस्ततः ॥ ५९ ॥
अभक्ष्यभक्ष्ये विप्रे वा शूद्रे वा कृष्णलो दमः।
तुलाशासनकर्त्ता च कूटकृन्नाणकस्य च ॥ ६० ॥
एभिश्च व्यवहर्त्ता यः स दाप्यो दममुत्तमं।
विषाग्निदां पतिगुरुनिजापत्यप्रमापिणीं ॥ ६१ ॥
विकर्णकरनासौष्ठीं कृत्वा गोभिः प्रवासयेत्।
क्षेत्रवेश्मग्रामवनविदारकास्तथा नराः ॥ ६२ ॥
राजपत्न्यभिगामी च दग्धव्यास्तु कटाग्निना।
ऊनं वाप्यधिकं वापि लिखेद्यो राजशासनं ॥ ६३ ॥
पारजायिकचौरौ च मुञ्चतो दण्ड उत्तमः।
राजयानासनारोढुर्दण्ड उत्तमसाहसः ॥ ६४ ॥
यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः।

तमायान्तं पराजित्य(१) दण्डयेद् द्विगुणं दमं ॥ ६५ ॥
आह्वानकारी वध्यः स्यादनाहूतमथाह्वयन् ।
दाण्डिकस्य च यो हस्तादभिमुक्तः पलायते ॥ ६६ ॥
हीनः पुरुषकारेण तद् दद्याद्दाण्डिको धनं ।

इत्याग्नेये महापुराणे दण्डप्रणयनं नाम षड्विंशत्यधि-
कद्विशततमोऽध्यायः ॥

---

## अथ सप्तविंशत्यधिकद्विशततमोऽध्यायः ।

—:○:—

### युद्धयात्रा ।

पुष्कर उवाच । यदा मन्येत नृपतिराक्रन्देन बलीयसा ।
पार्ष्णिग्राहोऽभिभूतो मे तदा यात्रां प्रयोजयेत् ॥ १ ॥
पुष्टा योधा भृता भृत्याः प्रभूतञ्च बलं मम ।
मूलरक्षासमर्थोऽस्मि तैर्गत्वा(२) शिविरे व्रजेत् ॥ २ ॥
शत्रोर्वा व्यसने यायात् दैवाद्यैः पीडितं परं ।
भूकम्पो यान्दिशं याति याञ्च केतुर्व्यदूषयत् ॥ ३ ॥
विद्विष्टनाशकं सैन्यं सम्भूतान्तःप्रकोपनं(३) ।
शरीरस्फुरणे धन्ये तथा सुस्वप्नदर्शने ॥ ४ ॥
निमित्ते शकुने धन्ये जाते शत्रुपुरं व्रजेत् ।

---

१ पुनर्जित्वेति ग०, घ०, ङ० च ।     २ नैर्गत्वा इति पाठः ।
३ सम्भूतान्तःप्रकोपदमिति घ०, ङ० च ।

पदातिनागबहुलां सेनां प्रावृषि योजयेत् ॥ ५ ॥
हेमन्ते शिशिरे चैव रथवाजिसमाकुलां।
चतुरङ्गबलोपेतां वसन्ते वा शरन्मुखे(१) ॥ ६ ॥
सेना पदातिबहुला शत्रून् जयति सर्वदा।
अङ्गदक्षिणभागे तु शस्तं प्रस्फुरणं भवेत् ॥ ७ ॥
न शस्तन्तु तथा वामे पृष्ठस्य हृदयस्य च।
लाञ्छनं पिटकश्चैव विज्ञेयं स्फुरणं तथा ॥ ८ ॥
विपर्ययेणाभिहितं सव्ये स्त्रीणां शुभं भवेत्।

इत्याग्नेये महापुराणे यात्रा नाम सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥

## अथाष्टाविंशत्यधिकद्विशततमोऽध्यायः।

—:०:—

स्वप्नाध्यायः।

पुष्कर उवाच। स्वप्नं शुभाशुभं वक्ष्ये दुःस्वप्नहरणन्तथा।
नाभिं विनान्यत्र गात्रे तृणवृक्षसमुद्भवः ॥ १ ॥
चूर्णनं मूर्ध्नि कांस्यानां मुण्डनं नग्नता तथा।
मलिनाम्बरधारित्वमभ्यङ्गः पङ्कदिग्धता ॥ २ ॥
उच्चात् प्रपतनञ्चैव विवाहो गीतमेव च।
तन्त्रीवाद्यविनोदश्च दोलारोहणमेव च ॥ ३ ॥
अर्जनं पद्मलोहानां सर्पाणामथ मारणं।

१ शरद्यपीति ख०, ङ० च।

रक्तपुष्पद्रुमाणाञ्च चण्डालस्य तथैव च ॥ ४ ॥
वराहश्वखरोष्ट्राणां तथा चारोहणक्रिया ।
भक्षणं पक्षिमांसानां तैलस्य कृसरस्य च(१) ॥ ५ ॥
मातुः प्रवेशो जठरे चितारोहणमेव च ।
शक्रध्वजाभिपतनं पतनं शशिसूर्य्ययोः ॥ ६ ॥
दिव्यान्तरीक्षभौमानामुत्पातानाञ्च दर्शनं ।
देवद्विजातिभूपानां गुरूणाङ्कोप एव च ॥ ७ ॥
नर्त्तनं हसनञ्चैव विवाहो गीतमेव च(२) ।
तन्त्रीवाद्यविहीनानां वाद्यानामपि वादनं ॥ ८ ॥
स्रोतोवहाधोगमनं स्नानं गोमयवारिणा ।
पङ्कोदकेन च तथा मषीतोयेन वाप्यथ ॥ ९ ॥
आलिङ्गनं कुमारीणां पुरुषाणाञ्च मैथुनं(३) ।
हानिश्चैव स्वगात्राणां विरेको वमनक्रिया ॥ १० ॥
दक्षिणाशाप्रगमनं व्याधिनाभिभवस्तथा ।
फलानामुपहानिश्च धातूनां भेदनं तथा ॥ ११ ॥
गृहाणाञ्चैव पतनं गृहसम्मार्जनन्तथा ।
क्रीडा पिशाचक्रव्यादवानरान्त्यनरैरपि ॥ १२ ॥
परादभिभवश्चैव तस्माच्च व्यसनोद्भवः ।
काषायवस्त्रधारित्वं तद्वस्त्रैः क्रीडनं तथा(४) ॥ १३ ॥

---

१ तन्त्रीवाद्यविनोदेत्यादि, तैलस्य कृसरस्य-चेत्यन्तः पाठः क० ख० पुस्तकद्वये नास्ति ।

२ विवाहोत्सव एव चेति क० ।

३ नाशात्मैव च मैथुनमिति क० ।

४ हानिश्चैवेत्यादि, क्रीडनं तथे-त्यन्तः पाठः क० पुस्तके नास्ति ।

स्नेहपानावगाहो च रक्तमाल्यानुलेपनं ।
इत्यधन्यानि स्वप्नानि तेषामकथनं शुभं ॥ १४ ॥
भूयश्च स्वपनं तद्वत् कार्यं स्नानं द्विजार्चनं ।
तिलैर्होमो हरिब्रह्मशिवार्कगणपूजनं ॥ १५ ॥
तथा स्तुतिप्रपठनं पुंसूक्तादिजपस्तथा ।
स्वप्नास्तु प्रथमे यामे(¹) संवत्सरविपाकिनः ॥ १६ ॥
षड्भिर्मासैर्द्वितीये तु त्रिभिर्मासैस्त्रियामिकाः ।
चतुर्थे त्वर्द्धमासेन दशाहादरुणोदये ॥ १७ ॥
एकस्यामथ चेद्रात्रौ शुभं वा यदि वाऽशुभं ।
पश्चाद्दृष्टस्तु यस्तत्र तस्य पाकं विनिर्दिशेत् ॥ १८ ॥
तस्मात्तु शोभने स्वप्ने पश्चात्स्वापो न शस्यते ।
शैलप्रासादनागाश्ववृषभारोहणं हितं ॥ १९ ॥
द्रुमाणां श्वेतपुष्पाणां गमने च तथा द्विज ।
द्रुमतृणोद्भवो नाभौ तथा च बहुबाहुता ॥ २० ॥
तथा च बहुशीर्षत्वं फलितोद्भव एव च ।
सुशुक्लमाल्यधारित्वं सुशुक्लाम्बरधारिता ॥ २१ ॥
चन्द्रार्कताराग्रहणं परिमार्जनमेव च ।

सुराऽधिरमद्यानां पानं चीरस्य वाप्यथ।
अस्त्रैर्विचेष्टनं भूमौ निर्मलं गगनं तथा॥ २५॥
मुखेन दोहनं शस्तं महिषीणां तथा गवां।
सिंहीनां हस्तिनीनाञ्च वडवानां तथैव च॥ २६॥
प्रसादो देवविप्रेभ्यो गुरुभ्यश्च तथा शिव।
अम्भसा चाभिषेकस्तु गवां शृङ्गच्युतेन च॥ २७॥
चन्द्राद् भ्रष्टेन वा राम ज्ञेयं राज्यप्रदं हि तत्।
राज्याभिषेकश्च तथा छेदनं शिरसोऽप्यथ॥ २८॥
मरणं वह्निलाभश्च वह्निदाहो गृहादिषु।
लब्धिश्च राजलिङ्गानां तन्त्रीवाद्याभिवादनं॥ २९॥
यस्तु पश्यति स्वप्नान्ते राजानं कुञ्जरं हयं।
हिरण्यं वृषभङ्गाश्च कुटुम्बस्तस्य वर्द्धते॥ ३०॥
वृषेभगृहशैलाग्रवृक्षारोहणरोदनं।
घृतविष्ठानुलेपो वा अगम्यागमनं तथा॥ ३१॥
सितवस्त्रं प्रसन्नाम्भः फली वृक्षो नभोऽमलं।

इत्याग्नेये महापुराणे स्वप्नाध्यायो नाम अष्टाविंशत्यधिक-
द्विशततमोऽध्यायः॥

अथ एकोनत्रिंशदधिकद्विशततमोऽध्यायः।

अङ्गारं गुडसर्जौ च(१) मुण्डाभ्यक्तञ्च नग्नकं ।
अयः पङ्कं चर्म्मकेशौ उन्मत्तञ्च नपुंसकं ॥ २ ॥
चण्डालश्वपचाद्यानि नरा बन्धनपालकाः ।
गर्भिणी स्त्री च विधवाः पिण्याकादीनि वै मृतं ॥ ३ ॥
तुषभस्मकपालास्थिभिन्नभाण्डमशस्तकं ।
अशस्तो वाद्यशब्दश्च भिन्नभैरवझर्झरः ॥ ४ ॥
एहीति पुरतः शब्दः शस्यते न तु पृष्ठतः ।
गच्छेति पश्चाच्छब्दोऽग्र्यः पुरस्तात्तु विगर्हितः ॥ ५ ॥
क्व यासि तिष्ठ मा गच्छ किन्ते तत्र गतस्य च ।
अनिष्टशब्दा मृत्यर्थं क्रव्यादश्च ध्वजादिगः ॥ ६ ॥
स्खलनं वाहनानाञ्च शस्त्रभङ्गस्तथैव च ।
शिरोघातश्च द्वाराद्यैश्छत्रवासादिपातनं ॥ ७ ॥
हरिमभ्यर्च्य संस्तुत्य स्यादमङ्गल्यनाशनं ।
द्वितीयन्तु ततो दृष्ट्वा विरुद्धं प्रविशेद्गृहं ॥ ८ ॥
श्वेताः सुमनसः श्रेष्ठाः पूर्णकुम्भो महोत्तमः ।
मांसं मत्स्या दूरशब्दा वृद्ध एकः पशुस्त्वजः ॥ ९ ॥
गावस्तुरङ्गमा नागा देवाश्च ज्वलितोऽनलः ।
दूर्वार्द्रगोमयं वेश्या स्वर्णरूप्यञ्च रत्नकं ॥ १० ॥
वचासिद्धार्थकौषध्यो मुद्ग आयुधखड्गकं ।
छत्रं पीठं राजलिङ्गं शवं रुदितवर्जितं ॥ ११ ॥
फलं घृतं दधि पयो अक्षतादर्शमाक्षिकं ।
शङ्ख इक्षुः शुभं वाक्यं भक्तवादित्रगीतकं ॥ १२ ॥

१ गुडसर्पौ चर्मि ञ०, ख०, ज० च।

गम्भीरमेघस्तनितं तडित्तुष्टिश्च मानसी ।
एकतः सर्वलिङ्गानि मनसस्तुष्टिरेकतः ॥ १२ ॥

इत्याग्नेये महापुराणे माङ्गल्याध्यायो नाम एकोनत्रिंश-
दधिकद्विशततमोऽध्यायः ॥

---

## अथ त्रिंशदधिकद्विशततमोऽध्यायः ।

—:○:—

### शकुनानि ।

पुष्कर उवाच । तिष्ठतो गमने प्रश्ने पुरुषस्य शुभाशुभं ।
निवेदयन्ति शकुना देशस्य नगरस्य च ॥ १ ॥
सर्वः पापफलो दीप्तो निर्द्दिष्टो दैवचिन्तकैः ।
शान्तः शुभफलश्चैव दैवज्ञैः समुदाहृतः ॥ २ ॥
षट्प्रकारा विनिर्द्दिष्टा शकुनानाञ्च दीप्तयः ।
वेलादिग्देशकरणरुतजातिविभेदतः ॥ ३ ॥
पूर्वा पूर्वा च विज्ञेया सा तेषां बलवत्तरा ।
दिवाचरो रात्रिचरस्तथा रात्रौ दिवाचरः ॥ ४ ॥
क्रूरेषु दीप्ता विज्ञेया ऋक्षलग्नग्रहादिषु ।
धूमिता सा तु विज्ञेया याङ्गमिष्यति भास्करः ॥ ५ ॥
यस्यां स्थितः सा ज्वलिता मुक्ता चाङ्गारिणी मता ।
एतास्तिस्रः स्मृता दीप्ताः पञ्च शान्तास्तथापराः ॥ ६ ॥

दीप्तायान्दिशि दिग्दीप्तं शकुनं परिकीर्त्तितं ।
ग्रामेऽरण्या वने ग्राम्यास्तथा निन्दितपादपः ॥ ७ ॥
देशे चैवाशुभे ज्ञेयो देशदीप्तो द्विजोत्तमः ।
क्रियादीप्तो विनिर्द्दिष्टः स्वजात्यनुचितक्रियः ॥ ८ ॥
रुतदीप्तश्च कथितो भिन्नभैरवनिस्वनः ।
जातिदीप्तस्तथा ज्ञेयः केवलं मांसभोजनः ॥ ९ ॥
दीप्ताच्छान्तो विनिर्द्दिष्टः सर्व्वैर्भेदैः प्रयत्नतः ।
मिश्रैर्मिश्रो विनिर्द्दिष्टस्तस्य वाच्यं फलाफलं ॥ १० ॥
गोश्वोष्ट्रगर्दभश्वानः सारिका गृहगोधिका ।
चटका भासकूर्माद्याः कथिता ग्रामवासिनः ॥ ११ ॥
अजाविशुकनागेन्द्राः कोलो महिषवायसौ ।
ग्राम्यारण्या विनिर्द्दिष्टाः सर्व्वेऽन्ये वनगोचराः(१) ॥ १२ ॥
मार्जारकुक्कुटौ ग्राम्यौ तौ चैव वनगोचरौ ।
तयोर्भवति विज्ञानं नित्यं वै रूपभेदतः ॥ १३ ॥
गोकर्णशिखिचक्राह्वखरहारीतवायसाः ।
कुल्लाहकुक्कुभश्येनफेरुखञ्जनवानराः ॥ १४ ॥
शतघ्नचटकश्यामचासश्येनकपिञ्जलाः ।
तित्तिरिः शतपत्रश्च कपोतश्च तथा त्रयः ॥ १५ ॥
खञ्जरीटकदात्यूहशुकराजीवकुक्कुटाः ।
भारद्वाजश्च सारङ्ग इति ज्ञेया दिवाचराः ॥ १६ ॥
वागुर्युलूकशरभक्रौञ्चाः शशककच्छपाः ।
लोमाशिकाः पिङ्गलिकाः कथिता रात्रिगोचराः ॥ १७ ॥

---

१ सर्व्वेऽन्ये च वनेचरा इति ख० ।

हंसाश्च मृगमार्जारनकुलर्चभुजङ्गमाः ।
वृकारिसिंहव्याघ्रोष्ट्रग्रामशूकरमानुषाः ॥ १८ ॥
श्वाविट्वृषभगोमायुवृककोकिलसारसाः ।
तुरङ्गकौपीनमरा गोधा ह्युभयचारिणः ॥ १९ ॥
बलप्रस्थानयोः सर्वे पुरस्तात्सङ्घचारिणः ।
जयावहा विनिर्दिष्टाः पश्चान्निधनकारिणः ॥ २० ॥
गृहाद्गृह्य यदा चासौ व्याहरेत् पुरतः स्थितः ।
नृपावमानं वदति वामः कलहभोजने ॥ २१ ॥
याने तद्दर्शनं शस्तं सव्यमङ्गस्य वाप्यथ ।
चौरैर्मोषमथाख्याति मयूरो भिन्ननिस्वनः ॥ २२ ॥
प्रयातस्याग्रतो राम मृगः प्राणहरो भवेत् ।
ऋक्षाखुजम्बुकव्याघ्रसिंहमार्जारगर्दभाः ॥ २३ ॥
प्रतिलोमास्तथा राम खरश्च विकृतस्वनः ।
वामः कपिञ्जलः श्रेष्ठस्तथा दक्षिणसंस्थितः ॥ २४ ॥
पृष्ठतो निन्दितफलस्तित्तिरिस्तु न शस्यते ।
एणा वराहाः पृषता वामा भूत्वा तु दक्षिणाः ॥ २५ ॥
भवन्त्यर्थकरा नित्यं विपरीता विगर्हिताः ।
वृषाश्वजम्बुकव्याघ्राः सिंहमार्जारगर्दभाः[१] ॥ २६ ॥
वाञ्छितार्थकरा ज्ञेया दक्षिणाद्वामतो गताः ।
शिवा श्यामाननाच्छूच्छूः पिङ्गला गृहगोधिका ॥ २७ ॥
शूकरो परपुष्टा च पुन्नामानश्च वामतः ।

---

१ प्रतिलोमास्तथेत्यादि", सिंहमार्जारगर्दभा इत्यन्तः पाठः ख० भ० पुस्तकद्वये नास्ति ।

स्त्रीसंज्ञा भासकारूपकपिश्रीकर्णच्छिन्नकराः ॥ २८ ॥
कपिश्रीकर्णपिप्पीका(१) रुरुश्येनाश्च दक्षिणाः ।
जातीपाहिमशक्रोडगोधानां कीर्त्तनं शुभं ॥ २९ ॥
ततः सन्दर्शनं नेष्टं प्रतीपं वानरर्क्षयोः ।
कार्य्यकृद्बली शकुनः प्रस्थितस्य हि योऽन्वहं ॥ ३० ॥
भवेत्तस्य फलं वाच्यं तदेव दिवसं बुधैः ।
मत्ता भक्ष्यार्थिनो बाला वैरसक्तास्तथैव च ॥ ३१ ॥
सीमान्तमभ्यन्तरिता विज्ञेया निष्फला द्विज ।
एकद्वित्रिचतुर्भिस्तु शिवा धन्या रुतैर्भवेत् ॥ ३२ ॥
पञ्चभिश्च तथा षड्भिरधन्या परिकीर्त्तिता ।
सप्तभिश्च तथा धन्या निष्फला परतो भवेत् ॥ ३३ ॥
नृणां रोमाञ्चजननी वाहनानां भयप्रदा ।
ज्वालानना सूर्य्यमुखी विज्ञेया भयवर्द्धनी ॥ ३४ ॥
प्रथमं सारङ्गे दृष्टे शुभे देशे शुभं वदेत् ।
संवत्सरं मनुष्यस्य अशुभे च शुभं तथा ॥ ३५ ॥
तथाविधन्नरः पश्येत्सारङ्गं प्रथमेऽहनि ।
आत्मनश्च तथात्वेन ज्ञातव्यं वत्सरं फलं ॥ ३६ ॥

इत्याग्नेये महापुराणे शकुनानि नाम त्रिंशदधि-
कद्विशततमोऽध्यायः ॥

---

१ [illegible]

## अथैकत्रिंशदधिकद्विशततमोऽध्यायः।

—:०:—

शकुनानि।

पुष्कर उवाच। विशन्ति येन मार्गेण वायसा बहवः पुरं।
तेन मार्गेण रुद्धस्य पुरस्य ग्रहणं भवेत्॥ १ ॥
सेनायां यदि वासार्थे निविष्टो वायसो रुवन्।
वामो भयातुरस्त्रस्तो भयं वदति दुस्तरं(१) ॥ २ ॥
छायाङ्गवाहनोपानच्छत्रवस्त्रादिकुट्टने।
मृत्युस्तत्पूजने पूजा तदिष्टकरणे शुभं॥ ३ ॥
प्रोषितागमकृत्काकः कुर्वन् द्वारि गतागतं।
रक्तं दग्धं गृहे द्रव्यं क्षिपन्वह्निनिवेदकः॥ ४ ॥
न्यसेद्रक्तं पुरस्ताच्च निवेदयति बन्धनं।
पीतं द्रव्यं तथा रुक्म रूप्यमेव तु भार्गव॥ ५ ॥
यद्वैवोपनयेद् द्रव्यं तस्य लब्धिं विनिर्दिशेत्।
द्रव्यं वापनयेद्यस्तु तस्य हानिं विनिर्दिशेत्॥ ६ ॥
पुरतो धनलब्धिः स्यादाममांसस्य छर्दने।
भूलब्धिः स्यान्मृदः क्षेपे राज्यं रत्नार्पणे महत्॥ ७ ॥
यातुः काकोऽनुकूलस्तु क्षेमः कर्मक्षमो भवेत्।
न त्वर्थसाधको ज्ञेयः प्रतिकूलो भयावहः॥ ८ ॥
सम्मुखेऽभ्येति विरुवन् यात्राघातकरो भवेत्।
वामः काकः स्मृतो धन्यो दक्षिणोऽर्थविनाशकृत्(१) ॥ ९ ॥

---

१ दुष्प्रदमिति क०, ख० च। २ दक्षिणोऽर्थविनाशकृदिति ग०, घ०,च० च।

वामोऽनुलोमगः श्रेष्ठो मध्यमो दक्षिणः स्मृतः ।
प्रतिलोमगतिर्वामो गमनप्रतिषेधकृत् ॥ १० ॥
निवेदयति यात्रार्थमभिप्रेतं गृहे गतः(१) ।
एकाक्षिचरणस्त्वर्कं वीक्षमाणो भयावहः ॥ ११ ॥
कोटरे वासमानय महानर्थकरो भवेत् ।
न शुभस्तूषरे काकः पङ्काङ्गः स तु शस्यते ॥ १२ ॥
अमेध्यपूर्णवदनः काकः सर्वार्थसाधकः(२) ।
ज्ञेयाः पतत्रिणोऽन्येऽपि काकवद् भृगुनन्दन ॥ १३ ॥
स्कन्धावारापसव्यस्थाः श्वानो विप्रविनाशकाः ।
इन्द्रस्थाने नरेन्द्रस्य पुरेशस्य तु गोपुरे ॥ १४ ॥
अन्तर्गृहे गृहेशस्य मरणाय भवेच्छ्वन् ।
यस्य जिघ्रति वामाङ्गं तस्य स्यादर्थसिद्धये ॥ १५ ॥
भयाय दक्षिणं चाङ्गं तथा भुजमदक्षिणं ।
यात्राघातकरो यातुर्भवेत् प्रतिमुखागतः ॥ १६ ॥
मार्गावरोधको मार्गे चौरान् वदति भार्गव ।
अलाभोऽस्थिमुखः पापो रज्जुचीरमुखस्तथा ॥ १७ ॥
सोपानत्कमुखो धन्यो मांसपूर्णमुखोऽपि च ।
अमङ्गल्यमुखद्रव्यं केशश्चैवाशुभं तथा ॥ १८ ॥
अवमूत्र्याग्रतो याति यस्य तस्य भयं भवेत् ।
उच्चावमूत्रा व्रजति शुभं देशन्तथा द्रुमं ॥ १९ ॥

---

१ मवार्थमभि इत्यादि, गृहे गत इत्यन्त पाठः ख० पुस्तके नास्ति ।
२ कोटरे इत्यादि, सर्वार्थसाधक इत्यन्त पाठः ख० पुस्तके नास्ति ।

मङ्गल्यञ्च तथा द्रव्यं तस्य स्यादर्थसिद्धये।
श्ववच्च राम विज्ञेयास्तथा वै जम्बुकादयः॥ २०॥
भयाय स्वामिनो ज्ञेयमनिमित्तं रुतङ्गवां।
निशि चौरभयाय स्याद्विकृतं मृत्यवे तथा॥ २१॥
शिवाय स्वामिनो रात्रौ बलीवर्द्दो नदन् भवेत्।
उत्सृष्टवृषभो राज्ञो विजयं सम्प्रयच्छति॥ २२॥
अभयं भक्षयन्त्यश्च गावो दत्तास्तथा स्वकाः।
त्यक्तस्नेहाः स्ववत्सेषु गर्भक्षयकरा मताः॥ २३॥
भूमिं पादैर्विनिघ्नन्त्यो दीना भीता भयावहाः।
आर्द्राङ्गो हृष्टरोमाश्च शृङ्गलग्नमृदः शुभाः॥ २४॥
महिष्यादिषु चाप्येतत् सर्वं वाच्यं विजानता।
आरोहणं तथाऽन्येन सपर्य्याणस्य(१) वाजिनः॥ २५॥
जलोपवेशनं नेष्टं भूमौ च परिवर्त्तनं।
विपत्करन्तुरङ्गस्य सुप्तं वाप्यनिमित्ततः॥ २६॥
यवमोदकयोर्द्वेषस्त्वकस्माच्च न शस्यते।
वदनाद्रुधिरोत्पत्तिर्वेपनं न च शस्यते॥ २७॥
क्रीडन् बकैः कपोतैश्च सारिकाभिर्मृतिं वदेत्।
साश्रुनेत्रो जिह्वया च पादलेही विनष्टये(२)॥ २८॥
वामपादेन च तथा विलिखंश्च वसुन्धरां।
स्वपेद्वा वामपार्श्वेन दिवा वा न शुभप्रदः॥ २९॥
भयाय स्यात् सकृन्मूत्री तथा निद्राविलाननः।

---

१ सपर्य्याणस्येति पाठः।    २ विनाशकृदिति क०, ट० च।

आरोहणं न चेद्दद्यात् प्रतीपं वा गृहं व्रजेत् ॥ २० ॥
यात्राविघातमाचष्टे वामपार्श्वं तथा स्पृशन् ।
हेषमाणः शत्रुयोधं पादस्पर्शी जयावहः ॥ २१ ॥
ग्रामे व्रजति नागश्चेन् मैथुनं देशहा भवेत् ।
प्रसूता नागवनिता मत्ता चान्ताय भूपतेः ॥ २२ ॥
आरोहणं नचेद्दद्यात् प्रतीपं वा गृहं व्रजेत् ।
मदं वा वारणो जह्याद्राजघातकरी भवेत् ॥ २३ ॥
वामं दक्षिणपादेन पादमाक्रमते शुभः ।
दक्षिणञ्च तथा दन्तं परिमार्ष्टि करेण च ॥ २४ ॥
वृषोऽश्वः कुञ्जरो वापि रिपुसैन्यगतोऽशुभः ।
खण्डमेघातिवृष्ट्या तु सेना नाशमवाप्नुयात् ॥ २५ ॥
प्रतिकूलग्रहर्क्षाश्च तथा सम्मुखमारुतात्(१) ।
यात्राकाले रणे वापि छत्रादिपतनं भयं ॥ २६ ॥
हृष्टा नरायानुलोमा ग्रहा वै जयलक्षणं ।
काकैर्योधाभिभवनं क्रव्याद्भिर्मण्डलक्षयः ॥ २७ ॥
प्राचीपश्चिमकैशानी सौम्या प्रेष्ठा शुभा च दिक् ।

इत्याग्नेये महापुराणे शकुनानि नाम एकविंशदधिक-
द्विशततमोऽध्यायः ॥

---

१ वाम दक्षिणेत्यादि, सम्मुखमारुतादित्यन्त पाठः ख॰ पुस्तके नास्ति ।

# अथ द्वात्रिंशदधिकद्विशततमोऽध्यायः।

—:○:—

यात्रामण्डलचिन्तादिः।

पुष्कर उवाच। सर्वयात्रां प्रवक्ष्यामि राजधर्मसमाश्रयात्।
अस्तङ्गते नीचगते विकले रिपुराशिगे॥ १॥
प्रतिलोमे च विध्वस्ते शुक्रे यात्रां विसर्जयेत्(१)।
प्रतिलोमे बुधे यात्रां दिक्पतौ च तथा ग्रहे॥ २॥
वैधृतौ च व्यतीपाते नागे च शकुनौ तथा।
चतुष्पादे च किन्तुघ्ने तथा यात्रां विवर्जयेत्॥ ३॥
विपत्तारे नैधने च प्रत्यरौ चाथ जन्मनि।
गण्डे विवर्जयेद्यात्रां रिक्तायाञ्च तिथावपि॥ ४॥
उदीची च तथा प्राची(२) तयोरैक्यं प्रकीर्त्तितं।
पश्चिमा दक्षिणा या दिक् तयोरैक्यं तथैव च॥ ५॥
वाय्वग्निदिक्समुद्भूतं परिघन्न तु लङ्घयेत्।
आदित्यचन्द्रयोरास्तु दिवसाश्च न शोभनाः॥ ६॥
कृत्तिकाद्यानि पूर्वेण मघाद्यानि च याम्यतः।
मैत्राद्यान्यपरे चाथ वासवाद्यानि चाप्युदक्॥ ७॥
सर्वद्वाराणि शस्तानि छायामानं वदामि ते।
आदित्ये विंशतिर्ज्ञेयाश्चन्द्रे षोडश कीर्त्तिताः॥ ८॥
भौमे पञ्चदशैवोक्ताश्चतुर्दश तथा बुधे।

---

१ विवर्जयेत् इति क०, ख०, घ०, ज० च। २ दिक् पूर्वा या तयोरेकीति ज०१

त्रयोदश तथा जीवे शुक्रे द्वादश कीर्त्तिताः ॥ ९ ॥
एकादश तथा सौरे सर्वकर्मसु कीर्त्तिताः ।
जन्मलग्ने शक्रचापे सम्मुखे न व्रजेन्नरः ॥ १० ॥
शकुनादौ शुभे यायाज्जयाय हरिमास्मरन् ।
वक्ष्ये मण्डलचिन्तां ते कर्त्तव्यं राजरक्षणं ॥ ११ ॥
स्वाम्यमात्यं तथा दुर्गं कोषो दण्डस्तथैव च ।
मित्रजनपदश्चैव राज्यं सप्ताङ्गमुच्यते ॥ १२ ॥
सप्ताङ्गस्य तु राज्यस्य विघ्नकर्तॄन् विनाशयेत् ।
मण्डलेषु च सर्वेषु वृद्धिः कार्या महीक्षिता ॥ १३ ॥
आत्ममण्डलमेवात्र प्रथमं मण्डलं भवेत् ।
सामन्तास्तस्य विज्ञेया रिपवो मण्डलस्य तु ॥ १४ ॥
उपेतस्तु सुहृज्ज्ञेयः शत्रुमित्रमतः परं ।
मित्रमित्रं ततो ज्ञेयं मित्रमित्ररिपुस्ततः ॥ १५ ॥
एतत्पुरस्तात् कथितं पश्चादपि निबोध मे ।
पार्ष्णिग्राहस्ततः पश्चात्ततस्त्वाक्रन्द उच्यते(१) ॥ १६ ॥
आसारस्तु ततोऽन्यः स्यादाक्रन्दासार उच्यते ।
जिगीषोः शत्रुयुक्तस्य विमुक्तस्य तथा द्विज ॥ १७ ॥
नात्रापि निश्चयः शक्यो वक्तुं मनुजपुङ्गव ।
निग्रहानुग्रहे शक्तो मध्यस्थः परिकीर्त्तितः ॥ १८ ॥
निग्रहानुग्रहे शक्तः सर्वेषामपि यो भवेत् ।
उदासीनः स कथितो बलवान् पृथिवीपतिः ॥ १९ ॥

---

१ [illegible]

न कस्यचिद्रिपुर्मित्रं कारणाच्छत्रुमित्रके।
मण्डलं तव सम्प्रोक्तमेतद् द्वादशराजकं॥ २० ॥
त्रिविधा रिपवो ज्ञेयाः कुल्यानन्तरकृत्रिमाः।
पूर्वपूर्वो गुरुस्तेषां दुश्चिकित्स्यतमो मतः॥ २१ ॥
अनन्तरोऽपि यः शत्रुः सोऽपि मे कृत्रिमो मतः।
पार्ष्णिग्राहो भवेच्छत्रोर्मित्राणि रिपवस्तथा॥ २२ ॥
पार्ष्णिग्राहमुपायेन शमयेच्च तथा स्वकं।
मित्रेण शत्रोरुच्छेदं प्रशंसन्ति पुरातनाः॥ २३ ॥
मित्रञ्च शत्रुतामेति सामन्तत्वादनन्तरं।
शत्रुं जिगीषुरुच्छिन्द्यात्([1]) स्वयं शक्नोति चेद्यदि॥ २४॥
प्रतापवृद्धौ तेनापि नामित्राज्जायते भयं।
यथास्य नोद्विजेल्लोको विश्वासश्च यथा भवेत्॥ २५ ॥
जिगीषुर्धर्मविजयी तथा लोकं वशनयेत्।

इत्याग्नेये महापुराणे यात्रामण्डलचिन्तादिर्नाम द्वात्रिं-
शदधिकद्विशततमोऽध्यायः॥

## अथ त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः।

---

### षाड्गुण्यं।

पुष्कर उवाच। सामभेदौ मया प्रोक्तौ दानदण्डौ तथैव च।
दण्डः स्वदेशे कथितः परदेशे ब्रवीमि ते॥ १ ॥

---

[1] शत्रु जिहीर्षुरौच्छन्द्यादिति क०, ख० च।

प्रकाशश्चाप्रकाशश्च द्विविधो दण्ड उच्यते।
लुण्ठनं ग्रामघातश्च शस्यघातोऽग्निदीपनं ॥ २ ॥
प्रकाशोऽथ विषं वह्निर्विविधैः पुरुषैर्बधः।
दूषणञ्चैव साधूनामुदकानाञ्च दूषणं ॥ ३ ॥
दण्डप्रणयणं प्रोक्तमुपेक्षां शृणु भार्गव।
यदा मन्येत नृपती रणे न मम विग्रहः ॥ ४ ॥
अनर्थायानुबन्धः स्यात् सन्धिना च तथा भवेत्।
सामलब्धास्पदश्चात्र दानञ्चार्थक्षयङ्करं ॥ ५ ॥
भेददण्डानुबन्धः स्यात्तदोपेक्षां समाश्रयेत्।
न चायं मम शक्नोति किञ्चित् कर्त्तुमुपद्रवं ॥ ६ ॥
न चाहमस्य शक्नोमि तत्रोपेक्षां समाश्रयेत्।
अवज्ञोपहतस्तत्र राज्ञा कार्य्यो रिपुर्भवेत् ॥ ७ ॥
मायोपायं प्रवक्ष्यामि उत्पातैरनृतैश्चरन्।
शत्रोरुद्वेजनं शत्रोः शिविरस्थस्य पक्षिणः ॥ ८ ॥
स्थूलस्य तस्य पुच्छस्थां कृत्वोल्कां विपुलां द्विज।
विसृजेच्च ततश्चैवमुल्कापातं प्रदर्शयेत् ॥ ९ ॥
एवमन्ये दर्शनीया उत्पाता बहवोऽपि च।
उद्वेजनं तथा कुर्य्यात् कुहकैर्विविधैर्द्विषां ॥ १० ॥
सांवत्सरास्तापसाश्च नाशं ब्रूयुः परस्य च।
जिगीषुः पृथिवीं राजा तेन चोद्वेजयेत् परान् ॥ ११ ॥
देवतानां प्रसादश्च कीर्त्तनीयः परस्य तु।
आगतन्नोऽमित्रबलं प्रहरध्वमभीतवत् ॥ १२ ॥
एवं ब्रूयाद्रणे प्राप्ते भग्ना. सर्वे परे इति।

क्ष्वेडाः किलकिलाः कार्य्या वाच्यः शत्रुर्हतस्तथा ॥ १३ ॥
देवाश्रयाद्धर्षितो राजा सन्नद्धः समरं प्रति ।
इन्द्रजालं प्रवक्ष्यामि इन्द्रं कालेन दर्शयेत् ॥ १४ ॥
चतुरङ्गं बलं राजा सहायार्थं दिवौकसां ।
बलन्तु दर्शयेत् प्राप्तं रक्तवृष्टिं चरेद्रिपौ ॥ १५ ॥
छिन्नानि रिपुशीर्षाणि प्रासादाग्रेषु दर्शयेत्(१) ।
षाड्गुण्यं सम्प्रवक्ष्यामि तद्वरौ सन्धिविग्रहौ ॥ १६ ॥
सन्धिश्च विग्रहश्चैव यानमासनमेव च ।
द्वैधीभावः संश्रयश्च षड्गुणाः परिकीर्त्तिताः ॥ १७ ॥
पणबन्धः स्मृतः सन्धिरपकारस्तु विग्रहः ।
जिगीषोः शत्रुविषये यानं यात्राऽभिधीयते ॥ १८ ॥
विग्रहेण स्वके देशे स्थितिरासनमुच्यते ।
बलार्द्धेन प्रयाणन्तु द्वैधीभावः स उच्यते ॥ १९ ॥
उदासीनो मध्यमो वा संश्रयात्संश्रयः स्मृतः ।
समेन सन्धिरन्वेष्योऽहीनेन च बलीयसा ॥ २० ॥
हीनेन विग्रहः कार्य्यः स्वयं राज्ञा बलीयसा ।
तत्रापि शुद्धपार्ष्णिस्तु बलीयांसं समाश्रयेत् ॥ २१ ॥
आसीनः कर्म्मविच्छेदं शक्तः कर्त्तुं रिपोर्यदा ।
अशुद्धपार्ष्णिरासीत विगृह्य वसुधाधिपः ॥ २२ ॥
अशुद्धपार्ष्णिर्बलवान् द्वैधीभावं समाश्रयेत् ।
बलिना विगृहीतस्तु(२) योऽसन्देहेन पार्थिवः ॥ २३ ॥
संश्रयस्तेन वक्तव्यो गुणानामधमो गुणः ।

---

१ प्रासादाग्रे प्रदर्शयेदिति ख० ।  २ विगृहीतस्तु इति ख० ।

बहुक्षयव्ययायासं(१) तेषां यानं प्रकीर्त्तितं ॥ २४ ॥
बहुलाभकरं पश्चात्तदा राजा समाश्रयेत्(२) ।
सर्वशक्तिविहीनस्तु तदा कुर्य्यात्तु संश्रयं ॥ २५ ॥

इत्याग्नेये महापुराणे उपायषड्गुणादिर्नाम त्रयस्त्रिं-
शदधिकद्विशततमोऽध्यायः ॥

---

## अथ चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ।

—:○:—

### प्रात्यहिकराजकर्म ।

पुष्कर उवाच । अजस्रं कर्म वक्ष्यामि दिनं प्रति यदाचरेत् ।
द्विमुहूर्त्तावशेषायां रात्रौ निद्रां त्यजेन्नृपः ॥ १ ॥
वाद्यवन्दिस्वनैर्गीतैः पश्येद् गूढांस्ततो नरान् ।
विज्ञायन्ते न ये लोकास्तदीया इति केनचित् ॥ २ ॥
आयव्ययस्य श्रवणं ततः कार्य्यं यथाविधि ।
वेगोत्सर्गं ततः कृत्वा राजा स्नानगृहं व्रजेत् ॥ ३ ॥
स्नानं कुर्य्यान्नृपः पश्चाद्दन्तधावनपूर्वकं ।
कृत्वा सन्ध्यां ततो जप्यं वासुदेवं प्रपूजयेत् ॥ ४ ॥
वह्नौ पवित्रान् जुहुयात् तर्पयेदुदकैः पितॄन् ।

---

१ [illegible] ख०, ग०, ङ०, च० ।
२ [illegible] क० पुस्तके [illegible]

दद्यात्सकाञ्चनीं धेनुं द्विजाशीर्वादसंयुतः ॥ ५ ॥
अनुलिप्तोऽलङ्कृतश्च मुखं पश्येच्च दर्पणे ।
ससुवर्णे घृते राजा शृणुयाद्दिवसादिकं ॥ ६ ॥
औषधं भिषजोक्तं च मङ्गलालम्भनञ्चरेत् ।
पश्येद् गुरुं तेन दत्ताशीर्वादोऽथ व्रजेत्सभां ॥ ७ ॥
तत्रस्थो ब्राह्मणान् पश्येदमात्यान्मन्त्रिणस्तथा ।
प्रकृतीश्च महाभाग प्रतीहारनिवेदिताः ॥ ८ ॥
श्रुत्वेतिहास कार्य्याणि कार्य्याणां कार्य्यनिर्णयम् ।
व्यवहारन्ततः पश्येन्मन्त्रं कुर्य्यात्तु मन्त्रिभिः ॥ ९ ॥
नैकेन सहितः कुर्य्यान्न कुर्य्याद्बहुभिः सह ।
न च मूर्खैर्न्नचानाप्तैर्गुप्तं न प्रकटं चरेत्(१) ॥ १० ॥
मन्त्रं स्वधिष्ठितं कुर्य्याद्येन राष्ट्रं न बाधते ।
आकारग्रहणे राज्ञो मन्त्ररक्षा परा मता(२) ॥ ११ ॥
आकारैरिङ्गितैः प्राज्ञा मन्त्रं गृह्णन्ति पण्डिताः ।
सांवत्सराणां वैद्यानां मन्त्रिणां वचने रतः ॥ १२ ॥
राजा विभूतिमाप्नोति(३) धारयन्ति नृपं हि ते ।
मन्त्रं कृत्वाथ व्यायामचक्रे याने च शस्त्रके ॥ १३ ॥
नि सत्त्वादो नृपः स्नातः पश्येद्विष्णुं सुपूजितम् ।
हुतञ्च पावकं पश्येद्विप्रान् पश्येत्सुपूजितान् ॥ १४ ॥

---

१ गुप्तं चाप्रकटं चरेदिति ग०, ज०, ढ० इत्यस्य स्थाने आकारेङ्गितसत्त्वं का-
र्य्यंकार्य्यविचक्षण इति ढ० पुस्तके पाठः ।
२ आकार ग्रहणे राज्ञो मन्त्ररक्षा परा मता ३ राजाधिभूतिमाप्नोतीति ज० ।

भूषितो भोजनङ्कुर्य्याद् दानाद्यैः सुपरीक्षितं ।
भुक्त्वा गृहीतताम्बूलो वामपार्श्वेन संस्थितः(१) ॥ १५ ॥
शास्त्राणि चिन्तयेद् दृष्ट्वा योधान् कोष्ठायुधं गृहं ।
सन्ध्यास्य पश्चिमां सन्ध्यां कार्य्याणि च विचिन्त्य तु ॥ १६ ॥
चरान् सम्प्रेष्य भुक्त्वाथमन्तःपुरचरो भवेत् ।
वाद्यगीतैर्रक्षितोऽन्यैरेवंनित्यञ्चरेन्नृपः ॥ १७ ॥

इत्याग्नेये महापुराणे आजस्रिकं नाम चतुस्त्रिंशदधिक-
द्विशततमोऽध्यायः ॥

## अथ पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ।

—:०:—

### रणदीक्षा ।

पुष्कर उवाच । यात्राविधानपूर्वन्तु वक्षे साङ्ग्रामिकं विधिं ।
सप्ताहेन यदा यात्रा भविष्यति महीपतेः ॥ १ ॥
पूजनीयो हरिः शम्भुर्मोदकाद्यैर्विनायकः ।
द्वितीयेऽहनि दिक्पालान् सम्पूज्य शयनञ्चरेत् ॥ २ ॥
शय्यायां वा तदग्रेऽथ देवान् प्रार्थ्य मनुं जपेत् ।
नमः शम्भो त्रिनेत्राय रुद्राय वरदाय च ॥ ३ ॥
वामनाय विरूपाय स्वप्नाधिपतये नमः ।

१ संविशेदिति ख०।

भगवन्देवदेवेश शूलवृषवाहन ॥ ४ ॥
दृष्टानिष्टं ममाचक्ष्व स्वप्ने सुप्तस्य शाश्वत ।
यत्नायतो दूरमिति पुरोधा मन्त्रमुच्चरेत् ॥ ५ ॥
तृतीयेऽहनि दिक्पालान् रुद्रांस्तान् दिक्पतीन्यजेत् ।
ग्रहान् यजेच्चतुर्थेऽह्नि पञ्चमे चाश्विनौ यजेत् ॥ ६ ॥
मार्गे या देवतास्तासामृष्यादीनाञ्च पूजनं ।
दिव्यान्तरीक्षभौमस्थदेवानाञ्च तथा बलिः ॥ ७ ॥
रात्रौ भूतगणानाञ्च वासुदेवादिपूजनं ।
भद्रकाल्याः श्रियः कुर्य्यात् प्रार्थयेत् सर्वदेवताः ॥ ८ ॥
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ।
नारायणोऽब्जजो विष्णुर्नारसिंहो वराहकः ॥ ९ ॥
शिव ईशस्तत्पुरुषो(१) ह्यघोरो राम सत्वजः(२) ।
सूर्य्यः सोमः कुजश्चान्द्रिजीवशुक्रशनैश्चराः ॥ १० ॥
राहुः केतुर्गणपतिः सेनानी चण्डिका ह्युमा ।
लक्ष्मीः सरस्वती दुर्गा ब्रह्माणीप्रमुखा गणाः ॥ ११ ॥
रुद्रा इन्द्रादयो वह्निर्नागास्तार्क्ष्योऽपरे सुराः ।
दिव्यान्तरीक्षभूमिष्ठा विजयाय भवन्तु मे ॥ १२ ॥
मर्दयन्तु रणे शत्रून्(३) सम्यक्पूजोपहारकं ।
सपुत्रमातृभृत्योऽहं(४) देवा वः शरणङ्गतः ॥ १३ ॥

---

१ तत्पुरुष इति ख० ।
२ रामेत्यादि, सत्वज इत्यन्त पाठ ग० पुस्तके नास्ति ।
३ मर्दयन्तु च मे शत्रूनिति ख०,ग० घ ।
४ भवन्तु मां प्रभूत्वोऽहमिति ख०, ङ० च ।

चमूनां पृष्ठतो गत्वा रिपुनाशा नमोऽस्तु वः(१)।
विनिवृत्तः प्रदास्यामि(२) दत्तादभ्यधिकं बलिं ॥ १४ ॥
षष्ठेऽह्नि विजयस्नानं कर्त्तव्यं चाभिषेकवत्।
यात्रादिने सप्तमे च पूजयेच्च त्रिविक्रमं ॥ १५ ॥
नीराजनोक्तमन्त्रैश्च आयुधं वाहनं यजेत्।
पुण्याहजयशब्देन मन्त्रमेतन्निशामयेत् ॥ १६ ॥
दिव्यान्तरीक्षभूमिष्ठाः सन्त्वायुर्दाः सुराश्च ते।
देवसिद्धिं प्राप्नुहि त्वं देवयात्रास्तु(३) सा तव ॥१७॥
रक्षन्तु देवताः सर्वा इति श्रुत्वा नृपो व्रजेत्।
गृहीत्वा सशरञ्चापं धनुर्नागेति मन्त्रतः ॥ १८ ॥
तद्विष्णोरिति जप्त्वा च दद्याद्रिपुमुखे पदं।
दक्षिणं पदं द्वात्रिंशद्दिक्षु प्राच्यादिषु क्रमात्॥ १९॥
नागं रथं हयञ्चैव धुर्य्यांश्चैवारुहेत् क्रमात्।
आरुह्य वाद्यैर्गच्छेत्तु पृष्ठतो नावलोकयेत् ॥ २० ॥
क्रोशमात्रं गतस्तिष्ठेत् पूजयेद्देवता द्विजान्।
परदेशं व्रजेत् पश्चादात्मसैन्यं हि पालयन् ॥ २१ ॥
राजा प्राप्य विदेशन्तु(४) देशपालन्तु पालयेत्(५)।
देवानां पूजनं कुर्य्यान्न छिन्द्यादायमत्र तु ॥ २२ ॥
नावमानयेत्तद्देशमानागत्य स्वपुरं पुनः।

---

१ चमूनां पृष्ठतोऽपि रिपुनाशो भवेदिति ख०।
२ जित्वा शत्रून् प्रदास्यामीति ख०।
३ देवा यात्रास्त्विति ख०।
४ प्राप्तविदेशन्तु इति ख०, ग०, ङ०, च।
५ देशाचारन्तु पालयेदिति ग०। देशाचारञ्च पालयेदिति ख०, घ०, ङ०, ज०, च०।

जयं प्राप्यार्च्चयेद्देवान् दद्याद्दानानि पार्थिवः ॥ २३ ॥
द्वितीयेऽहनि सङ्ग्रामो भविष्यति यदा तदा।
स्नापयेद्गजमश्वादि यजेद्देवं नृसिंहकं ॥ २४ ॥
छत्रादिराजलिङ्गानि शस्त्राणि निशि वै गणान्।
प्रातर्नृसिंहकं पूज्य वाहनाद्यमशेषतः ॥ २५ ॥
पुरोधसा हुतं पश्येद्वह्निं हुत्वा द्विजान्यजेत्।
गृहीत्वा सशरश्चापं गजाद्यारुह्य वै व्रजेत् ॥ २६ ॥
देशे त्वदृश्यः शत्रूणां कुर्य्यात् प्रकृतिकल्पनां।
संहतान् योधयेदल्पान् कामं विस्तारयेद्बहून् ॥ २७ ॥
सूचीमुखमनीकं स्यादल्पानां बहुभिः सह।
व्यूहाः प्राण्यङ्गरूपाश्च द्रव्यरूपाश्च कीर्त्तिताः ॥ २८ ॥
गरुडो मकरव्यूहश्चक्रः श्येनस्तथैव च।
अर्द्धचन्द्रश्च वज्रश्च शकटव्यूह एव च ॥ २९ ॥
मण्डलः सर्व्वतोभद्रः सूचीव्यूहश्च ते नव।
व्यूहानामथ सर्व्वेषां पञ्चधा सैन्यकल्पना ॥ ३० ॥
द्वौ पक्षावनुपक्षौ द्वाववश्यं पञ्चमं भवेत्।
एकेन यदि वा द्वाभ्यां भागाभ्यां युद्धमाचरेत् ॥ ३१ ॥
भागत्रयं स्थापयेत्तु तेषां रक्षार्थमेव च।
न व्यूहकल्पना कार्य्या राज्ञो भवति कर्हिचित् ॥ ३२ ॥
मूलच्छेदे विनाशः स्यान्न युध्येच्च स्वयन्नृपः।
सैन्यस्य पश्चात्तिष्ठेत्तु क्रोशमात्रे महीपतिः ॥ ३३ ॥
भग्नसन्धारणं तत्र योधानां परिकीर्त्तितं।
प्रधानभङ्गे सैन्यस्य नावस्थानं विधीयते ॥ ३४ ॥

न संहतान विरलान्योधान् व्यूहे प्रकल्पयेत् ।
आयुधानान्तु सम्मर्दो यथा न स्यात् परस्परं ॥ ३५ ॥
भेत्तुकामः परानीकं संहतैरेव भेदयेत् ।
भेद्यरक्ष्याः परेणापि कर्त्तव्याः संहतास्तथा ॥ ३६ ॥
व्यूहं भेदावहं कुर्य्यात् परव्यूहेषु चेच्छया ।
गजस्य पादरक्षार्थाश्चत्वारस्तु तथा द्विज ॥ ३७ ॥
रथस्य चाश्वाश्चत्वारः समास्तस्य च चर्म्मिणः ।
धन्विनश्चर्म्मिभिस्तुल्याः पुरस्ताच्चर्म्मिणो रणे ॥ ३८ ॥
पृष्ठतो धन्विनः पश्चाद्धन्विनान्तुरगा रथाः ।
रथानां कुञ्जराः पश्चाद्दातव्याः पृथिवीक्षिता ॥ ३९ ॥
पदातिकुञ्जराश्वानां धर्म्मकार्य्यं प्रयत्नतः ।
शूराः प्रमुखतो देयाः स्कन्धमात्रप्रदर्शनं ॥ ४० ॥
कार्य्यं भीरुसङ्घेन शत्रुविद्रावकारकं(१) ।
दारयन्ति पुरस्तात्तु न देया भीरवः पुरः ॥ ४१ ॥
प्रोत्साहयन्त्येव रणे भीरून् शूराः पुरःस्थिताः ।
प्रांशवः शुकनासाश्च ये चाजिह्मेक्षणा(२) नराः ॥ ४२ ॥
संहतभ्रूयुगाश्चैव क्रोधना कलहप्रियाः ।
नित्यहृष्टाः प्रहृष्टाश्च शूरा ज्ञेयाश्च कामिनः ॥ ४३ ॥
संहतानां हतानां च रणापनयनक्रिया(३) ।
प्रतियुद्धं गजानाञ्च तोयदानादिकञ्च यत् ॥ ४४ ॥

---

१ शत्रुविद्रावकार्य्यमिति क०, ख०, ग०, ङ० च ।
२ ये च जिह्मेक्षणा इति क०, ख०, ग०, ङ० च ।
३ रणापनयनक्रियेति ङ० ।

आयुधानयनं चैव पत्तिकर्म्म विधीयते।
रिपूणां भेत्तुकामानां स्वसैन्यस्य रक्षणं॥ ४५॥
भेदनं संहतानाञ्च चर्म्मिणां कर्म्म कीर्त्तितं।
विमुखीकरणं युद्धे धन्विनाञ्च तथोच्यते॥ ४६॥
दूरापसरणं यानं सुहतस्य तथोच्यते।
त्रासनं रिपुसैन्यानां रथकर्म्म तथोच्यते॥ ४७॥
भेदनं संहतानाञ्च भेदानामपि संहतिः।
प्राकारतोरणाट्टालद्रुमभङ्गश्च सद्गजे॥ ४८॥
पत्तिभूर्विषमा ज्ञेया रथाश्वस्य तथा समा।
सकर्दमा च नागानां युद्धभूमिरुदाहृता॥ ४९॥
एवं विरचितव्यूहः कृतपृष्ठदिवाकरः।
तथानुलोमशुक्रार्किदिक्पालमृदुमारुतः॥ ५०॥
योधानुत्तेजयेत्सर्व्वान्नामगोत्रावदानतः।
भोगप्राप्त्या च विजये स्वर्गप्राप्त्या मृतस्य च॥ ५१॥
जित्वारीन् भोगसम्प्राप्तिः मृतस्य च परा गतिः।
निष्कृतिः स्वामिपिण्डस्य नास्ति युद्धसमा गतिः॥ ५२॥
शूराणां रक्तमायाति तेन पापन्त्यजन्ति ते।
घातादिदुःखसहनं रणे तत् परमन्तपः॥ ५३॥
वराप्सरःसहस्राणि यान्ति शूरं रणे मृतं।
स्वामी सुकृतमादत्ते भग्नानां विनिवर्त्तिनां॥ ५४॥
ब्रह्महत्याफलं तेषां तथा प्रोक्तं पदे पदे।
त्यक्त्वा सहायान् यो गच्छेद्देवास्तस्य विनष्टये॥ ५५॥
अश्वमेधफलं प्रोक्तं शूराणामनिवर्त्तिनां।

धर्म्मनिष्ठे जयो राज्ञि(१) योद्धव्याश्च समाः समैः ॥ ५६ ॥
गजाद्यैश्च गजाद्याश्च न हन्तव्याः पलायिनः ।
न प्रेक्षकाः प्रविष्टाश्च अशस्त्राः पतितादयः ॥ ५७ ॥
शान्ते निद्राभिभूते च अर्द्धोत्तीर्णे नदीवने ।
दुर्द्दिने कूटयुद्धानि शत्रुनाशार्थमाचरेत् ॥ ५८ ॥
बाहू प्रगृह्य विक्रोशेद्भग्ना भग्नाः परे इति ।
प्राप्तं मित्रं बलं भूरि नायकोऽत्र निपातितः ॥ ५९ ॥
सेनानीर्निहतश्चायं भूपतिश्चापि विद्रुतः ।
विद्रुतानान्तु योधानां सुखं घातो विधीयते ॥ ६० ॥
धूपाश्च देया धर्म्मज्ञ तथा च परमोहनाः ।
पताकाश्चैव सम्भारो वादित्राणां भयावहः ॥ ६१ ॥
सम्प्राप्य विजयं युद्धे देवान्विप्रांश्च संयजेत्(२) ।
रत्नानि राजगामीनि अमात्येन कृते रणे ॥ ६२ ॥
तस्य स्त्रियो न कस्यापि रक्ष्यास्ताश्च परस्य च ।
शत्रुं प्राप्य रणे मुक्तं पुत्रवत् परिपालयेत् ॥ ६३ ॥
पुनस्तेन न योद्धव्यं देशाचारादि पालयेत् ।
ततश्च स्वपुरं प्राप्य ध्रुवे भे प्रविशेद् गृहं ॥ ६४ ॥
देवादिपूजनं कुर्य्याद्रक्षेद्योधकुटुम्बकं ।
संविभागं परार्थैः कुर्य्याद् भृत्यजनस्य च ॥ ६५ ॥
रणदीक्षा मयोक्ता ते जयाय नृपतेर्ध्रुवा ।

इत्याग्नेये महापुराणे रणदीक्षा नाम पञ्चत्रिंशदधिक-
द्विशततमोऽध्यायः ॥

---

१ धर्म्मनिष्ठो धर्म्मे स्थित इति ख०, ग० च।
२ देवान् [illegible] इति ख०, ग० च।

# अथ षट्त्रिंशदधिकद्विशततमोऽध्याय.।

—:०:—

## श्रीस्तोत्रं ।

पुष्कर उवाच । राज्यलक्ष्मीस्थिरत्वाय यथेन्द्रेण पुरा श्रियः ।
स्तुतिः कृता तथा राजा जयार्थं स्तुतिमाचरेत् ॥ १ ॥
इन्द्र उवाच । नमस्ये सर्वलोकानां(१) जननीमब्धिसम्भवां(२) ।
श्रियमुन्निद्रपद्माक्षीं विष्णुवक्षःस्थलस्थितां ॥ २ ॥
त्वं सिद्धिस्त्वं स्वधा स्वाहा सुधा त्वं लोकपावनि ।
सन्ध्या रात्रिः प्रभा भूतिर्मेधा श्रद्धा सरस्वती ॥ ३ ॥
यज्ञविद्या महाविद्या गुह्यविद्या च शोभने ।
आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी ॥ ४ ॥
आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिस्त्वमेव च ।
सौम्या सौम्यैर्जगद्रूपैस्त्वयैतद्देवि पूरित ॥ ५ ॥
का त्वन्या त्वामृते देवि सर्वयज्ञमयं वपुः ।
अध्यास्ते देव देवस्य योगिचिन्त्यं गदाभृतः ॥ ६ ॥
त्वया देवि परित्यक्तं सकलं भुवनत्रयं ।
विनष्टप्रायमभवत् त्वयेदानीं समेधितं ॥ ७ ॥
दारा. पुत्रास्तथागारं सुहृद्धान्यधनादिकं ।
भवत्येतन्महाभागे नित्यं त्वद्वीक्षणात् नृणां ॥ ८ ॥

---

१ सर्वभूतानामिति ख०, ग०, घ० च। २ जननीमम्बुसम्भवामिति ग०।

शरीरारोग्यमैश्वर्यमरिपक्षक्षयः सुखं(१) ।
देवि त्वद्दृष्टिदृष्टानां पुरुषाणां न दुर्लभं ॥ ९ ॥
त्वमम्बा सर्वभूतानां देवदेवो हरिः पिता ।
त्वयैतद्विष्णुना चाम्ब जगद्व्याप्तं चराचरं ॥ १० ॥
मानं कोषं तथा कोष्ठं मा गृहं मा परिच्छदं ।
मा शरीरं कलत्रञ्च त्यजेथाः सर्व्वपावनि ॥ ११ ॥
मा पुत्रान्मा सुहृद्वर्गान्मा पशून्मा विभूषणं ।
त्यजेथा मम देवस्य(२) विष्णोर्वक्षःस्थलालये(३) ॥ १२ ॥
सत्त्वेन सत्यशौचाभ्यां तथा शीलादिभिर्गुणैः ।
त्यज्यन्ते ते नरा सद्यः सन्त्यक्ता ये त्वयामले ॥ १३ ॥
त्वयावलोकिताः सद्यः शीलाद्यैरखिलैर्गुणैः ।
कुलैश्वर्य्यैश्च युज्यन्ते पुरुषा निर्गुणा अपि ॥ १४ ॥
स श्लाघ्यः स गुणी धन्यः स कुलीनः स बुद्धिमान् ।
स शूरः स च विक्रान्तो यस्त्वया देवि वीक्षितः ॥ १५ ॥
सद्यो वैगुण्यमायान्ति शीलाद्याः सकला गुणाः ।
पराङ्मुखी जगद्धात्री यस्य त्वं विष्णुवल्लभे ॥ १६ ॥
न ते वर्णयितुं शक्ता गुणान् जिह्वापि वेधसः ।
प्रसीद देवि पद्माक्षि नास्मांस्त्याक्षीः कदाचन ॥ १७ ॥
पुष्कर उवाच । एवं स्तुता ददौ श्रीश्च वरमिन्द्राय चेप्सितं ।
सुस्थिरत्वं च राज्यस्य सङ्ग्रामविजयादिकं ॥ १८ ॥

---

१ [illegible] ख०, ग०, घ०, ञ० च । [illegible] ग० ।
२ देवदेवस्येति ग० ।
३ [illegible] इति ख०, ग०, घ०, ञ० च ।

स्वस्तोत्रपाठश्रवणकर्त्तॄणां भुक्तिमुक्तिदं।
श्रीस्तोत्रं सततं तस्मात् पठेच्च शृणुयान्नरः॥ १८॥

इत्याग्नेये महापुराणे श्रीस्तोत्रं नाम षट्त्रिंशदधिक-
द्विशततमोऽध्यायः॥

---

## अथ सप्तत्रिंशदधिकद्विशततमोऽध्यायः।

—:○:—

### रामोक्तनीतिः।

अग्निरुवाच। नीतिस्ते पुष्करोक्ता तु रामोक्ता लक्ष्मणाय या।
जयाय तां प्रवक्ष्यामि शृणु धर्म्मादिवर्द्धनीं॥ १॥

राम उवाच। न्यायेनार्ज्जनमर्थस्य वर्द्धनं रक्षणं चरेत्।
सत्पात्रप्रतिपत्तिश्च राजवृत्तं चतुर्विधं॥ २॥
नयस्य विनयो मूलं विनयः शास्त्रनिश्चयात्।
विनयो हीन्द्रियजयस्तैर्युक्तः पालयेन्महीं॥ ३॥
शास्त्रं प्रज्ञा धृतिर्दाक्ष्यं प्रागल्भ्य धारयिष्णुता।
उत्साहो वाग्मितौदार्य्यमापत्कालसहिष्णुता(१)॥ ४॥
प्रभावः शुचिता मैत्री त्यागः सत्यं कृतज्ञता।
कुलं शीलं दमश्चेति गुणाः सम्पत्तिहेतवः॥ ५॥
प्रकीर्णविषयारण्ये धावन्तं विप्रमाथिनं।

---

१ वाग्मिता दार्ढ्यमापत्कालसहिष्णुतेति ख०, घ०, ज०, झ० च।

ज्ञानाङ्कुशेन कुर्वीत वश्यमिन्द्रियदन्तिनं ॥ ६ ॥
कामः क्रोधस्तथा लोभो हर्षो मानो मदस्तथा।
षड्वर्गमुत्सृजेदेनमस्मिंस्त्यक्ते सुखी नृपः ॥ ७ ॥
आन्वीक्षिकीं त्रयीं वार्त्तां दण्डनीतिं च पार्थिवः।
तद्विद्यैस्तत्क्रियोपेतैश्चिन्तयेद्विनयान्वितः ॥ ८ ॥
आन्वीक्षिक्यार्थविज्ञानं धर्म्माधर्म्मौ त्रयीस्थितौ।
अर्थानर्थौ तु वार्त्तायां दण्डनीत्यां नयानयौ ॥ ९ ॥
अहिंसा सूनृता वाणी सत्यं शौचं दया क्षमा।
वर्णिनां लिङ्गिनां चैव सामान्यो धर्म उच्यते ॥ १० ॥
प्रजाः समनुगृह्णीयात् कुर्य्यादाचारसंस्थितिं।
वाक् सूनृता दया दानं हीनोपगतरक्षणं(१) ॥ ११ ॥
इति वृत्तं सतां साधुहितं सत्पुरुषव्रतं।
आधिव्याधिपरीताय अद्य श्वो वा विनाशिने ॥ १२ ॥
को हि राजा शरीराय धर्म्मापेतं समाचरेत्।
न हि स्वसुखमन्विच्छन्(२) पीडयेत् कृपणं जनं ॥ १३ ॥
कृपणः पीड्यमानो हि मन्युना हन्ति पार्थिवं।
क्रियतेऽभ्यर्हणीयाय स्वजनाय यथाञ्जलिः ॥ १४ ॥
ततः साधुतरः कार्य्यो दुर्जनाय शिवार्थिना।
प्रियमेवाभिधातव्यं सत्सु नित्यं द्विषत्सु च ॥ १५ ॥
देवास्ते प्रियवक्तारः पशवः क्रूरवादिनः।
शुचिरास्तिक्यपूतात्मा पूजयेद्देवताः सदा ॥ १६ ॥

१ [illegible]   २ [illegible]

देवतावद् गुरुजनमात्मवच्च सुहृज्जनं ।
प्रणिपातेन हि गुरुं सतोऽनूपानुचेष्टितैः ॥ १७ ॥
कुर्व्वीताभिमुखान् भृत्यैर्देवान् सुकृतकर्म्मणा ।
सद्भावेन हरेन्मित्रं सम्भ्रमेण च वान्धवान् ॥ १८ ॥
स्त्रीभृत्यान् प्रेमदानाभ्यां दाक्षिण्येनेतरं जनं ।
अनिन्दा परकृत्येषु स्वधर्म्मपरिपालनं ॥ १९ ॥
कृपणेषु दयालुत्वं सर्व्वत्र मधुरा गिरः ।
प्राणैरप्युपकारित्वं मित्रायाव्यभिचारिणे ॥ २० ॥
गृहागते परिष्वङ्गः शक्त्या दानं सहिष्णुता ।
स्वसमृद्धिष्वनुत्सेकः परवृद्धिष्वमत्सरः ॥ २१ ॥
अपरोपतापि वचनं मौनव्रतचरिष्णुता(१) ।
बन्धुभिर्बद्धसंयोगः स्वजने चतुरस्रता ॥ २२ ॥
उचितानुविधायित्वमिति वृत्तं महात्मनां ।

इत्याग्नेये महापुराणे रामोक्तनीतिर्नाम सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥

## अथाष्टत्रिंशदधिकद्विशततमोऽध्यायः ।

—:०:—

राजधर्माः ।

राम उवाच । स्वाम्यमात्यञ्च राष्ट्रञ्च दुर्गं कोषो बलं सुहृत् ।
परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते ॥ १ ॥

१ अपरोपतापिवचनमित्यादि, मौनव्रतचरिष्णुतेत्यन्त पाठः ज० पुस्तके नास्ति ।

राज्याङ्गानां वरं राष्ट्रं साधनं पालयेत् सदा(१)।
कुलं शीलं वयः सत्त्वं दाक्षिण्यं क्षिप्रकारिता ॥ २ ॥
अविसंवादिता सत्यं वृद्धसेवा कृतज्ञता।
दैवसम्पन्नता बुद्धिरक्षुद्रपरिवारता ॥ ३ ॥
शक्यसामन्तता चैव तथा च दृढभक्तिता(२)।
दीर्घदर्शित्वमुत्साहः शुचिता स्थूललक्षिता ॥ ४ ॥
विनीतत्वं धार्मिकता साधोश्च नृपतेर्गुणाः।
प्रख्यातवंशमक्रूरं लोकसङ्ग्राहिणं शुचिं ॥ ५ ॥
कुर्व्वीतात्महिताकाङ्क्षी परिवारं महीपतिः।
वाग्मी प्रगल्भः स्मृतिमानुदग्रो बलवान् वशी ॥ ६ ॥
नेता दण्डस्य निपुणः कृतशिल्पपरिग्रहः(३)।
पराभियोगप्रसहः सर्वदुष्टप्रतिक्रिया(४) ॥ ७ ॥
परच्छिद्रान्ववेक्षी च (५)सन्धिविग्रहतत्त्ववित्।
गूढमन्त्रप्रचारज्ञो देशकालविभागवित् ॥ ८ ॥
आदाता सम्यगर्थानां विनियोक्ता च पात्रवित्।
क्रोधलोभभयद्रोहदम्भचापलवर्ज्जितः ॥ ९ ॥
परोपतापपैशून्यमात्सर्य्यानृतातिगः।
वृद्धोपदेशसम्पन्नः शक्तो मधुरदर्शनः ॥ १० ॥
गुणानुरागस्थितिरात्मसम्पद्गुणाः स्मृताः।
कुलीनाः शुचयः शूराः श्रुतवन्तोऽनुरागिणः(६) ॥ ११ ॥

१ राज्याङ्गानामित्यादि, पालयेत् सदेत्यन्तः पाठः ग० पुस्तके नास्ति।
२ महच्च दृढभक्तितेति ग०।
३ कृतशिल्पपरिग्रह इति ख०, ज० च।
४ सर्वदुष्टप्रतिक्रिय इति ख०, घ०, ज० च।
५ परच्छिद्रान्ववेक्षी चेति ख०, ज० च।
६ श्रुतवन्तोऽनुरागिन इति ग०।

दण्डनीतेः प्रयोक्तारः सचिवाः स्युर्महीपतेः।
सुविग्रहो जानपदः कुलशीलकलान्वितः॥ १२॥
वाग्मी प्रगल्भश्चक्षुष्मानुत्साही प्रतिपत्तिमान्।
स्तम्भचापलहीनश्च मैत्रः क्लेशसहः शुचिः॥ १३॥
सत्यसत्त्वधृतिस्थैर्य्यप्रभावारोग्यसंयुतः।
कृतशिल्पश्च(१) दक्षश्च प्रज्ञावान् धारणान्वितः॥ १४॥
दृढभक्तिरकर्त्ता च वैराणां सचिवो भवेत्।
स्मृतिस्तत्परतार्थेषु चित्तज्ञो ज्ञाननिश्चयः(२)॥ १५॥
दृढता मन्त्रगुप्तिश्च मन्त्रिसम्पत् प्रकीर्त्तिता।
त्रय्यां च दण्डनीत्यां च कुशलः स्यात् पुरोहितः॥ १६॥
अथर्ववेदविहितं कुर्य्याच्छान्तिकपौष्टिकं।
साधुतैषाममात्यानां तद्विद्यैः सह बुद्धिमान्॥ १७॥
चक्षुष्मत्तां च शिल्पञ्च परीक्षेत गुणद्वयं(३)।
स्वजनेभ्यो विजानीयात् कुलं स्थानमवग्रहं॥ १८॥
परिकर्म्मसु दक्षञ्च विज्ञानं धारयिष्णुतां।
गुणत्रयं परीक्षेत प्रागल्भ्यं प्रीतितां तथा(४)॥ १९॥
कथायोगेषु बुध्येत वाग्मित्वं सत्यवादितां।
उत्साहं च प्रभावं च तथा क्लेशसहिष्णुतां(५)॥ २०॥
धृतिं चैवानुरागं च स्थैर्य्यञ्चापदि लक्षयेत्।
भक्तिं मैत्रीं च शौचं च जानीयाद्व्यवहारतः॥ २१॥

---

१ क्षतशीलश्चेति ख०।
२ चित्तज्ञो ज्ञाननिश्चय इति ख०।
३ परीक्षेत गुणत्रयमिति ख०।
४ प्रतिभां मत्येति ख०।
५ स्वजनेभ्य इत्यादि, क्लेशसहिष्णुतामित्यन्तः पाठः ख० पुस्तके नास्ति।

संवासिभ्यो बलं सत्त्वमारोग्यं शीलमेव च(१) ।
अस्तब्धतामचापल्यं वैराणां चाप्यकीर्त्तनं ॥ २२ ॥
प्रत्यक्षतो विजानीयाद् भद्रतां क्षुद्रतामपि ।
फलानुमेयाः सर्वत्र परोक्षगुणवृत्तयः ॥ २३ ॥
शस्याकरवती पुण्या खनिद्रव्यसमन्विता ।
गोहिता भूरिसलिला पुण्यैर्जनपदैर्युता ॥ २४ ॥
रम्या सकुञ्जरबला वारिस्थलपथान्विता ।
अदेवमातृका चेति शस्यते भूरिभूतये ॥ २५ ॥
शूद्रकारुवणिक्प्रायो महारम्भः कृषीवलः ।
सानुरागो रिपुद्वेषी पीडासहकरः पृथुः ॥ २६ ॥
नानादेश्यैः समाकीर्णो धार्मिकः पशुमान् बली ।
ईदृक्जनपदः शस्तोऽमूर्खव्यसनिनायकः(२) ॥ २७ ॥
पृथुसीमं महाख्यातगुप्तप्राकारतोरणं(३) ।
पुरं समावसेच्छैलसरिन्मरुवनाश्रयं ॥ २८ ॥
जलवद्धान्यधनवद्दुर्गं कालसहं महत् ।
औदकं पार्वतं वार्क्षमैरिणं धान्विनं च षट् ॥ २९ ॥
ईप्सितद्रव्यसम्पूर्णः पितृपैतामहोचितः ।
धर्मार्जितो व्ययसहः कोषो धर्मादिवृद्धये ॥ ३० ॥
पितृपैतामहो वश्यः संहतो दत्तवेतनः ।
विख्यातपौरुषो जन्यः कुशलः शकुनैर्वृतः ॥ ३१ ॥
नानाप्रहरणोपेतो नानायुद्धविशारदः ।

१ [illegible] ३ [illegible]
२ [illegible]

नानायोधसमाकीर्णो नीराजितहयद्विपः ॥ ३२ ॥
प्रवासायासदुःखेषु युद्धेषु च कृतश्रमः।
अद्वैधक्षत्रियप्रायो दण्डो दण्डवतां मतः ॥ ३३ ॥
योगविज्ञानसत्त्वाढ्यं महापक्षं प्रियम्वदं।
आयतिक्षममद्वैधं मित्रं कुर्वीत सत्कुल(१) ॥ ३४ ॥
दूरादेवाभिगमनं स्पष्टार्थहृदयानुगा।
वाक् सत्कृत्य प्रदानञ्च त्रिविधो मित्रसङ्ग्रहः ॥ ३५ ॥
धर्मकामार्थसंयोगो मित्रात्तु त्रिविधं फलं।
औरसं तत्र सम्बन्धं(२) तथा वंशक्रमागतं ॥ ३६ ॥
रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधं।
मित्रे गुणाः सत्यताद्याः समानसुखदुःखता ॥ ३७ ॥
वक्ष्येऽनुजीविनां वृत्तं सेवी सेवेत भूपतिं।
दक्षता भद्रता दार्ढ्यं क्षान्तिः क्लेशसहिष्णुता ॥ ३८ ॥
सन्तोषः शीलमुत्साहो मण्डयत्यनुजीविनं।
यथाकालमुपासीत राजानं सेवको नयात् ॥ ३९ ॥
परस्थानगमं क्रौर्य्यमौद्धत्यं मत्सरन्त्यजेत्।
विगृह्य कथनं भृत्यो न कुर्य्याज् ज्यायसा सह ॥ ४० ॥
गुह्यं मर्म्म च मन्त्रञ्च न च भर्त्तुः प्रकाशयेत्।
रक्ताद् वृत्तिं समीहेत विरक्तं सन्त्यजेन्नृपं ॥ ४१ ॥
अकार्य्ये प्रतिषेधश्च कार्य्ये चापि प्रवर्त्तनं।
सङ्क्षेपादिति सद्वृत्तं बन्धुमित्रानुजीविनां ॥ ४२ ॥

---

१ मित्रं कुर्वीत सत्क्रियमिति ख०।   २ तत्र सम्बद्धमिति ख०।

आजीव्यः सर्व्वसत्त्वानां राजा पर्ज्जन्यवद्भवेत्।
आयद्वारेषु चास्यर्थं धनं चाददतीति च ॥ ४३ ॥
कुर्य्यादुद्योगसम्पन्नानध्यक्षान् सर्वकर्म्मसु।
कृषिर्व्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनं ॥ ४४ ॥
खन्याकरबलादानं शून्यानां च निवेशनं।
अष्टवर्गमिमं राजा साधुवृत्तोऽनुपालयेत् ॥ ४५ ॥
आयुक्तिकेभ्यश्चौरेभ्यः पौरेभ्यो राजवल्लभात्।
पृथिवीपतिलोभाच्च प्रजानां पञ्चधा भयं ॥ ४६ ॥
अवेक्ष्यैतद्भयं काले आददीत करं नृपः।
अभ्यन्तरं शरीरं स्वं बाह्यं राष्ट्रञ्च(१) रक्षयेत्(२) ॥ ४७ ॥
दण्ड्यांस्तु दण्डयेद्राजा स्वं रक्षेच्च विषादितः।
स्त्रियः पुत्रांश्च शत्रुभ्यो विश्वसेन्न कदाचन ॥ ४८ ॥

इत्याग्नेये महापुराणे राजधर्म्मो नाम षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥

---

## अथोनचत्वारिंशदधिकद्विशततमोऽध्यायः।

—:०:—

### षाड्गुण्यं।

राम उवाच। मण्डलं चिन्तयेन् मुख्यं राजा द्वादशराजकं।
अरिर्म्मित्रमरेर्म्मित्रं मित्रमित्रमतः परं ॥ १ ॥

---

१ [illegible] इति क०, ख०, ज० च। २ रक्षयेदिति ख०।

तथारिमित्रमित्रञ्च विजिगीषोः पुरः स्मृताः(१) ।
पार्ष्णिग्राहः स्मृतः पश्चादाक्रन्दस्तदनन्तरं ॥ २ ॥
आसारावनयोश्चैवं विजिगीषोश्च मण्डलं ।
अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः ॥ ३ ॥
अनुग्रहे संहतयोर्निग्रहे व्यस्तयोः प्रभुः ।
मण्डलाद्वहिरेतेषामुदासीनो बलाधिकः ॥ ४ ॥
अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः ।
सन्धिञ्च विग्रहं यानमासनादि वदामि ते ॥ ५ ॥
बलवद्विगृहीतेन सन्धिं कुर्य्याच्छिवाय च ।
कपाल उपहारश्च सन्तानः सङ्गतस्तथा ॥ ६ ॥
उपन्यासः प्रतीकारः संयोगः पुरुषान्तरः ।
अदृष्टनर आदिष्ट आत्मामिष उपग्रहः ॥ ७ ॥
परिक्रमस्तथा छिन्नस्तथा च परदूषणं ।
स्कन्धोपनेयः सन्धिश्च सन्धयः षोडशेरिताः ॥ ८ ॥
परस्परोपकारश्च मैत्रः सम्बन्धकस्तथा(२) ।
उपहारश्च चत्वारस्तेषु मुख्याश्च सन्धयः ॥ ९ ॥
बालो वृद्धो दीर्घरोगस्तथा बन्धुबहिष्कृतः ।
भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा ॥ १० ॥
विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान् ।
अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः ॥ ११ ॥
दैवोपहतकश्चैव दैवनिन्दक एव च ।
दुर्भिक्षव्यसनोपेतो बलव्यसनसंकुलः ॥ १२ ॥

---

१ पुरः स्मृता इति ख, ङ च ।  २ [illegible]

स्वदेशस्थो बहुरिपुर्मुक्तः कालेन यश्च ह ।
सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी ॥ १३ ॥
एतैः सन्धिं न कुर्वीत विगृह्णीयात्तु केवलं ।
परस्परापकारेण पुंसां भवति विग्रहः ॥ १४ ॥
आत्मनोऽभ्युदयाकाङ्क्षी पीड्यमानः परेण वा ।
देशकालबलोपेतः प्रारभेतेह विग्रहं(१) ॥ १५ ॥
राज्यस्त्रीस्थानदेशानां ज्ञानस्य च बलस्य च ।
अपहारो(२) मदो मानः पीडा वैषयिकी तथा ॥ १६ ॥
ज्ञानात्मशक्तिधर्माणां(३) विघातो दैवमेव च ।
मित्रार्थञ्चापमानश्च तथा बन्धुविनाशनं ॥ १७ ॥
भूतानुग्रहविच्छेदस्तथा मण्डलदूषणं ।
एकार्थाभिनिवेशित्वमिति विग्रहयोनयः ॥ १८ ॥
सापत्न्यं वास्तुजं स्त्रीजं वाग्जातमपराधजं ।
वैरं पञ्चविधं प्रोक्तं साधनैः प्रशमयेत् ॥ १९ ॥
किञ्चित्फलं निष्फलं वा सन्दिग्धफलमेव च ।
तदात्वे दोषजननमायत्याञ्चैव निष्फलं ॥ २० ॥
आयत्याञ्च तदात्वे च दोषसञ्जननं तथा ।
अपरिज्ञातवीर्येण परेण स्तोभितोऽपि वा ॥ २१ ॥
परार्थं स्त्रीनिमित्तञ्च दीर्घकालं द्विजैः सह ।
अकालदैवयुक्तेन बलोद्धतसखेन च ॥ २२ ॥

---

१ प्रारभेत इत्यादि, विग्रहमित्यन्तः पाठः ख० पुस्तके नास्ति । २ अपहार इति ख० । ३ ज्ञानात्मशक्तिधर्माणामिति ख० ।

तदात्वे फलसंयुक्तमायत्यां फलवर्जितं।
आयत्यां फलसंयुक्तं तदात्वे निष्फलं तथा॥ २३॥
इतीमं षोडशविधन्नकुर्य्यादेव विग्रहं।
तदात्वायतिसंशुद्धं कर्म राजा सदाचरेत्॥ २४॥
हृष्टं पुष्टं बलं मत्वा स्वकीयाद्विपरीतकं।
मित्रमाक्रन्द आसारी यदा स्युर्दृढभक्तयः॥ २५॥
परस्य विपरीतञ्च तदा विग्रहमाचरेत्।
विगृह्य सन्धाय तथा सम्भूयाथ प्रसङ्गतः॥ २६॥
उपेक्षया च निपुणैर्यानं पञ्चविधं स्मृतं।
परस्परस्य सामर्थ्यविघातादासनं स्मृतं॥ २७॥
अरेश्च विजिगीषोश्च यानवत् पञ्चधा स्मृतं।
बलिनोर्द्विषतोर्मध्ये वाचात्मानं समर्पयन्॥ २८॥
द्वैधीभावेन तिष्ठेत काकाक्षिवदलक्षितः।
उभयोरपि सम्पाते सेवेत बलवत्तरं॥ २९॥
यदा द्वावपि नेच्छेतां संश्रयं जातसंविदौ।
तदोपसर्पेत्तच्छत्रुमधिकं वा स्वयं व्रजेत्(१)॥ ३०॥
उच्छिद्यमानो बलिना निरुपायप्रतिक्रियः।
कुलोद्भतं सत्यमार्य्यमासेवेत बलोत्कटं(२)॥ ३१॥
तद्दर्शनोपास्तिकता नित्यन्तद्भावभाविता।
तत्कारितप्रश्रयिता वृत्तं संश्रयिणः श्रुतं॥ ३२॥
इत्याग्नेये महापुराणे षाड्गुण्यं नाम एकोनचत्वारिंश-
दधिकद्विशततमोऽध्यायः॥

१ उभयोरित्यादिः, स्वयं व्रजेदित्यन्तः पाठः अ० पुस्तके नास्ति।
२ बलोत्कर्षितं अ०, घ०, ङ०, ज० च।

## अथ चत्वारिंशदधिकद्विशततमोऽध्यायः।

---

### समादिः।

राम उवाच। प्रभावोत्साहशक्तिभ्यां मन्त्रशक्तिः प्रशस्यते।
प्रभावोत्साहवान् काव्यो जितो देवपुरोधसा॥ १॥
मन्त्रयेतेह कार्याणि नानाप्तैर्नाविपश्चिता।
अशक्यारम्भवृत्तीनां कुतः क्लेशादृते फलं॥ २॥
अविज्ञातस्य विज्ञानं विज्ञातस्य च निश्चयः।
अर्थद्वैधस्य सन्देहच्छेदनं शेषदर्शनं॥ ३॥
सहायाः साधनोपाया विभागो देशकालयोः।
विपत्तेश्च प्रतीकारः पञ्चाङ्गो मन्त्र इष्यते(१)॥ ४॥
मनःप्रसादः श्रद्धा च तथा करणपाटवं।
सहायोत्थानसम्पच्च कर्मणां सिद्धिलक्षणं॥ ५॥
मदः प्रमादः कामश्च सुप्तप्रलपितानि च।
भिन्दन्ति मन्त्रं प्रच्छन्नाः कामिन्यो रमतास्तथा॥ ६॥
प्रगल्भः स्मृतिमान्वाग्मी शस्त्रे शास्त्रे च निष्ठितः।
अभ्यस्तकर्मा नृपतेर्दूतो भवितुमर्हति॥ ७॥
निसृष्टार्थो मितार्थश्च तथा शासनहारकः(२)।
सामर्थ्यात् पादतो हीनो दूतस्तु त्रिविधः स्मृतः॥ ८॥
नाविज्ञातं पुरं शत्रोः प्रविशेच्च न संसदं।

---

१ मन्त्र उच्यते इति ख०, ङ० च। २ शासनहारक इति ख०, ङ० च।

कालमीक्षेत कार्यार्थमनुज्ञातश्च निष्पतेत् ॥ ९ ॥
छिद्रञ्च शत्रोर्जानीयात् कोषमित्रबलानि च ।
रागापरागौ जानीयाद् दृष्टिगात्रविचेष्टितैः(१) ॥ १० ॥
कुर्य्याच्चतुर्विधं स्तोत्रं पक्षयोरुभयोरपि ।
तपस्विव्यञ्जनोपेतैः सुचरैः(२) सह संवसेत् ॥ ११ ॥
चरः प्रकाशो दूतः स्यादप्रकाशश्चरो द्विधा ।
वणिक् कृषीवलो लिङ्गी भिक्षुकाद्यात्मकाश्चराः ॥ १२ ॥
यायादरिं व्यसनिनं निष्फले(३) दूतचेष्टिते ।
प्रकृतिव्यसनं यत्स्यात्तत् समीक्ष्य समुत्पतेत् ॥ १३ ॥
अनयाद्व्यस्यति श्रेयस्तस्मात्तद्व्यसनं स्मृतं ।
हुताशनो जलं व्याधिर्दुर्भिक्षं मरकं तथा ॥ १४ ॥
इति पञ्चविधं दैवं व्यसनं मानुषं परं ।
दैवं पुरुषकारेण शान्त्या च प्रशमन्नयेत् ॥ १५ ॥
उत्थापितेन नीत्या च मानुषं व्यसनं हरेत् ।
मन्त्रो मन्त्रफलावाप्तिः कार्य्यानुष्ठानमायतिः ॥ १६ ॥
आयव्ययौ दण्डनीतिरमित्रप्रतिषेधनं ।
व्यसनस्य प्रतीकारो राज्यराजाभिरक्षणं ॥ १७ ॥
इत्यमात्यस्य कर्म्मेदं हन्ति सव्यसनान्वितः ।
हिरण्यधान्यवस्त्राणि वाहनं प्रजया भवेत् ॥ १८ ॥
तथान्ये द्रव्यनिचया हन्ति सव्यसना प्रजा ।
प्रजानामापदिस्थानां रक्षणं कोषदण्डयोः ॥ १९ ॥

---

१ दृष्टिवक्त्रविचेष्टितैरिति ग०, घ०, ङ०, झ०, ञ०, ट० च ।
२ स्वचरैरिति ज० ।
३ विफले इति घ०, ङ०, ञ० च ।

चौराद्याश्चोपकुर्वन्ति संश्रयादिह दुर्द्दिनं ।
तूष्णीं युद्धं जनत्राणं मित्रामित्रपरिग्रहः ॥ २० ॥
सामन्तादि कृते दोषे नश्येत्तद्व्यसनाच्च तत् ।
भृत्यानां भरणं दानं प्रजामित्रपरिग्रहः ॥ २१ ॥
धर्म्मकामादिभेदश्च दुर्गसंस्कारभूषणं ।
कोषात्तद्व्यसनाद्धन्ति कोषमूलो हि भूपतिः ॥ २२ ॥
मित्रामित्रावनीहेमसाधनं रिपुमर्द्दनं ।
दूरकार्य्याशुकारित्वं दण्डात्तद्व्यसनाद्धरेत् ॥ २३ ॥
संस्तम्भयति मित्राणि अमित्रं नाशयत्यपि ।
धनाद्यैरुपकारित्वं मित्रात्तद्व्यसनाद्धरेत्(१) ॥ २४ ॥
राजा सव्यसनी हन्याद्राजकार्य्याणि यानि च ।
वाग्दण्डयोश्च पारुष्यमर्थदूषणमेव च ॥ २५ ॥
पानं स्त्री मृगया द्यूतं व्यसनानि महीपतेः ।
आलस्यं स्तब्धता दर्पः प्रमादो द्वैधकारिता ॥ २६ ॥
इति पूर्व्वोपदिष्टञ्च सचिवव्यसनं स्मृतं ।
अनावृष्टिश्च पीडादी राष्ट्रव्यसनमुच्यते ॥ २७ ॥
विशीर्णयन्त्रप्राकारपरिखात्वमशस्त्रता ।
क्षीणयासेन्धनान्नञ्च दुर्गव्यसनमुच्यते ॥ २८ ॥
व्ययीकृतः परिक्षिप्तोऽप्रजितोऽसञ्चितस्तथा ।
दूषितो दूरसंस्थश्च कोषव्यसनमुच्यते ॥ २९ ॥
उपरुद्धं परिक्षिप्तममानितविमानितं ।

---

(१) [illegible]

अभृतं व्याधितं श्रान्तं दूरायातन्नवागतं ॥ ३० ॥
परिक्षीणं प्रतिहतं प्रहताग्रतरस्तथा।
आशानिर्वेदभूयिष्ठमनृतप्राप्तमेव च ॥ ३१ ॥
कलत्रगर्भनिक्षिप्तमन्तःशल्यं तथैव च।
विच्छिन्नवीवधासारं शून्यमूलं तथैव च ॥ ३२ ॥
असम्बन्धसंहतं वापि भिन्नकूटं तथैव च।
दुष्पार्ष्णिग्राहमर्थञ्च बलव्यसनमुच्यते ॥ ३३ ॥
दैवोपपीड़ितं मित्रं ग्रस्तं शत्रुबलेन च।
कामक्रोधादिसंयुक्तमुत्साहादरिभिर्भवेत् ॥ ३४ ॥
अर्थस्य दूषणं क्रोधात् पारुष्यं वाक्यदण्डयोः।
कामजं मृगया द्यूतं व्यसनं पानकं स्त्रियः ॥ ३५ ॥
वाक्पारुष्यं परं लोके उद्वेजनमनर्थकं।
असिद्धसाधनं दण्डस्तं युक्त्यावनयेन्नृपः ॥ ३६ ॥
उद्वेजयति भूतानि दण्डपारुष्यवान् नृपः।
भूतान्युद्वेज्यमानानि द्विषतां यान्ति संश्रयं ॥ ३७ ॥
विवृद्धाः शत्रवश्चैव विनाशाय भवन्ति ते।
दूष्यस्य दूषणार्थञ्च परित्यागो महीयसः ॥ ३८ ॥
अर्थस्य नीतितत्त्वज्ञैरर्थदूषणमुच्यते।
पानात् कार्य्यादिनो ज्ञानं मृगयातोऽरितः चयः ॥ ३९ ॥
जितश्रमार्थं मृगयां विचरेद्रक्षिते वने।
धर्मार्थप्राणनाशादि द्यूते स्यात् कलहादिकं ॥ ४० ॥
कालातिपातो धर्मार्थपीड़ा स्त्रीव्यसनाद्भवेत्।
पानदोषात् प्राणनाशः कार्य्याकार्य्याविनिश्चयः ॥ ४१ ॥

स्कन्धावारनिवेशज्ञो निमित्तज्ञो रिपुं जयेत्।
स्कन्धावारस्य मध्ये तु सकोषं नृपतेर्गृहं ॥ ४२ ॥
मौलीभूतं श्रेणिसुहृद्द्विषदाटविकं बलं।
राजहर्म्यं समावृत्य क्रमेण विनिवेशयेत्(१) ॥ ४३ ॥
सैन्यैकदेशः सन्नद्धः सेनापतिपुरःसरः।
परिभ्रमेच्चलरात्रं मण्डलेन बहिर्निशि ॥ ४४ ॥
वार्त्ताः स्वका विजानीयाद्दूरसीमान्तचारिणः।
निर्गच्छेत् प्रविशेच्चैव सर्व्व एवोपलक्षितः ॥ ४५ ॥
सामदानं च भेदश्च दण्डोपेक्षेन्द्रजालकं।
मायोपायाः सप्त परे निक्षिपेत्साधनाय तान् ॥ ४६ ॥
चतुर्विधं स्मृतं साम उपकारानुकीर्त्तनात्।
मिथःसम्बन्धकथनं मृदुपूर्व्वं च भाषणं ॥ ४७ ॥
आयाते दर्शनं वाचा तवाहमिति चार्पणं।
यः सम्प्राप्तधनोत्सर्ग उत्तमाधममध्यमः ॥ ४८ ॥
प्रतिदानं तदा तस्य गृहीतस्यानुमोदनं।
द्रव्यदानमपूर्व्वं च स्वयङ्ग्राहप्रवर्त्तनं(२) ॥ ४९ ॥
देयस्य प्रतिमोक्षश्च दानं पञ्चविधं स्मृतं।
स्नेहरागापनयनसंहर्षोत्पादनं तथा ॥ ५० ॥
मिथो भेदश्च भेदज्ञैर्भेदश्च त्रिविधः स्मृतः।
वधोऽर्थहरणं चैव परिक्लेशस्त्रिधा दमः ॥ ५१ ॥
प्रकाशश्चाप्रकाशश्च लोकद्विष्टान् प्रकाशतः।
उद्विजेत हतैर्लोकस्तेषु पिण्डः प्रशस्यते ॥ ५२ ॥

---

१ पश्चिमदिग्गेति ञ०। २ तथैव सुप्रसन्नमिति ख०, ट० च।

विशेषेणोपनिषद्योगैर्हन्याच्छस्त्रादिना द्विषः ।
जातिमात्रं द्विजं नैव हन्यात् सामोत्तरं वशे ॥ ५३ ॥
प्रलिम्पन्निव चेतांसि दृष्टासाधु पिबन्निव ।
यसन्निवामृतं साम प्रयुञ्जीत प्रियं वचः ॥ ५४ ॥
मिथ्याभिशस्तः श्रीकाम आह्वयाप्रतिमानितः ।
राजद्वेषी चातिकर आत्मसम्भावितस्तथा ॥ ५५ ॥
विच्छिन्नधर्मकामार्थः क्रुद्धो मानी विमानितः ।
अकारणात् परित्यक्तः कृतवैरोऽपि सान्त्वितः ॥ ५६ ॥
हृतद्रव्यकलत्रश्च पूजार्होऽप्रतिपूजितः ।
एतांस्तु भेदयेच्छत्रौ स्थितान्नित्यान् सुशङ्कितान् ॥५७ ॥
आगतान् पूजयेत् कामैर्निजांश्च प्रशमन्नयेत् ।
सामदृष्टानुसन्धानमत्युग्रभयदर्शनं ॥ ५८ ॥
प्रधानदानमानं च भेदोपायाः प्रकीर्त्तिताः ।
मित्रं इतं काष्ठमिव घुणजग्धं विशीर्य्यते ॥ ५९ ॥
त्रिशक्तिर्देशकालज्ञो दण्डेनास्तं नयेदरीन् ।
मैत्रीप्रधानं कल्याणबुद्धिं सान्त्वेन साधयेत् ॥ ६० ॥
लुब्धं चीणञ्च दानेन मित्रानन्योन्यशङ्कया ।
दण्डस्य दर्शनाद्दुष्टान् पुत्रभ्रातादि सामतः ॥ ६१ ॥
दानभेदैश्चमूमुख्यान् योधान्(१) जनपदादिकान् ।
सामान्ताटविकान् भेददण्डाभ्यामपराद्धकान् ॥ ६२ ॥
देवताप्रतिमानान्तु पूजयान्तर्गतैर्नरैः ।
पुमान् स्त्रीवस्त्रसंवीतो निशि चाद्भुतदर्शनः ॥ ६३ ॥

---

१ दानभेदैश्च मुख्यान् चौरानिति ज० ।

वेतालोल्कापिशाचानां शिवानां च स्वरूपिकी ।
कामतो रूपधारित्वं शस्त्राग्न्यश्माम्बुवर्षणं ॥ ६४ ॥
तमोऽनिलोऽनलो मेघ इति माया ह्यमानुषी ।
जघान कीचकं भीम आस्थितः स्त्रीस्वरूपतां ॥ ६५ ॥
अन्याये व्यसने युद्धे प्रवृत्तस्यानिवारणं ।
उपेक्षेयं स्मृता भ्रातोपेक्षितस्य हिडिम्बया ॥ ६६ ॥
मेघान्धकारवृष्ट्यग्निपर्वताद्भुतदर्शनं ।
दूरस्थानं च सैन्यानां दर्शनं ध्वजशालिनां ॥ ६७ ॥
छिन्नपाटितभिन्नानां संसृतानां च दर्शनं ।
इतीन्द्रजालं द्विषतां भीत्यर्थमुपकल्पयेत् ॥ ६८ ॥

इत्याग्नेये महापुराणे सामादिर्नाम चत्वारिंशदधिकद्विशततमोऽध्यायः ॥

—

## अथैकचत्वारिंशदधिकद्विशततमोऽध्यायः ।

—:○:—

### राजनीतिः ।

राम उवाच । षड्विधन्तु बलं व्यूह्य देवान् प्रार्च्य रिपुं व्रजेत् ।
मौलं भूतं श्रेणिसुहृद्द्विषदाटविकं बलं ॥ १ ॥
पूर्वं पूर्वं गरीयस्तु बलानां व्यसनं तथा ।
षडङ्गं मन्त्रकोषाभ्यां पदात्यश्वरथद्विपैः ॥ २ ॥
नद्यद्रिवनदुर्गेषु यत्र यत्र भयं भवेत् ।

सेनापतिस्तत्र तत्र गच्छेद्व्यूहीकृतैर्बलैः ॥ ३ ॥
नायकः पुरतो यायात् प्रवीरपुरुषावृतः।
मध्ये कलत्रं स्वामी च कोषः फल्गु च यद्बलं ॥ ४ ॥
पार्श्वयोरुभयोरश्वा वाजिनां पार्श्वयो रथाः।
रथानां पार्श्वयोर्नागा नागानां चाटवीबलं ॥ ५ ॥
पश्चात् सेनापतिः सर्वं पुरस्कृत्य कृती स्वयं।
यायात्सन्नद्धसैन्यौघ. खिन्नानाश्वासयञ्छनैः ॥ ६ ॥
यायाद्व्यूहेन महता मकरेण पुरोभये।
श्येनेनोद्धृतपक्षेण सूच्या वा वीरवक्त्रया ॥ ७ ॥
पश्चाद्भये तु शकटं पार्श्वयोर्वज्रसञ्ज्ञितं(१)।
सर्व्वतः सर्वतोभद्रं भये व्यूहं प्रकल्पयेत् ॥ ८ ॥
कन्दरे शैलगहने निम्नगावनसङ्कटे।
दीर्घाध्वनि परिश्रान्तं क्षुत्पिपासाहितक्लमं ॥ ९ ॥
व्याधिदुर्भिक्षमरकपीड़ितं दस्युविद्रुतं।
पङ्कपांशुजलस्कन्धं व्यस्तं पुञ्जीकृतं पथि ॥ १० ॥
प्रसुप्तं भोजनव्यग्रमभूमिष्ठमसुस्थितं।
चौराग्निभयवित्रस्तं वृष्टिवातसमाहतं ॥ ११ ॥
इत्यादौ स्वचमूं रक्षेत् परसैन्यं च घातयेत्।
विशिष्टो देशकालाभ्यां भिन्नविप्रकृतिर्बली ॥ १२ ॥
कुर्यात् प्रकाशयुद्धं हि कूटयुद्धं विपर्य्यये।
तेष्ववस्कन्दकालेषु परं हन्यात्समाकुलं ॥ १३ ॥

१ वज्रसंज्ञकमिति ख॰, ङ॰ च।

अभूमिष्ठं स्वभूमिष्ठः स्वभूमौ चोपजायतः।
प्रकृतिप्रग्रहाक्रष्टं पाशैर्वनचरादिभिः॥ १४॥
हन्यात् प्रवीरपुरुषैर्भङ्गदानापकर्षणैः।
पुरस्ताद्दर्शनं दत्त्वा तल्लक्षकृतनिश्चयान्॥ १५॥
हन्यात्पश्चात् प्रवीरेण बलेनोपेत्य वेगिना।
पश्चाद्वा सङ्कुलीकृत्य हन्याच्छूरेण पूर्वतः॥ १६॥
आभ्यां पार्श्वाभिघातौ तु व्याख्यातौ कूटयोधने।
पुरस्ताद्विषमे देशे पश्चाद्धन्यात्तु वेगवान्॥ १७॥
पुरः पश्चात्तु विषमे एवमेव तु पार्श्वयोः।
प्रथमं योधयित्वा तु दूष्यामित्राटवीबलैः॥ १८॥
श्रान्तं मन्दं निराक्रन्दं हन्यादश्रान्तवाहनं।
दूष्यामित्रबलैर्वापि भङ्गं दत्त्वा प्रयत्नवान्॥ १९॥
जितमित्येव विश्वस्तं हन्यान्मन्त्रव्यपाश्रयः।
स्कन्धावारपुरग्रामसस्यस्वामिप्रजादिषु॥ २०॥
विश्रम्भन्तं परानीकमप्रमत्तो विनाशयेत्।
अथवा गोग्रहाकृष्टं तल्लक्ष्यं मार्गबन्धनात्॥ २१॥
अवस्कन्दभयाद्रात्रिप्रजागरकृतश्रमं।
दिवासुप्तं समाहन्यान्निद्राव्याकुलसैनिकं॥ २२॥
निशि विश्रब्धसंसुप्तं नागैर्वा खड्गपाणिभिः।
प्रयाणे पूर्वयायित्वं वनदुर्गप्रवेशनं॥ २३॥
अभिन्नानामनीकानां भेदनं भिन्नसङ्ग्रहः।
विभीषिकाद्वारघातं कोषरक्षेभकर्म च॥ २४॥
अभिन्नभेदनं मित्रसन्धानं रथकर्म च।

वनदिङ्मार्गविचये वीवधासारलक्षणं ॥ २५ ॥
अनुयानापसरणे शीघ्रकार्य्योपपादनं ।
दीनानुसरणं घातः कोटीनां जघनस्य च ॥ २६ ॥
अश्वकर्म्माथ पत्तेश्च सर्व्वदा शस्त्रधारणं ।
शिबिरस्य च मार्गादेः शोधनं वस्तिकर्म्म च ॥ २७ ॥
संस्थूलस्थाणुवल्मीकवृक्षगुल्मापकण्टकं ।
सापसारा पदातीनां भूर्नातिविषमा मता ॥ २८ ॥
स्वल्पवृक्षोपला क्षिप्रलङ्घनीयनगा स्थिरा ।
निःशर्करा विपङ्का च सापसारा च वाजिभूः ॥ २९ ॥
निस्थाणुवृक्षकेदारा रथभूमिरकर्द्दमा ।
मर्द्दनीयतरुच्छेद्यव्रततीपङ्कवर्जिता ॥ ३० ॥
निर्झरागम्यशैला(१) च विषमा गजमेदिनी ।
उरस्यादीनि भिन्नानि प्रतिष्टम्भन् बलानि हि ॥ ३१ ॥
प्रतिग्रह इति ख्यातो राजकार्य्यान्तरक्षमः ।
तेन शून्यस्तु यो व्यूहः स भिन्न इव लक्ष्यते ॥ ३२ ॥
जयार्थी न च युद्धेत मतिमानप्रतिग्रहः ।
यत्र राजा तत्र कोषः कोषाधीना हि राजता ॥ ३३ ॥
योधेभ्यस्तु ततो दद्यात् किंचिद्दातुं(२) न युज्यते ।
द्रव्यलक्षं राजघाते तदर्द्धं तत्सुतार्द्दने ॥ ३४ ॥
सेनापतिवधे तद्वद्दद्याद्धस्त्यादिमर्द्दने ।
अथवा खलु युध्येरन् पत्त्यश्वरथदन्तिनः ॥ ३५ ॥

---

१ निःशर्करा स्मशैलेति ग० । २ किं चिद्दातुमिति ख०, ग० च ।

यथा भवेदसम्बाधो व्यायामविनिवर्त्तने ।
असङ्करेण युद्धेरन् सङ्करः सङ्कुलावहः ॥ ३६ ॥
महासङ्कुलयुद्धेषु संश्रयेरन्मतङ्गजं ।
अश्वस्य प्रतियोद्धारो भवेयुः पुरुषास्त्रयः ॥ ३७ ॥
इति कल्प्यास्त्रयश्चाश्वा विधेयाः कुञ्जरस्य तु ।
पादगोपा भवेयुश्च पुरुषा दश पञ्च च ॥ ३८ ॥
विधानमिति नागस्य विहितं स्यन्दनस्य च ।
अनीकमिति विज्ञेयमिति कल्प्या नव द्विपाः ॥ ३९ ॥
तथानीकस्य रन्ध्रन्तु पञ्चधा च प्रचक्षते ।
इत्यनीकविभागेन स्थापयेद् व्यूहसम्पदः॥ ४० ॥
उरस्यकक्षपक्षांस्तु कल्प्यानेतान् प्रचक्षते ।
उरःकक्षौ च पक्षौ च मध्यं पृष्ठं प्रतिग्रहः ॥ ४१ ॥
कोटी च व्यूहशास्त्रज्ञैः सप्ताङ्गो व्यूह उच्यते ।
उरस्यकक्षपक्षास्तु व्यूहोऽयं सप्रतिग्रहः ॥ ४२ ॥
गुरोरेष च शुक्रस्य कक्षाभ्यां परिवर्जितः ।
तिष्ठेयुः सेनापतयः प्रवीरैः पुरुषैर्वृताः ॥ ४३ ॥
अभेदेन च युध्येरन् रक्षेयुश्च परस्परं ।
मध्यव्यूहे फल्गु सैन्यं युद्धवस्तु जघन्यतः ॥ ४४ ॥
युद्धं हि नायकप्राणं हन्यते तदनायकं ।
उरसि स्थापयेन्नागान् प्रचण्डान् कक्षयो रथान् ॥ ४५ ॥
हयांश्च पक्षयोर्व्यूहो मध्यभेदी प्रकीर्त्तितः ।
मध्यदेशे हयानीकं रथानीकञ्च कक्षयोः ॥ ४६ ॥
पक्षयोश्च गजानीकं व्यूहोऽन्तर्भेद्ययं स्मृतः ।

रथस्थाने हयान् दद्यात् पदातींश्च हयाश्रये ॥ ४७ ॥
रथाभावे तु द्विरदान् व्यूहे सर्वत्र दापयेत्।
यदि स्याद्दण्डबाहुल्यमाबाधः सम्प्रकीर्त्तितः ॥ ४८ ॥
मण्डलासंहतो भोगो दण्डस्ते बहुधा शृणु।
तिर्य्यग्वृत्तिस्तु दण्डः स्याद् भोगोऽन्यावृत्तिरेव च ॥४९॥
मण्डलः सर्वतोवृत्तिः पृथग्वृत्तिरसंहतः।
प्रदरो दृढकोऽसह्यः चापो वै कुक्षिरेव च ॥ ५० ॥
प्रतिष्ठः सुप्रतिष्ठश्च श्येनो विजयसञ्जयौ।
विशालो विजयः शूची स्थूणाकर्णचमूमुखौ ॥ ५१ ॥
सर्पास्यो वलयश्चैव दण्डभेदाश्च दुर्जयाः।
अतिक्रान्तः प्रतिक्रान्तः कक्षाभ्याञ्चैकपक्षतः ॥ ५२ ॥
अतिक्रान्तस्तु पक्षाभ्यां त्रयोऽन्ये तद्विपर्य्यये।
पक्षोरस्यैरतिक्रान्तः प्रतिष्ठोऽन्यो विपर्य्ययः ॥ ५३ ॥
स्थूणापक्षो धनुःपक्षो द्विस्थूणो दण्ड ऊर्द्ध्वगः।
द्विगुणोन्तस्त्वतिक्रान्तपक्षोऽन्यस्य विपर्य्ययः ॥ ५४ ॥
द्विचतुर्दण्ड इत्येते ज्ञेया लक्षणतः क्रमात्।
गोमूत्रिकाहिसञ्चारीशकटी मकरस्तथा ॥ ५५ ॥
भोगभेदाः समाख्यातास्तथा पारिप्लवङ्गकः।
दण्डपक्षो युगोरस्यः शकटस्तद्विपर्य्यये ॥ ५६ ॥
मकरो व्यतिकीर्णश्च शेषः कुञ्जरराजिभिः।
मण्डलव्यूहभेदौ तु सर्वतोभद्रदुर्जयौ ॥ ५७ ॥
अष्टानीको द्वितीयस्तु प्रथमः सर्वतोमुखः।
अर्द्धचन्द्रक ऊर्द्धाङ्गो वज्रभेदास्तु संहतेः ॥ ५८ ॥

तथा कर्कटशृङ्गी च काकपादी च गोधिका।
त्रिचतुःपञ्चसैन्यानां ज्ञेया आकारभेदतः ॥ ५९ ॥
दण्डस्य स्युः सप्तदश व्यूहा द्वौ मण्डलस्य च।
असंहतस्य षट् पञ्च भोगस्यैव तु सङ्गरे ॥ ६० ॥
पक्षादीनामथैकेन हत्वा शेषैः परिक्षिपेत्।
उरसा वा समाहत्य कोटिभ्यां परिवेष्टयेत्(१) ॥ ६१ ॥
परे कोटी समाक्रम्य पक्षाभ्यामप्रतिग्रहात्।
कोटिभ्याञ्जघनं हन्यादुरसा च प्रपीडयेत् ॥ ६२ ॥
यतः फल्गु यतो भिन्नं यतश्चान्यैरधिष्ठितं।
ततश्चारिबलं हन्यादात्मनश्चोपबृंहयेत् ॥ ६३ ॥
सारं द्विगुणसारेण फल्गुसारेणपीडयेत्।
संहतञ्च गजानीकैः प्रचण्डैर्दारयेद्बलं ॥ ६४ ॥
स्यात् कक्षपक्षोरस्यैव वर्त्तमानस्तु दण्डकः।
तत्र प्रयोगो दण्डस्य स्थानन्तुर्य्येण दर्शयेत् ॥ ६५ ॥
स्याद्दण्डसमपक्षाभ्यामतिक्रान्तः प्रदारकः।
भवेत्स पक्षकक्षाभ्यामतिक्रान्तो दृढः स्मृतः ॥ ६६ ॥
कक्षाभ्याञ्च प्रतिक्रान्तव्यूहोऽसह्यः स्मृतो यथा।
कक्षपक्षावधः स्थाप्योरस्यैः कान्तश्च खातकः ॥ ६७ ॥
द्वौ दण्डौ वलयः प्रोक्तो व्यूहो रिपुविदारणः।
दुर्जयश्चतुर्वलयः शत्रोर्बलविमर्दनः ॥ ६८ ॥
कक्षपक्षोरस्यैर्भोगो विषमं परिवर्त्तयन्।

---

१ कोटिभ्यां परिकल्पयेदिति घ०, ञ० च।

सर्पचारी गोमूत्रिका शकटः शकटाकृतिः ॥ ६८ ॥
विपर्य्ययोऽमरः प्रोक्तः सर्वशत्रुविमर्द्दकः ।
स्यात् कचपचोरस्यानामेकीभावस्तु मण्डलः ॥ ७० ॥
चक्रपद्मादयो भेदा मण्डलस्य प्रभेदकाः ।
एवञ्च सर्वतोभद्रो वज्राचवरकाकवत् ॥ ७१ ॥
अर्द्धचन्द्रश्च शृङ्गाटो ह्यचलो नामरूपत(१)।
व्यूहा यथासुखं कार्य्याः शत्रूणां बलवारणाः ॥ ७२ ॥
अग्निरुवाच । रामस्तु रावणं हत्वा अयोध्यां प्राप्तवान् द्विज ।
रामोक्तनीत्येन्द्रजितं हतवांल्लक्ष्मणः पुरा ॥ ७३ ॥

इत्याग्नेये महापुराणे रामोक्तराजनीतिर्नाम एकचत्वारिंश-
दधिकद्विशततमोऽध्यायः ॥

## अथ द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ।



पुरुषलक्षणं ।

अग्निरुवाच । रामोक्तोक्ता मया नीतिः स्त्रीणां राजन् नृणां वदे ।
लक्षणं यत्समुद्रेण गर्गायोक्तं यथा पुरा ॥ १ ॥
समुद्र उवाच । पुंसाञ्च लक्षणं वक्ष्ये स्त्रीणाञ्चैव शुभाशुभं ।
एकाधिको द्विशुक्लश्च त्रिगम्भीरस्तथैव च ॥ २ ॥
त्रित्रिकस्त्रिप्रलम्बश्च त्रिभिर्व्याप्नोति यस्तथा ।
त्रिवलीमांस्त्रिविनतस्त्रिकालज्ञश्च सुव्रत ॥ ३ ॥
पुरुषः स्यात्सुलक्षणी विपुलश्च तथा त्रिषु ।
चतुर्लेखस्तथा यश्च तथैव च चतुःसमः ॥ ४ ॥
चतुष्किष्कुश्चतुर्दंष्ट्रः शुक्लकृष्णस्तथैव च ।
चतुर्गन्धश्चतुर्ह्रस्वः सूक्ष्मदीर्घश्च पञ्चसु ॥ ५ ॥
षडुन्नतोऽष्टवंशश्च सप्तस्नेहो नवामलः ।
दशपद्मो दशव्यूहो न्यग्रोधपरिमण्डलः ॥ ६ ॥
चतुर्दशसमद्वन्द्वः षोडशाक्षश्च शस्यते ।
धर्मार्थकामसंयुक्तो धर्मो ह्येकाधिको मतः ॥ ७ ॥
तारकाभ्यां विना नेत्रे शुक्लदन्तो द्विशुक्लकः ।
गभीरस्त्रिस्वरो नाभिः सत्त्वञ्चैकं त्रिकं स्मृतं ॥ ८ ॥
अनसूया दया क्षान्तिर्मङ्गलाचारयुक्तता ।
शौचं स्पृहा त्वकार्पण्यमनायासश्च शौर्य्यता ॥ ९ ॥

त्रिकस्त्रिप्रलम्बः स्याद्वृषणे भुजयोर्नरः ।
दिग्देशजातिवर्गांश्च तेजसा यशसा श्रिया ॥ १० ॥
व्याप्नोति यस्त्रिकव्यापी त्रिवलीमानरस्त्वसौ ।
उदरे वलयस्तिस्रो नरन्त्रिविनतं शृणु ॥ ११ ॥
देवतानां द्विजानाञ्च गुरूणां प्रणतस्तु यः ।
धर्मार्थकामकालज्ञस्त्रिकालज्ञोऽभिधीयते ॥ १२ ॥
उरो ललाटं वक्त्रञ्च त्रिविस्तीर्णो विनिखवान् ।
द्वौ पाणी द्वौ तथा पादौ ध्वजच्छत्रादिभिर्युतौ ॥ १३ ॥
अङ्गुल्यो हृदयं पृष्ठं कटिः शस्तं चतुःसमं ।
षण्णवत्यङ्गुलोत्सेधश्चतुष्किष्कुप्रमाणतः ॥ १४ ॥
दंष्ट्राश्चतस्रश्चन्द्राभाश्चतुःकृष्णं वदामि ते ।
नेत्रतारे भ्रुवौ श्मश्रुः कृष्णाः केशास्तथैव च ॥ १५ ॥
नासायां वदने स्वेदे कक्षयोर्विडगन्धकः ।
ह्रस्वं लिङ्गं तथा ग्रीवा जङ्घे स्याद्वेदह्रस्वकं ॥ १६ ॥
सूक्ष्माण्यङ्गुलिपर्वाणि नखकेशद्विजत्वचः ।
हनू नेत्रे ललाटे च नासा दीर्घा स्तनान्तरं ॥ १७ ॥
वक्षः कक्षौ नखा नासोन्नतं वक्त्रं कृकाटिका ।
स्निग्धास्त्वक्केशदन्ताश्च लोम दृष्टिर्नखाश्च वाक् ॥ १८ ॥
जान्वोरूर्वोश्च पृष्ठस्य वंशौ द्वौ करनासयोः ।
नेत्रे नासापुटौ कर्णौ मेढ्रं पायुमुखेऽमलं ॥ १९ ॥
जिह्वोष्ठे तालुनेत्रे तु हस्तपादौ नखास्तथा ।
शिश्नाग्रवक्त्रं शस्यन्ते पद्माभा दश देहिनां ॥ २० ॥
पाणिपादं मुखं ग्रीवा श्रवणे हृदयं शिरः ।

ललाटमुदरं पृष्ठं बृहन्तः पूजिता दश ॥ २१ ॥
प्रसारितभुजस्येह मध्यमाग्रद्वयान्तरं ।
उच्छ्रायेण समं यस्य न्यग्रोधपरिमण्डलः ॥ २२ ॥
पादौ गुल्फौ स्फिचौ पार्श्वौ वङ्क्षणौ वृषणौ कुचौ ।
कर्णौष्ठे सक्थिनी जङ्घे हस्तौ बाहू तथाक्षिणी ॥ २३ ॥
चतुर्दशसमद्वन्द्व एतत्सामान्यतो नरः ।
विद्याश्चतुर्दश द्राघैः पश्येच्च षोडशात्मकः ॥ २४ ॥
रूक्षं शिराततं गात्रमशुभं मांसवर्जितं ।
दुर्गन्धिविपरीतं यच्छस्तन्दृष्ट्या प्रसन्नया ॥ २५ ॥
धन्यस्य मधुरा वाणी गतिर्मत्तेभसन्निभा ।
एककूपभवं रोम भये रक्षा सतत् सताम् ॥ २६ ॥

इत्याग्नेये महापुराणे पुरुषलक्षणं नाम द्विचत्वारिंशदधिक-
द्विशततमोऽध्यायः ॥

---

## अथ त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ।

### स्त्रीलक्षणम् ।

समुद्र उवाच । शस्ता स्त्री(१) चारुसर्वाङ्गी मत्तमातङ्गगामिनी ।
गुरूरुजघना या च मत्तपारावतेक्षणा ॥ १ ॥
सुनीलकेशी तन्वङ्गी विलोमाङ्गी मनोहरा ।

---

१ रम्या स्त्री इति ग० ।

समभूमिस्पृशौ पादौ संहतौ च तथा स्तनौ ॥ २ ॥
नाभिः प्रदक्षिणावर्त्ता गुह्यमश्वत्थपत्रवत् ।
गुल्फौ निगूढौ मध्येन नाभिरङ्गुष्ठमानिका ॥ ३ ॥
जठरञ्च प्रलम्बञ्च रोमरूक्षा न शोभना ।
नर्क्षवृक्षनदीनाम्नी न सदा(१) कलहप्रिया ॥ ४ ॥
न लोलुपा न दुर्भाषा शुभा देवादिपूजिता ।
गण्डैर्मधूकपुष्पाभैर्न शिराला न लोमशा ॥ ५ ॥
न संहतभ्रूकुटिला पतिप्राणा पतिप्रिया ।
अलक्षणापि लक्षण्या यत्राकारस्ततो गुणाः(२) ॥ ६ ॥
भुवङ्गनिष्ठिका यस्या न स्पृशेन्मृत्युरेव सा ।

इत्याग्नेये महापुराणे स्त्रीलक्षणं नाम त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥

## अथ चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ।

चामरादिलक्षणम् ।

अग्निरुवाच । चामरो रुक्मदण्डोऽग्र्यः कथं राज्ञः प्रशस्यते ।
हंसपक्षैर्विरचितं मयूरस्य शुकस्य च ॥ १ ॥
पक्षैर्वाथ बलाकाया न कार्यं मिश्रपक्षकैः ।

---

१. न शठेति ख० ।

२ जठरमित्यादि, ततो गुणा इत्यन्त, पाठः घ० ञ० पुस्तकद्वये नास्ति ।

चतुरस्रं ब्राह्मणस्य वृत्तं राज्ञश्च शस्यकं ॥ २ ॥
त्रिचतुःपञ्चषट्सप्तअष्टपर्वश्च दण्डकः ।
भद्रासनं वीरहर्षैः पञ्चाशदङ्गुलोच्छ्रयैः(१) ॥ ३ ॥
विस्तारेण त्रिहस्तं(२) स्यात् सुवर्णाद्यैश्च चित्रितं ।
धनुर्द्रव्यत्रयं लौहं शृङ्गं दारु द्विजोत्तम ॥ ४ ॥
ज्याद्रव्यत्रितयञ्चैव वंशभङ्गत्वचस्तथा ।
दारुचापप्रमाणन्तु श्रेष्ठं हस्तचतुष्टयं ॥ ५ ॥
तदेव समहीनन्तु प्रोक्तं मध्यकनीयसि ।
मुष्टिग्राहनिमित्तानि मध्ये द्रव्याणि कारयेत् ॥ ६ ॥
स्वल्पकोटिस्त्वचा शृङ्गं शार्ङ्गलौहमये द्विज ।
कामिनीभ्रूलताकारा कोटिः कार्य्या सुसंयता ॥ ७ ॥
पृथग्वा विप्र मिश्रं वा लौहं शार्ङ्गन्तु कारयेत् ।
शार्ङ्गं समुचितं कार्य्यं रुक्मविन्दुविभूषितं ॥ ८ ॥
कुटिलं स्फुटितञ्चापं सच्छिद्रञ्च न शस्यते ।
सुवर्णं रजतं ताम्रं कृष्णायो धनुषि स्मृतं ॥ ९ ॥
माहिषं शारभं शार्ङ्गं रौहिषं वा धनुः शुभं ।
चन्दनं वेतसं सालं धावलङ्ककुभन्तरुः ॥ १० ॥
सर्वश्रेष्ठं धनुर्वंशैर्गृहीतैः शरदि श्रितैः ।
पूजयेच्च धनुः(३) खड्गमन्त्रैस्त्रैलोक्यमोहनैः ॥ ११ ॥
अयसश्चाथ वंशस्य शरस्याप्यशरस्य च ।
ऋजवो हेमवर्णाभाः स्नायुश्लिष्टाः सुपत्रकाः ॥ १२ ॥

---

१ चतुरस्रमित्यादि, पञ्चाशदङ्गुलोच्छ्रयैरित्यन्तः पाठः ङ० पुस्तके नास्ति।
२ द्विहस्तमिति ट०।
३ पूजयेत्तद्धनुरिति ग०, घ०, ञ० च।

रुक्मपुङ्खाः सुपुङ्खास्ते तैलधौताः सुवर्णकाः।
यात्रायामभिषेकादौ यजेद्बाणधनुर्मुखान् ॥ १३ ॥
सपताकाध्वजङ्गाङ्गसांवत्सरकरान्नृपः।
ब्रह्मा वै मेरुशिखरे स्वर्गगङ्गातटेऽयजत् ॥ १४ ॥
लोहदैत्यं स ददृशे विघ्नं यज्ञे तु चिन्तयन्।
तस्य चिन्तयतो वह्नेः पुरुषोऽभूद्बली महान् ॥ १५ ॥
ववन्देऽजश्च तं देवा अभ्यनन्दन् हर्षिताः(१)।
तस्मात्स नन्दकः(२) खड्गो देवोक्तो हरिरग्रहीत् ॥ १६ ॥
तं जग्राह शनैर्देवो(३) विकोषः सोऽभ्यपद्यत।
खड्गो नीलो रत्नमुष्टिस्ततोऽभूच्छतबाहुकः ॥ १७ ॥
दैत्यः स गदया देवान् द्रावयामास वै रणे।
विष्णुना खड्गच्छिन्नानि दैत्यगात्राणि भूतले ॥ १८ ॥
पतितानि तु संस्पर्शान्नन्दकस्य च तानि हि।
लोहभूतानि सर्वाणि हत्वा तस्मै हरिर्वरं ॥ १९ ॥
ददौ पवित्रमङ्गं ते आयुधाय भवेद्भुवि।
हरिप्रसादाद्ब्रह्मापि विना विघ्नं हरिं प्रभुं ॥ २० ॥
पूजयामास यत्नेन वक्ष्येऽथो खड्गलक्षणं।
खटीखट्टरजाता ये दर्शनीयास्तु ते स्मृताः ॥ २१ ॥
कायच्छिद्रस्त्वार्षिकाः स्युर्दृढाः सूर्पारकोद्भवाः।
तीक्ष्णाश्छेदसहा वङ्गास्तीक्ष्णाः स्युरङ्गदेशजाः ॥ २२ ॥
शतार्धमङ्गुलानाञ्च श्रेष्ठं खड्गं प्रकीर्त्तितं।

---

१ लोहदैत्यमित्यादि, हर्षिता इत्यन्तः पाठः ज॰ पुस्तके नास्ति।
२ तस्मात्तु नन्दक इति घ॰, ज॰ च।
३ महादेव इति ज॰।

तदर्द्धं मध्यमं ज्ञेयं ततो हीनं न धारयेत् ॥ २३ ॥
दीर्घं सुमधुरं शब्दं यस्य खड्गस्य सत्तम ।
किङ्किणीसदृशन्तस्य धारणं श्रेष्ठमुच्यते ॥ २४ ॥
खड्गः पद्मपलाशाग्रो मण्डलाग्रश्च शस्यते ।
करवीरदलाग्राभो घृतगन्धो वियत्प्रभः ॥ २५ ॥
समाङ्गुलस्थाः शस्यन्ते व्रणाः खड्गेषु लिङ्गवत् ।
काकोलूकसवर्णाभा विषमास्ते न शोभनाः ॥ २६ ॥
खड्गे न पश्येद्वदनमुच्छिष्टो न स्पृशेदसिं ।
मूल्यं जातिं न कथयेन्निशि कुर्य्याच्च शीर्षके ॥ २७ ॥

इत्याग्नेये महापुराणे आयुधलक्षणादिर्नाम चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥

---

## अथ पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ।



### रत्नपरीक्षा ।

अग्निरुवाच । रत्नानां लक्षणं वक्ष्ये रत्नं धार्य्यमिदं नृपैः ।
वज्रं मरकतं रत्नं पद्मरागञ्च मौक्तिकं ॥ १ ॥
इन्द्रनीलं महानीलं वैदूर्य्यं गन्धशस्यकं ।
चन्द्रकान्तं सूर्य्यकान्तं स्फटिकं पुलकं तथा ॥ २ ॥

कर्केतनं पुष्परागं तथा ज्योतीरसं द्विज ।
स्फटिकं राजपट्टञ्च तथा राजमयं शुभं ॥ ३ ॥
सौगन्धिकं तथा गञ्जं शङ्खब्रह्ममयं तथा ।
गोमेदं रुधिराख्यञ्च तथा भल्लातकं द्विज ॥ ४ ॥
धूली मरकतञ्चैव तुत्थकं सीसमेव च ।
पीलुं प्रवालकञ्चैव गिरिवज्रं द्विजोत्तम ॥ ५ ॥
भुजङ्गममणिञ्चैव तथा वज्रमणिं शुभं ।
टिट्टिभञ्च तथा पिण्डं भ्रामरञ्च तथोत्पलं ॥ ६ ॥
सुवर्णप्रतिवद्धानि रत्नानि श्रीजयादिके ।
अन्तःप्रभत्वं वैमल्यं सुसंस्थानत्वमेव च ॥ ७ ॥
सुधार्य्या नैव धार्य्यास्तु निष्प्रभा मलिनास्तथा ।
खण्डाः सशर्करा ये च प्रशस्तं वज्रधारणम् ॥ ८ ॥
अम्भस्तरति यद्वज्रमभेद्यं विमलं च यत् ।
षट्कोणं शक्रचापाभं लघु चार्कनिभं शुभम् ॥ ९ ॥
शुकपक्षनिभः स्निग्धः कान्तिमान्विमलस्तथा ।
स्वर्णचूर्णनिभैः सूक्ष्मैर्मरकतश्च बिन्दुभिः ॥ १० ॥
स्फटिकजाः पद्मरागाः स्यू रागवन्तोऽतिनिर्म्मलाः ।
जातवङ्गा भवन्तीह कुरुविन्दसमुद्भवाः ॥ ११ ॥
सौगन्धिकोत्था काषाया मुक्ताफलास्तु शुक्तिजाः ।
विमलास्तेभ्य उत्कृष्टा ये च शङ्खोद्भवा मुने ॥ १२ ॥
नागदन्तभवाश्चाग्र्याः कुम्भशूकरमत्स्यजाः ।
वेणुनागभवाः श्रेष्ठा मौक्तिकं मेघजं वरं ॥ १३ ॥
वृत्तत्वं शुक्लता स्वाच्छं महत्त्वं मौक्तिके गुणाः ।

इन्द्रनीलं शुभं चीरे राजते भ्राजतेऽधिकं(१) ॥ १४ ॥
रञ्जयेत् स्वप्रभावेण तममूल्यं विनिर्दिशेत् ।
नीलरक्तन्तु वैदूर्य्यं श्रेष्ठं हारादिकं भजेत्(२) ॥ १५ ॥

इत्याग्नेये महापुराणे रत्नपरीक्षा नाम पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥

---

## अथ षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ।

—:०:—

### वास्तुलक्षणं ।

अग्निरुवाच । वास्तुलक्ष्म प्रवक्ष्यामि विप्रादीनां च भूरिह ।
श्वेता रक्ता तथा पीता कृष्णा चैव यथाक्रमम् ॥ १ ॥
घृतरक्तान्नमद्यानां गन्धाढ्या वसतय भूः ।
मधुरा च कषाया च अम्लाद्युपरसा क्रमात् ॥ २ ॥
कुशैः शरैस्तथाकाशैर्दूर्वाभिर्या च संश्रिता ।
प्रार्च्य विप्रांश्च निःशल्यां खातपूर्वन्तु कल्पयेत् ॥ ३ ॥
चतुःषष्टिपदं कृत्वा मध्ये ब्रह्मा चतुष्पदः ।
प्राक् तेषां वै गृहस्वामी कथितस्तु तथार्य्यमा ॥ ४ ॥
दक्षिणेन विवस्वांश्च मित्रः पश्चिमतस्तथा ।
उदङ्महीधरश्चैव-आपवत्सौ च वह्निगे ॥ ५ ॥
सावित्रश्चैव सविता जयेन्द्रौ नैर्ऋतेऽम्बुधौ ।

---

१ भ्राजते छिद्रमिति ख०, ज० च । २ भवेदिति ग०, ख० च ।

रुद्रव्याधी च वायव्ये पूर्व्वादौ कोणगाद्बहिः ॥ ६ ॥
महेन्द्रश्च रविः सत्यो भृशः[1] पूर्व्वेऽथ दक्षिणे।
गृहक्षतोऽर्य्यमधृती गन्धर्व्वाश्चाथ वारुणे ॥ ७ ॥
पुष्पदन्तोऽसुराश्चैव वरुणो यक्ष एव च।
सौम्ये भल्लाटसोमौ च अदितिर्धनदस्तथा ॥ ८ ॥
नागः करग्रहश्चैशे अष्टौ दिशि दिशि स्मृताः।
आद्यन्तौ तु तयोर्देवौ प्रोक्तावत्र गृहेश्वरौ ॥ ९ ॥
पर्ज्जन्यः प्रथमो देवो द्वितीयश्च करग्रहः।
महेन्द्ररविसत्याश्च भृशोऽथ गगनस्तथा ॥ १० ॥
पवनः पूर्व्वतश्चैव अन्तरीक्षधनेश्वरौ।
आग्नेये चाथ नैर्ऋत्ये मृगसुग्रीवकौ सुरौ ॥ ११ ॥
रोगो मुख्यश्च वायव्ये दक्षिणे पुष्पवितथौ।
गृहक्षतो यमभृशौ गन्धर्व्वो नागपैतृकः ॥ १२ ॥
आप्ये दौवारिकसुग्रीवौ पुष्पदन्तोऽसुरो जलं।
यक्ष्मा रोगश्च शोषश्च उत्तरे नागराजकः ॥ १३ ॥
मुख्यो भल्लाटशशिनौ अदितिश्च कुवेरकः।
नागो हुताशः श्रेष्ठो वै(?) शक्रसूर्य्यौ च पूर्वतः ॥ १४ ॥
दक्षे गृहक्षतः पुष्प आप्ये सुग्रीव उत्तमः।
पुष्पदन्तो ह्युदग्द्वारि भल्लाटः पुष्पदन्तकः ॥ १५ ॥
शिलेष्टकादिविन्यासं मन्त्रैः प्रार्च्य सुरांश्चरेत्।
नन्दे नन्दय वासिष्ठे वसुभिः प्रजया सह ॥ १६ ॥

---

१ मृगरिति ख०।
२ नागो हुताशन श्रेष्ठ इति ख०,ङ० च।

जये भार्गवदायादे प्रजानाञ्जयमावह(१) ।
पूर्णेऽङ्गिरसदायादे पूर्णकामं कुरुष्व मां ॥ १७ ॥
भद्रे काश्यपदायादे कुरु भद्रां मतिं मम ।
सर्वबीजसमायुक्ते सर्वरत्नौषधैर्वृते ॥ १८ ॥
रुचिरे नन्दने नन्दे वासिष्ठे रम्यतामिह ।
प्रजापतिसुते देवि चतुरस्रे महीमये ॥ १९ ॥
सुभगे सुव्रते भद्रे गृहे काश्यपि रम्यतां ।
पूजिते परमाचार्यैर्गन्धमाल्यैरलङ्कृते(२) ॥ २० ॥
भवभूतिकरे देवि गृहे भार्गवि रम्यतां ।
अव्यक्ते चाचते पूर्णे मुनेरङ्गिरसः सुते ॥ २१ ॥
इष्टके त्वं प्रयच्छेष्टं प्रतिष्ठाङ्कारयाम्यहं ।
देशस्वामिपुरस्वामिगृहस्वामिपरिग्रहे ॥ २२ ॥
मनुष्यधनहस्त्यश्वपशुवृद्धिकरी भव ।
गृहप्रवेशेऽपि तथा शिलान्यासं समाचरेत् ॥ २३ ॥
उत्तरेण शुभः प्लक्षो वटः प्राक् स्याद् गृहादितः ।
उदुम्बरश्च याम्येन पश्चिमेऽश्वत्थ उत्तमः ॥ २४ ॥
वामभागे तथोद्यानं कुर्य्याद्वासं गृहे शुभं ।
सायं प्रातस्तु घर्म्माप्तौ शीतकाले दिनान्तरे ॥ २५ ॥
वर्षारात्रे भुवः शोषे सेक्तव्या रोपितद्रुमाः ।
विडङ्गघृतसंयुक्तान् सेचयेच्छीतवारिणा ॥ २६ ॥
फलनाशे कुलत्थैश्च माषैर्मुद्गैस्तिलैर्यवैः ।

१ विजये जयमावहेति ख० ।
२ गन्धमाल्यैरलङ्कृतैरिति ग०, ङ०, च० ।

घृतशीतपयःसेकः फलपुष्पाय सर्वदा ॥ २७ ॥
मत्स्याम्भसा तु सेकेन वृद्धिर्भवति शाखिनः।
आविकाजशकृच्चूर्णं यवचूर्णं तिलानि च ॥ २८ ॥
गोमांसमुदकञ्चेति सप्तरात्रं निधापयेत्।
उत्सेकं सर्ववृक्षाणां फलपुष्पादिवृद्धिदं ॥ २९ ॥
मत्स्योदकेन शीतेन आम्राणां सेक इष्यते(१)।
प्रशस्तं चाप्यशोकानां कामिनीपादताडनं ॥ ३० ॥
खर्जूरनारिकेलादेर्लवणाद्भिर्विवर्द्धनं।
विडङ्गमत्स्यमांसाद्भिः सर्वेषां दोहदं शुभं ॥ ३१ ॥
इत्याग्नेये महापुराणे वाक्यादिर्नाम षट्चत्वारिंशदधिकद्विशततमोऽध्यायः॥



## अथ सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः।

—:○:—

### पुष्पादिपूजाफलं।

अग्निरुवाच। पुष्पैस्तु पूजनाद्विष्णुः सर्वकार्य्येषु सिद्धिदः।
मालती मल्लिका यूथी पाटला करवीरकं ॥ १ ॥
पावन्तिरतिमुक्तश्च(२) कर्णिकारः कुरण्टकः।

---

१ सेक उच्यते इति ख॰।
२ पावन्तिकातिमक्तश्चेति ग॰।

कुब्जकस्तगरो नीपो बाणो बर्व्वरमल्लिका ॥ २ ॥
अशोकस्तिलकः कुन्दः पूजायै स्यात्तमालजं ।
विल्वपत्रं शमीपत्रं पत्रं भृङ्गरजस्य तु ॥ ३ ॥
तुलसीकालतुलसीपत्रं वासकमर्च्चने ।
केतकीपत्रपुष्पं च पद्मं रक्तोत्पलादिकं ॥ ४ ॥
नार्कोन्मत्तकद्राक्षी पूजने गिरिमल्लिका ।
कौटजं शाल्मलीपुष्पं कण्टकारीभवन्नहि ॥ ४ ॥
घृतप्रस्थेन विष्णोश्च स्नानञ्चाकोटिसत्फलं ।
आढकेन तु राजा स्यात् घृतक्षीरैर्दिवं व्रजेत् ॥ ५ ॥

इत्याग्नेये महापुराणे पुष्पादिपूजाफलं नाम सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥

---

## अथाष्टचत्वारिंशदधिकद्विशततमोऽध्यायः ॥

### धनुर्वेदः ।

अग्निरुवाच । चतुष्पादं धनुर्वेदं वदे पञ्चविधं द्विज ।
रथनागाश्वपत्तीनां योधांश्चाश्रित्य कीर्त्तितं ॥ १ ॥
यन्त्रमुक्तं पाणिमुक्तं मुक्तसन्धारितं तथा ।
अमुक्तं बाहुयुद्धञ्च पञ्चधा तत् प्रकीर्त्तितं ॥ २ ॥
तत्र शस्त्रास्त्रसम्पत्त्या द्विविधं परिकीर्त्तितं ।

ऋजुमायाविभेदेन भूयो द्विविधमुच्यते ॥ ३ ॥
क्षेपणी चापयन्त्राद्यैर्यन्त्रमुक्तं प्रकीर्त्तितं।
शिलातोमरयन्त्राद्यं पाणिमुक्तं प्रकीर्त्तितं ॥ ४ ॥
मुक्तसन्धारितं ज्ञेयं प्रासाद्यमपि यद्भवेत्।
खड्गादिकममुक्तञ्च नियुद्धं विगतायुधं ॥ ५ ॥
कुर्य्याद्योग्यानि पात्राणि योद्धुमिच्छुर्जितश्रमः।
धनुःश्रेष्ठानि युद्धानि प्रासमध्यानि तानि च ॥ ६ ॥
तानि खड्गजघन्यानि बाहुप्रत्यवराणि च।
धनुर्वेदे गुरुर्विप्रः प्रोक्तो वर्णद्वयस्य च ॥ ७ ॥
युद्धाधिकारः शूद्रस्य स्वयं व्यापादि शिक्षया।
देशस्थैः सङ्करै राज्ञः कार्य्या युद्धे सहायता ॥ ८ ॥
अङ्गुष्ठगुल्फपाण्यङ्घ्रः श्लिष्टाः स्युः सहिता यदि।
दृष्टं समपदं स्थानमेतल्लक्षणतस्तथा ॥ ९ ॥
बाह्याङ्गुलिस्थितौ पादौ स्तब्धजानुबलावुभौ।
त्रिवितस्त्यन्तरास्थानमेतद्वैशाखमुच्यते ॥ १० ॥
हंसपङ्क्त्याकृतिसमे दृश्येते यत्र जानुनी।
चतुर्वितस्तिविच्छिन्ने तदेतन्मण्डलं स्मृतं ॥ ११ ॥
हलाकृतिमयं यत्र स्तब्धजानूरुदक्षिणं।
वितस्त्यः पञ्च विस्तारे तदालीढं प्रकीर्त्तितं ॥ १२ ॥
एतदेव विपर्य्यस्तं प्रत्यालीढमिति स्मृतं(१)।
तिर्य्यग्भूतो भवेद्वामो दक्षिणोऽपि भवेदृजुः ॥ १३॥
गुल्फौ पार्ष्णिग्रहौ चैव स्थितौ पञ्चाङ्गुलान्तरौ।

---

१ प्रत्यालीढ प्रकीर्त्तितमिति ज॰।

स्थानं जातं भवेदेतद् द्वादशाङ्गुलमायतं ॥ १४ ॥
ऋजुजानुर्भवेद्वामो दक्षिणः सुप्रसारितः।
अथवा दक्षिणञ्जानु कुब्जं भवति निश्चलं ॥ १५ ॥
दण्डायतो भवेदेष चरणः सह जानुना।
एवं विकटमुद्दिष्टं द्विहस्तान्तरमायतं ॥ १६ ॥
जानुनी द्विगुणे स्यातामुत्तानौ चरणावुभौ।
अनेन विधियोगेन सम्पुटं परिकीर्त्तितं ॥ १७ ॥
किञ्चिद्विवर्त्तितौ पादौ समदण्डायतौ स्थिरौ।
दृष्टमेव यथान्यायं षोडशाङ्गुलमायतं ॥ १८ ॥
स्वस्तिकेनात्र कुर्वीत प्रणामं प्रथमं द्विज।
कार्मुकं गृह्य वामेन बाणं दक्षिणकेन तु ॥ १९ ॥
वैशाखे यदि वा जाते स्थितो वाप्यथवायतो।
गुणान्तन्तु ततः कृत्वा कार्मुके प्रियकार्मुकः ॥ २० ॥
अधःकोटिन्तु धनुषः फलदेशन्तु पत्रिणः।
धरण्यां स्थापयित्वा तु तोलयित्वा तथैव च ॥ २१ ॥
भुजाभ्यामथ कुब्जाभ्यां प्रकोष्ठाभ्यां शुभव्रत।
तस्य बाणं धनुः श्रेष्ठं पुङ्खदेशे च पत्रिणः ॥ २२ ॥
विन्यासो धनुषश्चैव द्वादशाङ्गुलमन्तरं।
ज्यया विशिष्टः कर्त्तव्यो नातिहीनो न चाधिकः ॥ २३ ॥
निवेश्य कार्मुकं नाभ्यां नितम्बे शरसङ्करं।
उत्क्षिपेदुत्थितं हस्तमन्तरेणाक्षिकर्णयोः ॥ २४ ॥
पूर्वेण मुष्टिना ग्राह्यस्तनाग्रे दक्षिणे शरः।
हरणन्तु ततः कृत्वा शीघ्रं पूर्वं प्रसारयेत् ॥ २५ ॥

नाभ्यन्तरा नैव वाह्या नोर्द्ध्का नाधरा तथा।
न च कुब्जा न चोत्ताना न चला नातिवेष्टिता ॥ २६ ॥
समा स्थैर्य्यगुणोपेता पूर्वदण्डमिव स्थिता।
छादयित्वा ततो लक्ष्यं पूर्व्वेणानेन मुष्टिना ॥ २७ ॥
उरसा तूत्थितो यन्ता त्रिकोणविनतस्थितः।
स्रस्तांसो निश्चलग्रीवो मयूराञ्चितमस्तकः ॥ २८ ॥
ललाटनासावक्त्रांसाः कुर्य्युरक्षसमन्वयेत्।
अन्तरं त्र्यङ्गुलं ज्ञेयं चिवुकस्यांसकस्य च ॥ २९ ॥
प्रथमन्त्र्यङ्गुलं ज्ञेयं द्वितीये द्व्यङ्गुलं स्मृतं।
तृतीयेऽङ्गुलमुद्दिष्टमायतश्चिवुकांसयोः ॥ ३० ॥
गृहीत्वा सायकं पुङ्खात्तर्ज्जन्याङ्गुष्ठकेन तु।
अनामया पुनर्गृह्य तथा मध्यमयापि च ॥ ३१ ॥
तावदाकर्षयेद्वेगाद्यावद्वाणः सुपूरितः।
एवं विधमुपक्रम्य मोक्तव्यं विधिवत् खगं ॥ ३२ ॥
दृष्टिमुष्टिहतं लक्ष्यं भिन्द्याद्वाणेन सुव्रत।
मुक्ता तु([1]) पश्चिमं हस्तं क्षिपेद्वेगेन पृष्ठतः ॥ ३३ ॥
एतदुच्छेदमिच्छन्ति ज्ञातव्यं हि त्वया द्विज।
कूर्परन्तदधः कार्य्यमाकृष्य तु धनुष्मता ॥ ३४ ॥
ऊर्द्धं विमुक्तके कार्य्यं लघुश्लिष्टन्तु मध्यमं।
ज्येष्ठं प्रकृष्टं विज्ञेयं धनुःशास्त्रविशारदैः ॥ ३५ ॥
ज्येष्ठस्तु सायको ज्ञेयो भवेद्द्वादशमुष्टयः।

१ त्यक्त्वा तु इति ज॰।

एकादश तथा मध्यः कनीयान्दशमुष्टयः ॥ २६ ॥
चतुर्हस्तं धनुः श्रेष्ठं त्रयः सार्धन्तु मध्यमं ।
कनीयस्तु त्रयः प्रोक्तं नित्यमेव पदातिनः ॥ २७ ॥
अश्वे रथे गजे श्रेष्ठं तदेव परिकीर्त्तितं ।

इत्याग्नेये महापुराणे धनुर्वेदो नाम अष्टचत्वारिंशद-
धिकद्विशततमोऽध्यायः ॥

## अथोनपञ्चाशदधिकद्विशततमोऽध्यायः ।

—:○:—

### धनुर्वेदकथनं ।

अग्निरुवाच । पूर्णायतं द्विजः कृत्वा ततो मांसैर्गदायुधान् ।
सुनिर्धौतं धनुः कृत्वा यज्ञभूमौ विधापयेत् ॥ १ ॥
ततो वाणं समादद्य इंगित सुसमाहितः ।
तूणमासाद्य बध्नीयाद्दृढां कक्षाञ्च दक्षिणाम् ॥ २ ॥
विलक्ष्यमपि तद्वाणं तत्र चैव सुसंस्थितं ।
ततः समुद्धरेद्वाणं तूणाद्दक्षिणपाणिना ॥ ३ ॥
तेनैव सहितं मध्ये शरं सङ्गृह्य धारयेत् ।
वामहस्तेन वै कर्षा धनुस्तस्मात्समुद्धरेत् ॥ ४ ॥
अयिपमामतिभूत्वा गुणे पुङ्खं निवेशयेत् ।
सम्मोड्य सिंहकर्णेन पुङ्खेनापि समं दृढं ॥ ५ ॥

3325

वामकर्णोपविष्टञ्च फलं वामस्य धारयेत् ।
यथाऽऽन् मध्यमया तत्र वामाङ्गुल्या च धारयेत् ॥ ६ ॥
मनो लक्ष्यगतं कृत्वा मुष्टिना च विधानवित् ।
दक्षिणे गात्रभागे तु कृत्वा वर्णं विमोचयेत् ॥ ७ ॥
ललाटपुटसंस्थानं दण्डं लक्ष्ये निवेशयेत् ।
आकृष्य ताडयेत्तत्र चन्द्रकं षोड़शाङ्गुलम् ॥ ८ ॥
मुक्ता बाणं ततः पश्चादुत्क्षिप्तस्तदा तया ।
निगृह्णीयात् मध्यमया ततोऽङ्गुल्या पुनः पुनः ॥ ९ ॥
अचिलक्ष्यं चिपेत्तूणाच्चतुरस्रञ्च दक्षिणम् ।
चतुरस्रगतं वेध्यमभ्यसेच्चादितः स्थितः ॥ १० ॥
तस्मादनन्तरं तीक्ष्णं पराहृत्तं गतञ्च यत् ।
निम्नमुन्नतवेधञ्च अभ्यसेत् चिप्रकन्ततः ॥ ११ ॥
वेध्यस्थानेष्वथैतेषु सत्त्वस्य पुटकाननुः ।
हस्तावापशतैश्चित्रैस्तर्जयेद्गुस्तरैरपि ॥ १२ ॥
तस्मिन्(१) वेध्यगते विप्र द्वे वेध्ये दृढसञ्ज्ञके ।
द्वे वेध्ये दुष्करे वेध्ये द्वे तथा चित्रदुष्करे ॥ १३ ॥
न तु निम्नञ्च(२) तीक्ष्णञ्च दृढवेध्ये प्रकीर्त्तिते ।
निम्नं दुष्करमुद्दिष्टं वेध्यमूर्द्धं गतञ्च यत् ॥ १४ ॥
मस्तकायनमध्ये तु चित्रदुष्करसञ्ज्ञके ।
एवं वेध्यगणं कृत्वा दक्षिणेनेतरेण च ॥ १५ ॥
आरोहेत् प्रथमं वीरो जितलक्ष्यस्ततो नरः ।
एष एव विधिः प्रोक्तस्तत्र दृष्टः प्रयोक्तृभिः ॥ १६ ॥

---

१ अस्मिन्निति ख०, ङ०, ञ० च ।　　२ मस्तकेति घ०, ञ० च ।



3325

अधिकं भ्रमणं तस्य तस्मादुद्वेध्यात् प्रकीर्त्तितम् ।
लक्ष्यं स योजयेत्तत्र पत्रिपत्रगतं दृढ़म् ॥ १७ ॥
भ्रान्तं प्रचलितञ्चैव स्थिरं यच्च भवेदति ।
समन्तात्ताडयेद् भिन्द्याच्छेदयेद्व्यथयेदपि ॥ १८ ॥
कर्म्मयोगविधानज्ञो ज्ञात्वैवं विधिमाचरेत् ।
मनसा चक्षुषा दृष्ट्या योगशिक्षुर्यमं जयेत् ॥ १९ ॥

इत्याग्नेये महापुराणे धनुर्वेदो नामोनपञ्चाशदधिक-
द्विशततमोऽध्यायः ॥

---

## अथ पञ्चाशदधिकद्विशततमोऽध्यायः ।

——०%०——

### धनुर्व्वेदकथनम् ।

अग्निरुवाच । जितहस्तो जितमतिर्जितदृग्लक्ष्यसाधकः ।
नियतां सिद्धिमासाद्य ततो वाहनमारुहेत् ॥ १ ॥
दशहस्तो भवेत् पाशो वृत्तः करमुखस्तथा ।
गुणकार्पासमुञ्जानां भङ्गस्नायुर्कवर्म्मिणाम् ॥ २ ॥
अन्येषां सुदृढानाञ्च सुकृतं परिवेष्टितम् ।
तथा त्रिंशत्समं पाशं बुधः कुर्य्यात् सुवर्त्तितम् ॥ ३ ॥
कर्त्तव्यं शिक्षकैस्तस्य स्थानं कक्षासु वै तदा ।
वामहस्तेन सङ्गृह्य दक्षिणेनोद्धरेत्ततः ॥ ४ ॥
कुण्डलस्याकृतिं कृत्वा भ्राम्यैकं मस्तकोपरि ।

क्षिपेत् तृणमये तूर्णं पुरुषे चर्म्मवेष्टिते(१) ॥ ५ ॥
वल्गिते च प्लुते चैव तथा प्रव्रजितेषु च।
समयोगविधिं ज्ञात्वा(२) प्रयुञ्जीत सुशिक्षितम् ॥ ६ ॥
विजित्वा तु यथान्यायं ततो बन्धं समाचरेत्।
कट्याम्बद्धा ततः खड्गं वामपार्श्वावलम्बितम् ॥ ७ ॥
दृढं विगृह्य वामेन निष्कर्षेद्दक्षिणेन तु।
षडङ्गुलपरीणाहं सप्तहस्तसमुच्छ्रितं ॥ ८ ॥
अयोमय्यः शलाकाश्च वर्माणि विविधानि च।
अर्द्धहस्ते समे चैव तिर्य्यगूर्द्धगतं तथा ॥ ९ ॥
योजयेद्विधिना येन तथात्वङ्कथ्यतः शृणु।
तूणचर्म्मावनद्धाङ्गं स्थापयित्वा नरं दृढं ॥ १० ॥
करेणादाय लगुडं दक्षिणाङ्गुलकं नरं।
उदास्य घातयेत्तस्य नासस्तेन शिरोहृदं ॥ ११ ॥
उभाभ्यामथ हस्ताभ्यां कुर्य्यात्तस्य निपातनं।
अक्लेशेन ततः कुर्व्वन् वधे सिद्धिः प्रकीर्त्तिता ॥ १२ ॥
वाहानां श्रमकरणं प्रचारार्थं पुरा तव।

इत्याग्नेये महापुराणे धनुर्वेदो नाम पञ्चाशदधिक-

द्विशततमोऽध्यायः ॥

---

१ चर्म्मवेष्टिते इति घ०। 　　२ ज्ञात्वेति ट०।

## अथैकपञ्चाशदधिकद्विशततमोऽध्यायः ।

——000——

### धनुर्व्वेदकथनं ।

अग्निरुवाच । भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विप्लुतं सृतं ।
सम्पातं समुदीशञ्च श्येनपातमथाकुलं ॥ १ ॥
उद्धूतमवधूतञ्च सव्यं दक्षिणमेव च ।
अनालक्षितविस्फोटौ करालेन्द्रमहासखौ(१) ॥ २ ॥
विकरालनिपातौ च विभीषणभयानकौ ।
समग्रार्द्धतृतीयांशपादपादार्द्धवारिजाः ॥ ३ ॥
प्रत्यालीढमथालीढं वराहं लुलितन्तथा ।
इति द्वात्रिंशतो ज्ञेयाः खड्गचर्म्मविधौ रणे ॥ ४ ॥
परावृत्तमपावृत्तं गृहीतं लघुसञ्ज्ञितं ।
ऊर्द्धं क्षिप्तमधः क्षिप्तं सन्धारितंविधारितं ॥ ५ ॥
श्येनपातं गजपातं ग्राहग्राह्यन्तथैव च ।
एवमेकादशविधा ज्ञेयाः पाशविधा रणाः ॥ ६ ॥
ऋज्वायतं विशालञ्च तिर्य्यग्भ्रामितमेव च ।
पञ्चकर्म्म विनिर्द्दिष्टं व्यस्ते पाशे महात्मभिः ॥ ७ ॥
छेदनं भेदनं पातो भ्रमणं शयनं(२) तथा ।
विकर्त्तनं कर्त्तनञ्च चक्रकर्म्मेदमेव च ॥ ८ ॥
आस्फोटः क्ष्वेडनं भेदस्त्रासान्दोलितकौ तथा ।

---

१ करालेन्द्रमहारवाविति क०, ज०, ञ० च । २ शमनमिति क०, ज०, ञ० च ।

मूलकर्माणि जानीहि पट्टमाघातसञ्ज्ञितं ॥ ८ ॥
दृष्टिघातं भुजाघातं पार्श्वघातं द्विजोत्तम ।
ऋजुपक्षेपुणा पातं तोमरस्य प्रकीर्त्तितं ॥ १० ॥
आहतं विप्र गोमूत्रप्रभूतद्दमलासनं ।
ततोर्द्धगात्रं नमितं वामदक्षिणमेव च ॥ ११ ॥
आहत्तञ्च पराहत्तं पादोद्धूतमवप्लुतं ।
हंसमर्द्दं विमर्द्दञ्च(१) गदाकर्म प्रकीर्त्तितं ॥ १२ ॥
करालमवघातञ्च दंशोपप्लुतमेव च ।
क्षिप्तहस्तं स्थितं शून्यं परशोस्तु विनिर्द्दिशेत् ॥ १३ ॥
ताडनं छेदनं विप्र तथा चूर्णनमेव च ।
मुद्गरस्य तु कर्माणि तथा प्लवनघातनं ॥ १४ ॥
संश्रान्तमथ विश्रान्तं गोविसर्गं सुदुर्द्धरं ।
भिन्दिपालस्य कर्माणि लगुडस्य च तान्यपि ॥ १५ ॥
अन्त्यं मध्यं पराहत्तं निदेशान्तं द्विजोत्तम ।
वज्रस्यैतानि कर्माणि पट्टिशस्य च तान्यपि ॥ १६ ॥
हरणं छेदनं घाती बलोद्धारणमायतं ।
कृपाणकर्म निर्द्दिष्टं पातनं स्फोटनं तथा ॥ १७ ॥
त्रासनं रक्षणं घाती बलोद्धरणमायतम् ।
क्षेपणीकर्म निर्द्दिष्टं यन्त्रकर्मैतदेव तु ॥ १८ ॥
सन्त्यागमवदंशश्च वराहोद्धूतकं तथा ।
हस्तावहस्तमालीनमेकहस्तावहस्तके ॥ १८ ॥
द्विहस्तबाहुपाशे च कटिरेचितकोद्गते ।

१ हंसमार्गं विमार्गञ्चेति ख०, ज० च। समार्गञ्च विमार्गञ्चेति ह०।

उरोललाटघाते च भुजाविधमनन्तथा ॥ २० ॥
करोद्धूतं विमानञ्च पादाहति विपादिकं ।
गात्रसंश्लेषणं शान्तं तथा गात्रविपर्य्ययः ॥ २१ ॥
ऊर्द्धप्रहारं घातञ्च गोमूत्रं सव्यदक्षिणे ।
पारकन्तारकं दण्ड(१) करवीरन्धमाकुलं ॥ २२ ॥
तिर्य्यग्बन्धमपामार्गं(२) भीमवेगं सुदर्शनं ।
सिंहाक्रान्तं गजाक्रान्तं गर्द्दभाक्रान्तमेव च ॥ २३ ॥
गदाकर्माणि जानीयान्नियुद्धस्याथ कर्म च ।
आकर्षणं विकर्षञ्च बाहूनां मूलमेव च ॥ २४ ॥
ग्रीवाविपरिवर्त्तञ्च पृष्ठभङ्गं सुदारुणं ।
पर्य्यासनविपर्य्यासौ पशुमारमजाविकं ॥ २५ ॥
पादप्रहारमास्फोटं कटिरेचितकन्तथा ।
गात्राश्लेषं स्कन्धगतं महीव्याजनमेव च ॥ २६ ॥
उरोललाटघातञ्च विस्पष्टकरणन्तथा ।
उद्धूतमवधूतञ्च तिर्य्यङ्मार्गगतं तथा ॥ २७ ॥
गजस्कन्धमवक्षेपमपराङ्मुखमेव च ।
देवमार्गमधोमार्गममार्गगमनाकुलं ॥ २८ ॥
यष्टिघातमवक्षेपौ वसुधादारणन्तथा ।
जानुबन्धं भुजाबन्धं गात्रबन्धं सुदारुणं ॥ २९ ॥
विपृष्ठं सोदकं शुभ्रं भुजावेष्टितमेव च ।
सन्नद्धः संयुगे भाव्यं मन्त्रैस्तैर्गजादिभिः ॥ ३० ॥
यराङ्कुशधरौ चोभौ एको ग्रीवागतोऽपरः ।

१ पारक नारकं मपद्मिति ख॰, ज॰ च । २ तिर्य्यगूर्द्धमपामार्गमिति ख॰, ज॰ च ।

स्कन्धगौ द्वौ च धानुष्कौ द्वौ च खड्गधरौ गजे ॥ ३१ ॥
रथे रथे गजे चैव तुरङ्गाणां त्रयं भवेत्।
धानुष्काणान्त्रयं प्रोक्तं रक्षार्थं तुरगस्य च ॥ ३२ ॥
धन्विनो रक्षणार्थाय चर्मिणन्तु(१) नियोजयेत्।
स्वमन्त्रैः शस्त्रमभ्यर्च्य शास्त्रन्त्रैलोक्यमोहनं ॥ ३३ ॥
यो युद्धे याति स जयेदरीन् सम्पालयेद्भुवं ॥

इत्याग्नेये महापुराणे धनुर्वेदो नामैकपञ्चाशदधिकद्विशततमोऽध्यायः॥

## अथ द्विपञ्चाशदधिकद्विशततमोऽध्यायः।

———000———

### व्यवहारकथनं।

अग्निरुवाच। व्यवहारं प्रवक्ष्यामि नयानयविवेकदं।
चतुष्पाच्च चतुःस्थानश्चतुःसाधन उच्यते ॥ १ ॥
चतुर्हितश्चतुर्व्यापी चतुष्कारी च कीर्त्यते।
अष्टाङ्गोऽष्टादशपदः शतशाखस्तथैव च ॥ २ ॥
त्रियोनिर्द्व्यभियोगश्च द्विद्वारो द्विगतिस्तथा।
धर्मश्च व्यवहारश्च चरित्रं राजशासनं ॥ ३ ॥
चतुष्पाद्व्यवहाराणामुत्तरः पूर्वसाधकः।
तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिषु ॥ ४ ॥

१ चर्मिं चन्विनि घ०, ञ० च।

चरित्रं सङ्ग्रहे पुंसां राजाज्ञायान्तु शासनं।
सामाद्युपायसाध्यत्वाच्चतुःसाधन उच्यते ॥ ५ ॥
चतुर्णामाश्रमाणाञ्च रक्षणाच्च चतुर्हितः।
कर्त्तारं साक्षिणश्चैव सभ्यान्राजानमेव च ॥ ६ ॥
व्याप्नोति पादगो यस्माच्चतुर्व्यापी ततः स्मृतः।
धर्मस्यार्थस्य यशसो लोकपङ्क्तेस्तथैव च ॥ ७ ॥
चतुर्णाङ्करणादेष चतुष्कारी प्रकीर्त्तितः।
राजा सपुरुषः सभ्याः शास्त्रं गणकलेखकौ ॥ ८ ॥
हिरण्यमग्निरुदकमष्टाङ्गः समुदाहृतः।
कामात् क्रोधाच्च लोभाच्च त्रिभ्यो यस्मात् प्रवर्त्तते ॥ ९ ॥
त्रियोनिः कीर्त्यते तेन त्रयमेतद्विवादकृत्।
द्व्यभियोगस्तु विज्ञेयः शङ्कातत्त्वाभियोगतः ॥ १० ॥
शङ्कासद्भिस्तु संसर्गात्तत्त्वपोढ़ादिदर्शनात्।
पक्षद्वयाभिसम्बन्धाद्द्विद्वारः समुदाहृतः ॥ ११ ॥
पूर्ववादस्तयोः पक्षः प्रतिपक्षस्त्वनन्तरः।
भूतच्छलानुसारित्वाद्द्विगतिः समुदाहृता ॥ १२ ॥
ऋणन्देयमदेयञ्च येन यत्र यथा च यत्।
दानग्रहणधर्मश्च ऋणादानमिति स्मृतम् ॥ १३ ॥
स्वद्रव्यं यत्र विश्रम्भान्निक्षिपत्यविशङ्कितः।
निक्षेपनाम तत् प्रोक्तं व्यवहारपदं बुधैः ॥ १४ ॥
वणिक्प्रभृतयो यत्र कर्म्म सम्भूय कुर्वते।
तत्सम्भूयसमुत्थानं व्यवहारपदं विदुः ॥ १५ ॥
दत्त्वा द्रव्यञ्च सम्यग्यः पुनरादातुमिच्छति।

दत्ताप्रदानिकं नाम तद्विवादपदं स्मृतम् ॥ १६ ॥
अभ्युपेत्य च शुश्रूषां यस्तां न प्रतिपद्यते ।
अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यते ॥ १७ ॥
भृत्यानां वेतनस्योक्तादानादानविधिक्रिया ।
वेतनस्यानपाकर्म तद्विवादपदं स्मृतम् ॥ १८ ॥
निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वा प्रहृत्य वा ।
विक्रीयते परोक्षं यत् स ज्ञेयोऽस्वामिविक्रयः ॥ १९ ॥
विक्रीय पण्यं मूल्येन क्रेत्रे यच्च न दीयते ।
*विक्रीयासम्प्रदानन्तद्विवादपदमुच्यते ॥ २० ॥*
क्रीत्वा मूल्येन यत्पण्यं क्रेता न बहु मन्यते ।
क्रीत्वा मूल्येन यत् पण्यं दुष्क्रीतं मन्यते क्रयी ॥ २१ ॥
पाषण्डनैगमादीनां स्थितिः समय उच्यते ।
*समयस्यानपाकर्म तद्विवादपदं स्मृतम् ॥ २२ ॥*
सेतुकेदारमर्य्यादाविक्रष्टाक्रष्टनिश्चयाः ।
क्षेत्राधिकारे यत्र स्युर्विवादः क्षेत्रजस्तु सः ॥ २३ ॥
वैवाहिको विधिः स्त्रीणां यत्र पुंसाञ्च कीर्त्यते ।
स्त्रीपुंसयोगसंज्ञन्तु *तद्विवादपदं स्मृतम्* ॥ २४ ॥
विभागोऽर्थस्य पैतस्य पुत्रैर्यस्तु प्रकल्प्यते ।
दायभागमिति प्रोक्तं तद्विवादपदं बुधैः ॥ २५ ॥
सहसा क्रियते कर्म यत् किञ्चित् बलदर्पितैः ।
तत् साहसमिति प्रोक्तं विवादपदमुच्यते ॥ २६ ॥
देशजातिकुलादीनामाक्रोशन्यङ्गसंयुतम् ।
यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते ॥ २७ ॥

परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः ।
भस्मादिभिश्चोपघातैर्दण्डपारुष्यमुच्यते ॥ २८ ॥
अक्षवध्रशलाकाद्यैर्देवनं द्यूतमुच्यते ।
पणक्रीडावयोभिश्च प्राणिद्यूतसमाह्वयः ॥ २९ ॥
प्रकीर्णकः पुनर्ज्ञेयो व्यवहारो निराश्रयः ।
राज्ञामाज्ञाप्रतीघातस्तत्कर्मकरणन्तथा ॥ ३० ॥
व्यवहारोऽष्टादशपदस्तेषां भेदोऽथ वै शतम् ।
क्रियाभेदान्मनुष्याणां शतशाखो निगद्यते ॥ ३१ ॥
व्यवहारान्नृपः पश्येज् ज्ञानिविप्रैरकोपनः ।
शत्रुमित्रसमाः सभ्या अलोभा श्रुतिवेदिनः ॥ ३२ ॥
अपश्यता(१) कार्यवशात् सभ्यैर्विप्रं नियोजयेत् ।
रागाल्लोभाद्भयाद्वापि स्मृत्यपेतादिकारिणः ॥ ३३ ॥
सभ्याः पृथक् पृथग् दण्ड्या विवादाद्द्विगुणो दमः ।
स्मृत्याचारव्यपेतेन मार्गेण धर्षितः परैः ॥ ३४ ॥
आवेदयति यद्राज्ञे व्यवहारपदं हि तत् ।
प्रत्यर्थिनोऽग्रतो लेख्यं यथा वेदितमर्थिना ॥ ३५ ॥
समामासतदर्द्धाहर्नामजात्यादिचिह्नितम् ।
श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ ॥ ३६ ॥
ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ।
तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा ॥ ३७ ॥
चतुष्पाद्व्यवहारोऽयं विवादेषूपदर्शितः । .

---

१ अपश्यता इत्यत्र पाठो न साधु ।

अभियोगमनिस्तीर्य्य नैनं प्रत्यभियोजयेत् ॥ ३८ ॥
अभियुक्तञ्च नान्येन त्यक्तं विप्रकृतिं नयेत् ।
कुर्य्यात् प्रत्यभियोगन्तु कलहे साहसेषु च ॥ ३९ ॥
उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्य्यनिर्णये ।
निह्नवे भावितो दद्याद्धनं राज्ञे तु तत्समम् ॥ ४० ॥
मिथ्याभियोगाद् द्विगुणमभियोगाद्धनं हरेत् ।
साहसस्तेयपारुष्येष्वभिशापात्यये स्त्रिया ॥ ४१ ॥
विचारयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः ।
देशाद्देशान्तरं याति सृक्किणी परिलेढि च ॥ ४२ ॥
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेव च ।
स्वभावाद्विकृतं गच्छेन्मनोवाक्कायकर्मभिः ॥ ४३ ॥
अभियोगेऽथ वा साक्ष्ये वाग्दुष्टः परिकीर्त्तितः ।
सन्दिग्धार्थं स्वतन्त्रो यः साधयेद्यश्च निष्पतेत् ॥ ४४ ॥
न चाहूतो वदेत् किञ्चिद्धीनो दण्ड्यश्च स स्मृतः ।
साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः ॥ ४५ ॥
पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः ।
सपणश्चेद्विवादः स्यात्तत्र हीनन्तु दापयेत् ॥ ४६ ॥
दण्डं पणं च स्वञ्चैव धनिने धनमेव च ।
छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः ॥ ४७ ॥
भूतमप्यनुपन्यस्तं हीयते व्यवहारतः ।
निह्नुते निखिलानेकमेकदेशविभावितम् ॥ ४८ ॥
दाप्यः सर्वान्नृपेणार्थान्न ग्राह्यस्त्वनिवेदितः ।
स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः ॥ ४९ ॥

अर्थशास्त्राद्धि बलवद्धर्मशास्त्रमिति स्थितिः(१) ।
प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्त्तितम् ॥ ५० ॥
एषामन्यतमाभावे दिव्यान्यतममुच्यते ।
सर्वेष्वेव विवादेषु बलवत्युत्तरा क्रिया ॥ ५१ ॥
आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा ।
पश्यतो ब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी ॥ ५२ ॥
परेण भुज्यमाना या धनस्य दशवार्षिकी ।
आधिसीमोपनिःक्षेपजडबालधनैर्विना ॥ ५३ ॥
तथोपनिधिराजस्त्रीश्रोत्रियाणां धनैरपि ।
आध्यादीनां विहर्तारं धनिने दापयेद्धनं ॥ ५४ ॥
दण्डं च तत्समं राज्ञे शक्त्यपेक्षमथापि वा ।
आगमोऽप्यधिको भुक्तिं विना पूर्वक्रमागतां ॥ ५५ ॥
आगमोपि बलवैव भुक्तिः स्तोकापि यत्र न ।
आगमेन विशुद्धेन भोगो याति प्रमाणताम् ॥ ५६ ॥
अविशुद्धागमो भोगः प्रामाण्यं नाधिगच्छति ।
आगमस्तु कृतो येन सोभियुक्तस्तमुद्धरेत् ॥ ५७ ॥
न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी ।
योभियुक्तः परेतः स्यात् तस्य रिक्थात्तमुद्धरेत् ॥ ५८ ॥
न तत्र कारणं भुक्तिरागमेन विनाकृता ।
बलोपाधिविनिर्वृत्तान् व्यवहारान्निवर्त्तयेत् ॥ ५९ ॥
स्त्रीनक्तमन्तरागारबहिःशत्रुकृतस्तथा ।
मत्तोन्मत्तार्त्तव्यसनिबालभीतप्रयोजितः ॥ ६० ॥

१ भुक्तिरिति ख०, ज० च ।

असम्यक्कृतयैव व्यवहारो न सिद्ध्यति।
प्रनष्टाधिगतं देयं नृपेण धनिने धनं॥ ६१॥
विभावयेन्नचेल्लिङ्गैस्तत्समं दातुमर्हति।
देयचौरहृतं द्रव्यं राज्ञा जनपदाय तु॥ ६२॥
षडोतिभागो वृद्धिः स्यान्मासि मासि सबन्धके।
वर्णक्रमाच्छतं द्वित्रिचतुष्पञ्चकमन्यथा॥ ६३॥
सन्ततिस्तु पशुस्त्रीणां रसस्याष्टगुणा परा।
वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा तथा॥ ६४॥
प्राप्तान्तरात्तु पृथकं सामुद्रादपि विंशतिं।
दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु॥ ६५॥
प्रपन्नं साधयन्नर्थं न वाच्यो नृपतिर्भवेत्।
साध्यमानो नृपं गच्छेद्दण्ड्यो दाप्यश्च तद्धनं॥ ६६॥

इत्याग्नेये महापुराणे व्यवहारो नाम द्विपञ्चाशदधिक-
द्विशततमोऽध्यायः।

---

## अथ त्रिपञ्चाशदधिकद्विशततमोऽध्यायः।

——000——

व्यवहारकथनं।

अग्निरुवाच। गृहीतार्थः क्रमाद्दाप्यो धनिनामधमर्णिकः।
दत्त्वा तु ब्राह्मणायादौ नृपतेस्तदनन्तरम्॥ १॥

राज्ञाधमर्णिको दाप्यः साधिताद्दशकं शतम् ।
पञ्चकन्तु शतं दाप्यः प्राप्तार्थो ह्युत्तमर्णिकः ॥ २ ॥
हीनजातिं परिक्षीणमृणार्थं कर्म्म कारयेत् ।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ॥ ३ ॥
दीयमानं न गृह्णाति प्रयुक्तं यः स्वकन्धनम् ।
मध्यस्थस्थापितं तत्स्याद्वर्द्धते न ततः परं ॥ ४ ॥
ऋक्थग्राह ऋणं दाप्यो योषिद्ग्राहस्तथैव च ।
पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य ऋक्थिनः ॥ ५ ॥
अविभक्तैः कुटुम्बार्थे यदृणन्तु कृतम्भवेत् ।
दद्युस्तदृक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि ॥ ६ ॥
न योषित् पतिपुत्राभ्यां न पुत्रेण कृतं पिता ।
दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतं तथा ॥ ७ ॥
गोपशौण्डिकशैलूषरजकव्याधयोषितां ।
ऋणं दद्यात्पतिस्तासां यस्माद्वृत्तिस्तदाश्रया ॥ ८ ॥
प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत् कृतं ।
स्वयं कृतं वा यदृणं नान्यस्त्री दातुमर्हति ॥ ९ ॥
पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽथ वा(१) ।
पुत्रपौत्रैर्ऋणन्देयं निह्नवे साक्षिभावितम् ॥ १० ॥
सुराकामद्यूतकृतन्दण्डशुल्कावशिष्टकम् ।
वृथा दानं तथैवेह पुत्रो दद्यान्न पैतृकम् ॥ ११ ॥
भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि ।

---

१ व्यसनाभिहतेऽपि वेति ख०, घ०, ञ० च ।

प्रतिभाव्यमृणं ग्राह्यमविभक्तेन च स्मृतम्(१) ॥ १२ ॥
दर्शने प्रत्यये दाने प्रतिभाव्यं विधीयते ।
आद्यौ तु वितथे दाप्या वितथस्य सुता अपि ॥ १३ ॥
दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा ।
न तत्पुत्रा धनं दद्युर्दद्युर्दानाय ये स्थिताः ॥ १४ ॥
बहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवो धनम् ।
एकच्छायाश्रितेष्वेषु धनिकस्य यथा रुचि ॥ १५ ॥
प्रतिभूर्दापितो यत्र प्रकाशं धनिने धनम् ।
द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद्भवेत् ॥ १६ ॥
स्वसन्ततिस्त्रीपशव्यं धान्यं द्विगुणमेव च ।
वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणस्तथा ॥ १७ ।
आधिः प्रणश्येत् द्विगुणे धने यदि न मोक्ष्यते ।
काले कालकृतं नश्येत् फलभोग्यो न नश्यति ॥१८ ॥
गोप्याधिभोग्यो नावृद्धिः सोपकारेऽथ भाविते ।
नष्टो देयो विनष्टश्च दैवराजकृतादृते ॥ १९ ॥
आधेः स्वीकरणात्सिद्धीरक्ष्यमाणोऽप्यसारताम् ।
यातश्चेदन्य आधेयो धनभाग् वा धनी भवेत् ॥ २० ॥
चरित्रं बन्धककृतं सवृद्धं दापयेद्धनं ।
सत्यङ्कारकृतं द्रव्यं द्विगुणं प्रतिदापयेत् ॥ २१ ॥
उपस्थितस्य मोक्तव्य आधिर्दण्डोऽन्यथा भवेत् ।
प्रयोजके सति धनं कुलेन्यस्याधिमाप्नुयात् ॥ २२ ॥
तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः ।

१ प्रतिभाव्यमृणं साक्ष्यमविभक्तैर्न तत् स्मृतमिति ख०, ग०, घ०, ङ०, ज०, ञ० च ।

विना धारणकाद्वापि विक्रीणीते ससाक्षिकम् ॥ २३ ॥
यदा तु द्विगुणीभूतमृणमाधौ तदा खलु ।
मोच्यश्चाधिस्तदुत्पाद्य प्रविष्टे द्विगुणे धने ॥ २४ ॥
व्यसनस्थमनाख्याय हस्तेऽन्यस्य यदर्पयेत् ।
द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत् ॥ २५ ॥
न दाप्योऽपहृतं तत्तु राजदैवकतस्करैः ।
भ्रेषश्चेन्मार्गिते दत्ते दाप्यो दण्डञ्च तत्समम् ॥ २६ ॥
आजीवन् स्वेच्छया दण्ड्यो दाप्यस्तच्चापि सोदयं ।
याचितान्वाहितन्यासे निक्षेपेष्वप्ययं विधिः ॥ २७ ॥

इत्याग्नेये महापुराणे व्यवहारो नाम त्रिपञ्चाशदधिकद्विशततमोऽध्यायः

---

## अथ चतुःपञ्चाशदधिकद्विशततमोऽध्यायः ।

———000———

### दिव्यप्रमाणकथनं ।

अग्निरुवाच । तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः ।
धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः ॥ १ ॥
पञ्चयज्ञक्रियायुक्ताः साक्षिणः पञ्च वा त्रयः ।
यथाजाति यथावर्णं सर्व्वे सर्व्वेषु वा स्मृताः ॥ २ ॥
स्त्रीवृद्धबालकितवमत्तोन्मत्ताभिशस्तकाः ।

रङ्गावतारिपाषण्डिकूटकृद्विकलेन्द्रियाः ॥ ३ ॥
पतितासाप्तसम्बन्धिसहायरिपुतस्कराः ।
असाक्षिणः सर्व्वसाक्षी चौर्य्यपारुष्यसाहसे ॥ ४ ॥
उभयानुमतः साक्षी भवत्येकोपि धर्म्मवित् ।
अब्रुवन् हि नरः साक्ष्यमृणं सदशबन्धकम् ॥ ५ ॥
राज्ञा सर्व्वं प्रदाप्यः स्यात् षट्चत्वारिंशकेऽहनि ।
न ददाति हि यः साक्ष्यं जानन्नपि नराधमः ॥ ६ ॥
स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि ।
साक्षिणः श्रावयेद्वादिप्रतिवादिसमीपगान् ॥ ७ ॥
ये पातककृतां लोका महापातकिनां तथा ।
अग्निदानाञ्च ये लोका ये च स्त्रीबालघातिनां ॥ ८ ॥
तान् सर्व्वान् समवाप्नोति यः साक्ष्यमनृतं वदेत् ।
सुकृतं यत्त्वया किञ्चिज्जन्मान्तरशतैः कृतम् ॥ ९ ॥
तत्सर्व्वं तस्य जानीहि यं पराजयसे मृषा ।
द्वैधे बहूनां वचनं समेषु गुणिनान्तथा ॥ १० ॥
गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तराः ।
यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ॥ ११ ॥
अन्यथा वादिनो यस्य ध्रुवस्तस्य पराजयः ।
उक्तेपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तराः ॥ १२ ॥
द्विगुणा वान्यथा ब्रूयुः कूटाः स्युः पूर्व्वसाक्षिणः ।
पृथक् पृथग्दण्डनीयाः कूटकृत्साक्षिणस्तथा ॥ १३ ॥
विवादाद्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः ।
यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तत्तमोवृतः ॥ १४ ॥

स द्राप्योऽष्टगुणं दण्डं ब्राह्मणन्तु विवासयेत् ।
वर्णिनां हि वधो यत्र तत्र साक्ष्यऽनृतं वदेत् ॥ १५ ॥
यः कश्चिदर्थोऽभिमतः स्वरुचा तु परस्परं ।
लेख्यं तु साक्षिमत् कार्य्यं तस्मिन् धनिकपूर्वकम् ॥१६॥
समामासतदर्द्धाहर्नामजातिस्वगोत्रजैः ।
सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम् ॥ १७ ॥
समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत् ।
मतं मेऽमुकपुत्रस्य यदत्रोपरिलिखितं ॥ १८ ॥
साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम् ।
अत्राहममुकः साक्षी लिखेयुरिति ते समाः ॥ १९ ॥
अलिपिज्ञ ऋणी यः स्यात्लेखयेत् स्वमतन्तु सः ।
साक्षी वा साक्षिणान्येन सर्वसाक्षिसमीपतः ॥ २० ॥
उभयाभ्यर्थितेनैतन्मया ह्यमुकसूनुना ।
लिखितं ह्यमुकेनेति लेखकोऽथान्ततो लिखेत् ॥ २१ ॥
विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितञ्च यत् ।
तत् प्रमाणं स्मृतं सर्वं बलोपधिकृतादृते ॥ २२ ॥
ऋणं लेख्यकृतं देयं पुरुषैस्त्रिभिरेव तु ।
आधिस्तु भुज्यते तावद्यावत्तन्न प्रदीयते ॥ २३ ॥
देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा ।

धनी चोपगतं दद्यात् स्वहस्तपरिचिह्नितम् ॥ २६ ॥
दत्त्वर्णं पाटयेल्लेख्यं शुद्धै वान्यत्तु कारयेत् ।
साक्षिमच्च भवेद्यत्तु तद्दातव्यं ससाक्षिकं ॥ २७ ॥
तुलाग्न्यापो विषं कोषो दिव्यानीह विशुद्धये ।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ॥ २८ ॥
रुच्या वान्यतरः कुर्यादितरो वर्त्तयेच्छिरः ।
विनापि शीर्षकात् कुर्यान्नृपद्रोहेऽथ पातके ॥ २९ ॥
नासहस्राद्धरेत् फालं न तुलां न विषन्तथा ।
नृपार्थेष्वभियोगेषु वहेयुः शुचयः सदा ॥ ३० ॥
सहस्रार्धे तुलादीनि कोषमल्पेऽपि दापयेत् ।
शतार्द्धं दापयेच्छुद्धमशुद्धो दण्डभाग् भवेत् ॥ ३१ ॥
सचैलस्नातमाहूय सूर्योदय उपोषितम् ।
कारयेत्सर्वदिव्यानि नृपब्राह्मणसन्निधौ ॥ ३२ ॥
तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणां ।
अग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य वा ॥ ३३ ॥
तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः ।
प्रतिमानसमीभूतो रेखां कृत्वावतारितः ॥ ३४ ॥

आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्मश्च जानाति नरस्य वृत्तम् ॥ ३५ ॥

त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता ।
सत्यं वदस्व कल्याणि संशयान्मां विमोचय ॥ ३६ ॥

यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय।
शुद्धश्चेद्गमयोर्द्ध्वं मां तुलामित्यभिमन्त्रयेत् ॥ ३७ ॥
करौ विमर्दितव्रीहेर्लक्षयित्वा ततो न्यसेत्।
सप्ताश्वत्थस्य पत्राणि तावत् सूत्रेण वेष्टयेत् ॥ ३८ ॥
त्वमेव सर्वभूतानामन्तश्चरसि पावक।
साक्षिवत् पुण्यपापेभ्यो ब्रूहि सत्यङ्करे मम ॥ ३९ ॥
तस्येत्युक्तवतो लौहं पञ्चाशत्पलिकं समम्।
अग्निवर्णं न्यसेत् पिण्डं हस्तयोरुभयोरपि ॥ ४० ॥
स तमादाय सप्तैव मण्डलानि शनैर्व्रजेत्।
षोडशाङ्गुलकं ज्ञेयं मण्डलं तावदन्तरम् ॥ ४१ ॥
मुक्ताग्निं मृदितव्रीहिरदग्धः शुद्धिमाप्नुयात्।
अन्तरा पतिते पिण्डे सन्देहे वा पुनर्हरेत् ॥ ४२ ॥
पवित्राणां पवित्र त्वं शोध्यं शोधय पावन।
सत्येन माभिरक्षस्व वरुणेत्यभिशस्तकम् ॥ ४३ ॥
नाभिदघ्नोदकस्थस्य गृहीतोरू जलं विशेत्।
समकालमिषुं मुक्तमानीयान्यो जवी नरः ॥ ४४ ॥
यदि तस्मिन्निमग्नाङ्गं पश्येच्च शुद्धिमाप्नुयात्।
त्वं विष ब्राह्मणः पुत्र सत्यधर्मे व्यवस्थित ॥ ४५ ॥
त्रायस्वास्मादभीशापात् सत्येन भव मेऽमृतम्।
एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजं ॥ ४६ ॥
यस्य वेगैर्विना जीर्णं शुद्धिं तस्य विनिर्दिशेत्।
देवानुग्रान् समभ्यर्च्य तत्स्नानोदकमाहरेत् ॥ ४७ ॥
संश्राव्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयम्।

आचतुर्दशमादह्नो यस्य नो राजदैविकम् ॥ ४८ ॥
व्यसनं जायते घोरं स शुद्धः स्यादसंशयम् ।
सत्यवाहनशस्त्राणि गोबीजकनकानि च ॥ ४९ ॥
देवतागुरुपादांश्च इष्टापूर्त्तकृतानि च ।
इत्येते सुकराः प्रोक्ताः शपथाः स्वल्पसंशये ॥ ५० ॥
इत्याग्नेये महापुराणे दिव्यानि प्रमाणानि नाम
चतुःपञ्चाशदधिकद्विशततमोऽध्यायः ॥

---

## अथ पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ।

——०*०——

### दायविभागकथनम् ।

अग्निरुवाच । विभागश्चेत् पिता कुर्यादिच्छया विभजेत् सुतान् ।
ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः ॥ १ ॥
यदि दद्यात् समानंशान् कार्याः पत्न्यः समांशिकाः ।
न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा ॥ २ ॥
शक्तस्यानीहमानस्य किञ्चिद्दत्त्वा पृथक् क्रिया ।
न्यूनाधिकविभक्तानां धर्म्म्याय पितृना कृतः ॥ ३ ॥
विभजेयुः सुताः पित्रोरुर्द्ध्वं रिक्थमृणं समम् ।
मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वयः ॥ ४ ॥
पितृद्रव्याविनाशेन यदन्यत् स्वयमर्जयेत् ।
मैत्रमौद्वाहिकञ्चैव दायादानाञ्च तद्भवेत् ॥ ५ ॥
सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः ।

अनेकपितृकाणान्तु पितृतो भागकल्पना ॥ ६ ॥
भूर्या पिता महोपात्ता निबन्धो द्रव्यमेव वा।
तत्र स्यात् सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः ॥ ७ ॥
विभक्तेषु सुतो जातः सवर्णायां विभागभाक्।
दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात् ॥ ८ ॥
क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः।
दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥ ९ ॥
पितृभ्यां यस्य यद्दत्तं तत्तस्यैव धनं भवेत्।
पितुरूर्द्ध्वं विभजतां माताप्यंशं समं हरेत् ॥ १० ॥
असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः।
भगिन्यश्च निजादंशाद्दत्त्वांशन्तु तुरीयकं ॥ ११ ॥
चतुस्त्रिद्व्येकभागाः स्युर्वर्णशो ब्राह्मणात्मजाः।
क्षत्रजास्त्रिद्व्येकभागा विड्जास्तु द्व्येकभागिनः ॥ १२ ॥
अन्योन्यापहृतं द्रव्यं विभक्ते यत्तु दृश्यते।
तत् पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः ॥ १३ ॥
अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः।
उभयोरप्यसावृक्थी पिण्डदाता च धर्मतः ॥ १४ ॥
औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥ १५ ॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः।
कानीनः कन्यकाजातो मातामहसुतो मतः ॥ १६ ॥
अक्षतायामक्षतायां वा जातः पौनर्भवः सुतः।
दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥ १७ ॥

क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयं कृतः ।
दत्तात्मा तु स्वयं दत्तो गर्भे विन्नः सहोढजः ॥ १८ ॥
उत्सृष्टो गृह्यते यस्तु सोपविद्धो भवेत् सुतः ।
पिण्डदोंऽशहरश्चैषां पूर्व्वाभावे परः परः ॥ १९ ॥
सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः ।
जातोऽपि दास्यां शूद्रस्य कामतोंऽशहरो भवेत् ॥ २० ॥
मृते पितरि कुर्य्युस्तं भ्रातरस्त्वर्द्धभागिकं ।
अभ्रातृको हरेत् सर्व्वं दुहितॄणां सुतादृते ॥ २१ ॥
पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ।
तत्सुतो गोत्रजो बन्धुः शिष्यः सब्रह्मचारिणः ॥ २२ ॥
एषामभावे पूर्व्वस्य धनभागुत्तरोत्तरः ।
स्वर्यातस्य ह्यपुत्रस्य सर्व्ववर्णेष्वयं विधिः ॥ २३ ॥
वानप्रस्थयतिब्रह्मचारिणामृक्थभागिनः ।
क्रमेणाचार्य्यसच्छिष्यधर्म्मभ्रात्रेकतीर्थिनः ॥ २४ ॥
संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः ।
दद्याच्चापहरेच्चांशं जातस्य च मृतस्य च ॥ २५ ॥
अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यधनं हरेत् ।
असंसृष्ट्यपि चादद्यात्सोदर्य्यो नान्यमातृजः ॥ २६ ॥
पतितस्तत्सुतः क्लीवः पङ्गुरुन्मत्तको जडः ।
अन्धोऽचिकित्स्यरोगाद्या भर्त्तव्यास्तु निरंशकाः ॥ २७ ॥
औरसाः क्षेत्रजास्त्वेषां निर्दोषा भागहारिणः ।
सुताश्चैषां प्रभर्त्तव्या यावद्वै भर्त्तृसात्कृताः ॥ २८ ॥
अपुत्रा योषितश्चैषां भर्त्तव्याः साधुवृत्तयः ।

निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ॥ २८ ॥
पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतं ।
आधिवेदनिकञ्चैव स्त्रीधनं परिकीर्त्तितं ॥ ३० ॥
बन्धुदत्तं तथा शुल्कमन्वाधेयकमेव च ।
अप्रजायामतीतायां बान्धवास्तदवाप्नुयुः ॥ ३१ ॥
अप्रजास्त्रीधनं भर्त्तुर्ब्राह्मादिषु चतुर्ष्वपि ।
दुहितॄणां प्रसूता चेच्छेषे तु पितृगामि तत् ॥ ३२ ॥
दत्वा कन्यां हरन् दण्ड्यो व्ययं दद्याच्च सोदयम् ।
मृतायां दत्तमादद्यात् परिशोध्योभयव्ययम् ॥ ३३ ॥
दुर्भिक्षे धर्मकार्य्ये च व्याधौ संप्रतिरोधके ।
गृहीतं स्त्रीधनं भर्त्ता न स्त्रियै दातुमर्हति ॥ ३४ ॥
अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम् ।
न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्धं प्रकीर्त्तितम् ॥ ३५ ॥
विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः ।
विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः ॥ ३६ ॥

इत्याग्नेये महापुराणे दायविभागो नाम पञ्चपञ्चाशदधिक-
द्विशततमोऽध्यायः ॥

# अथ षट्पञ्चाशदधिकद्विशततमोऽध्यायः ।

———०:०———

सीमाविवादादिनिर्णयः ।

अग्निरुवाच । सेतुर्वा विवादे क्षेत्रस्य सामन्ताः स्थविरा गणाः ।
गोपाः सीमाकृषाणा ये सर्वे च वनगोचराः ॥ १ ॥
नयेयुरेते सीमानं स्थलाङ्गारतुषद्रुमैः ।
सेतुवल्मीकनिम्नास्थिचैत्याद्यैरुपलक्षिताम् ॥ २ ॥
सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशापि वा (१) ।
रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः ॥ ३ ॥
अनृते तु पृथग्दण्ड्या राज्ञा मध्यमसाहसम् ।
अभावे ज्ञातृचिह्नानां राजा सीम्नः प्रवर्त्तकः ॥ ४ ॥
आरामायतनग्रामनिपानोद्यानवेश्मसु ।
एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहेषु च ॥ ५ ॥
मर्य्यादायाः प्रभेदेषु क्षेत्रस्य हरणे तथा ।
मर्य्यादायाश्च दण्ड्याः स्युरधमोत्तममध्यमाः ॥ ६ ॥
न निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः ।
परभूमिं हरन् कूपः स्वल्पक्षेत्रो बहूदकः ॥ ७ ॥
स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रकल्पयेत् ।
उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः ॥ ८ ॥
फालाहृतमपि क्षेत्रं यो न कुर्य्यान्न कारयेत् ।

१ चत्वारोऽथ दशापि वेति ख०,ग०,ज० च ।

स प्रदाप्योऽष्टफलं चैवमन्येन कारयेत् ॥ ६ ॥
मासानष्टौ तु महिषी सस्यघातस्य कारिणी ।
दण्डनीया तदर्द्धन्तु गौस्तदर्द्धमजाविकं ॥ १० ॥
भक्षयित्वोपविष्टानां यथोक्ताद् द्विगुणो दमः ।
सममेषां विवीतेपि खरोष्ट्रं महिषीसमम् ॥ ११ ॥
यावत् सस्यं विनश्येत्तु तावत् क्षेत्री फलं लभेत् ।
पालस्ताड्योऽथ गोस्वामी पूर्व्वोक्तं दण्डमर्हति ॥ १२ ॥
पथि ग्रामविवीतान्ते क्षेत्रे दोषो न विद्यते ।
अकामतः कामचारे चौरवद्दण्डमर्हति ॥ १३ ॥
महोक्षोत्सृष्टपशवः सूतिकागन्तुका च गौः ।
पालो येषान्तु ते मोच्या दैवराजपरिप्लुताः ॥ १४ ॥
यथार्पितान् पशून् गोपः सायं प्रत्यर्पयेत्तथा ।
प्रमादमृतनष्टांश्च प्रदाप्यः कृतवेतनः ॥ १५ ॥
पालदोषविनाशे तु पाले दण्डो विधीयते ।
अर्द्धत्रयोदशपणः स्वामिनो द्रव्यमेव च ॥ १६ ॥
ग्रामेच्छया गोप्रचारो भूमिराजवशेन वा ।
द्विजस्तृणैधःपुष्पाणि सर्वतः स्ववदाहरेत् ॥ १७ ॥
धनुःशतं परीणाहो ग्रामक्षेत्रान्तरं भवेत् ।
द्वे शते खर्वटस्य स्यान्नगरस्य चतुःशतम् ॥ १८ ॥
स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते ।
हीनाद्रहो हीनमूल्ये वेलाहीने च तस्करः ॥ १९ ॥
नष्टापहृतमासाद्य हर्त्तारं ग्राहयेन्नरम् ।
देशकालातिपत्तौ वा गृहीत्वा स्वयमर्पयेत् ॥ २० ॥

विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपो दमम् ।
क्रेता मूल्यमवाप्नोति तस्माद्यस्तत्र विक्रयी ॥ २१ ॥
आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा ।
पञ्चबन्धो दमस्तस्य राज्ञे तेनाप्यभाविते ॥ २२ ॥
हृतं प्रनष्टं यो द्रव्यं परहस्तादवाप्नुयात् ।
अनिवेद्य नृपे दण्ड्यः स तु षण्णवतिं पणान् ॥ २३ ॥
शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतं ।
अर्व्वाक् संवत्सरात् स्वामी लभते परतो नृपः ॥ २४ ॥
पणानेकशफे दद्याच्चतुरः पञ्च मानुषे ।
महिषोष्ट्रगवां द्वौ द्वौ पादं पादमजाविके ॥ २५ ॥
स्वकुटुम्बाविरोधेन देयं दारसुतादृते ।
नान्वये सति सर्व्वस्वं देयं यच्चान्यसंश्रुतम् ॥ २६ ॥
प्रतिग्रहः प्रकाशः स्यात् स्थावरस्य विशेषतः ।
देयं प्रतिश्रुतञ्चैव दत्त्वा नापहरेत् पुनः ॥ २७ ॥
दशैकपञ्चसप्ताहमासत्र्यहार्द्धमासिकं ।
बीजायोवाह्यरत्नस्त्रीदोह्यपुंसां परीक्षणम् ॥ २८ ॥
अग्नौ सुवर्णमक्षीणं द्विपलं रजते शते ।
अष्टौ त्रपुणि सीसे च ताम्रे पञ्चदशायसि ॥ २९ ॥
शते दशपला वृद्धिरौर्णे कार्पासिके तथा ।
मध्ये पञ्चपला ज्ञेया सूक्ष्मे तु त्रिपला मता ॥ ३० ॥
कार्म्मिके रोमबद्धे च त्रिंशद्भागः क्षयो मतः ।
न क्षयो न च वृद्धिस्तु कौशेये वल्कलेषु च ॥ ३१ ॥
देशं कालञ्च भोगञ्च ज्ञात्वा नष्टे बलाबलम् ।

द्रव्याणां कुशला ब्रूयुर्यत्तद्दाप्यमसंशयम् ॥ ३२ ॥
बलाद्दासीकृतश्चौरैर्विक्रीतश्चापि मुच्यते ।
स्वामिप्राणप्रदो भक्तत्यागात्तन्निष्क्रयादपि ॥ ३३ ॥
प्रव्रज्यावसितो राज्ञो दास आमरणान्तिकः ।
वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः ॥ ३४ ॥
कृतशिल्पोऽपि निवसेत् कृतकालं गुरोर्गृहे ।
अन्तेवासी गुरुप्राप्तभोजनस्तत्फलप्रदः ॥ ३५ ॥
राजा कृत्वा पुरे स्थानं ब्राह्मणान्न्यस्य तत्र तु ।
त्रैविद्यं वृत्तिमद्ब्रूयात् स्वधर्मः पाल्यतामिति ॥ ३६ ॥
निजधर्माविरोधेन यस्तु सामयिको भवेत् ।
सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥ ३७ ॥
गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः ।
सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत् ॥ ३८ ॥
कर्त्तव्यं वचनं सर्वैः समूहहितवादिभिः ।
यस्तत्र विपरीतः स्यात्स दाप्यः प्रथमं दमम् ॥ ३९ ॥
समूहकार्य्यप्रहितो यल्लभेत्तत्तदर्पयेत् ।
एकादशगुणं दाप्यो यद्यसौ नार्पयेत् स्वयम् ॥ ४० ॥
वेदज्ञाः शुचयोऽलुब्धा भवेयुः कार्यचिन्तकाः ।
कर्त्तव्यं वचनं तेषां समूहहितवादिनां ॥ ४१ ॥
श्रेणिनैगमपाषण्डिगणानामप्ययं विधिः ।
भेदञ्चैषां नृपो रक्षेत् पूर्ववृत्तिञ्च पालयेत् ॥ ४२ ॥
गृहीतवेतनः कर्म्म त्यजन् द्विगुणमावहेत् ।
अगृहीते समं दाप्यो भृत्यैरक्ष्य उपस्करः ॥ ४३ ॥

दाप्यस्तु दशमं भागं वाणिज्यपशुसस्यतः।
अनिश्चित्य भृतिं यस्तु कारयेत्स महीक्षिता ॥ ४४ ॥
देयं कालञ्च योऽतीयात् कर्म कुर्याच्च योऽन्यथा।
तत्र तु स्वामिनश्छन्दोऽधिकं देयं कृतेऽधिके ॥ ४५ ॥
यो यावत् कुरुते कर्म तावत्तस्य तु वेतनम्।
उभयोरप्यसाध्यं चेत् साध्ये कुर्याद्यथाश्रुतम् ॥ ४६ ॥
अराजदैविकन्नष्टं भाण्डं दाप्यस्तु वाहकः।
प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणां भृतिम् ॥ ४७ ॥
प्रक्रान्ते सप्तमं भागं चतुर्थं पथि संत्यजन्।
भृतिमर्द्धपथे सर्व्वां प्रदाप्यस्त्याजकोऽपि च ॥ ४८ ॥
ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतं।
गृह्णीयाद्धूर्त्तकितवादितराद्दशकं शतं ॥ ४९ ॥
स सम्यक्पालितो दद्याद्राज्ञे भागं यथाकृतं।
जितमुद्ग्राहयेज्जेत्रे दद्यात्सत्यं वचः क्षमो ॥ ५० ॥
प्राप्ते नृपतिना भागे प्रसिद्धे धूर्त्तमण्डले।
जितं ससभिके स्थाने दापयेदन्यथा न तु ॥ ५१ ॥
द्रष्टारो व्यवहाराणां साक्षिणश्च त एव हि।
राज्ञा सचिह्ना निर्वास्याः कूटाक्षोपधिदेविनः ॥ ५२ ॥
द्यूतमेकमुखं कार्य्यं तस्करज्ञानकारणात्।
एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये ॥ ५३ ॥
इत्याग्नेये महापुराणे सीमाविवादादिनिर्णयो नाम
षट्पञ्चाशदधिकद्विशततमोऽध्यायः॥

---

## अथ सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ।



### वाक्पारुष्यादिप्रकरणम् ।

अग्निरुवाच । सत्यासत्यान्यथा स्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिणां ।
क्षेपं करोति चेद्दण्ड्यः पणानर्द्धत्रयोदश ॥ १ ॥
अभिगन्तास्मि भगिनीं मातरं वा तवेति च ।
शपन्तं दापयेद्राजा पञ्चविंशतिकं दमं ॥ २ ॥
अर्द्धोऽधमेषु द्विगुणः परस्त्रीपूत्तमेषु च ।
दण्डप्रणयनं कार्य्यं वर्णजात्युत्तराधरैः ॥ ३ ॥
प्रातिलोम्यापवादेषु द्विगुणत्रिगुणा दमाः ।
वर्णानामानुलोम्येन तस्मादेवार्द्धहानितः ॥ ४ ॥
बाहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः ।
शत्यस्ततोऽर्द्धिकः पादनासाकर्णकरादिषु ॥ ५ ॥
अशक्तस्तु वदन्नेवन्दण्डनीयः पणान् दश ।
तथा शक्तः प्रतिभुवं दद्यात् क्षेमाय तस्य तु(१) ॥ ६ ॥
पतनीयकृते क्षेपे दण्डो मध्यमसाहसः ।
उपपातकयुक्ते तु दाप्यः प्रथमसाहसं ॥ ७ ॥
त्रैविद्यनृपदेवानां क्षेप उत्तमसाहसः ।

---

१ दद्यादित्यत्र दाप्य इति पाठो भवितुं युक्तः ।

मध्यमो जातिपूगानां प्रथमो ग्रामदेशयोः ॥ ८ ॥
असाक्षिकहते चिह्नैर्युक्तिभिश्चागमेन च ।
द्रष्टव्यो व्यवहारस्तु कूटचिह्नकृताद्भयात् ॥ ९ ॥
भस्मपङ्करजःस्पर्शे दण्डो दशपणः स्मृतः ।
अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने द्विगुणः स्मृतः ॥ १० ॥
समेष्वेवं परस्त्रीषु द्विगुणस्तूत्तमेषु च ।
हीनेष्वर्द्धं दमो मोहमदादिभिरदण्डनम् ॥ ११ ॥
विप्रपीडाकरं च्छेद्यमङ्गमब्राह्मणस्य तु ।
उद्गूर्णे प्रथमो दण्डः संस्पर्शे तु तदर्द्धिकः ॥ १२ ॥
उद्गूर्णे हस्तपादे तु दशविंशतिकौ दमौ ।
परस्परन्तु सर्व्वेषां शास्त्रे मध्यमसाहसः ॥ १३ ॥
पादकेशांशुककरोल्लुञ्चनेषु पणान् दश ।
पीडाकर्षांशुकावेष्टपादाध्यासे शतन्दमः ॥ १४ ॥
शोणितेन विना दुःखङ्कुर्वन् काष्ठादिभिर्नरः ।
द्वात्रिंशतं पणान्(१) दाप्यो द्विगुणं दर्शनेऽसृजः ॥ १५ ॥
करपाददतो भङ्गे च्छेदने कर्णनासयोः ।
मध्यो दण्डो व्रणोद्भेदे मृतकल्पहते तथा ॥ १६ ॥
चेष्टाभोजनवाग्रोधे नेत्रादिप्रतिभेदने ।
कन्धराबाहुसक्थ्याश्च भङ्गे मध्यमसाहसः ॥ १७ ॥
एकं घ्नतां बहूनाञ्च यथोक्ताद्द्विगुणा दमाः ।
कलहापहृतं देयं दण्डस्तु द्विगुणः स्मृतः ॥ १८ ॥
दुःखमुत्पादयेद्यस्तु स समुत्थानजं व्ययम् ।

१ द्वाविंशतिपणानिति ख ।

अयुक्तं शपथं कुर्वन्नयोग्यो योग्यकर्मकृत् ॥ ३० ॥
वृषक्षुद्रपशूनाञ्च पुंस्त्वस्य प्रतिघातकृत् ।
साधारणस्यापलापी दासीगर्भविनाशकृत् ॥ ३१ ॥
पितापुत्रस्वसृभ्रातृदम्पत्याचार्य्यशिष्यकाः ।
एषामपतितान्योन्यत्यागी च शतदण्डभाक् ॥ ३२ ॥
वसानस्त्रीन् पणान् दण्ड्यो नेजकस्तु परांशुकम् ।
विक्रयावक्रयाधानयाचितेषु पणान् दश ॥ ३३ ॥
तुलाशासनमानानां कूटकृन्नाणकस्य च ।
एभिश्च व्यवहर्त्ता यः स दाप्यो दण्डमुत्तमम् ॥ ३४ ॥
अकूटं कूटकं ब्रूते कूटं यश्चाप्यकूटकम् ।
स नाणकपरीक्षी तु दाप्यः प्रथमसाहसम् ॥ ३५ ॥
भिषङ्मिथ्याचरन् दाप्यस्तिर्य्यक्षु प्रथमं दमम् ।
मानुषे मध्यमं राजमानुषेषूत्तमन्तथा ॥ ३६ ॥
अवध्यं यश्च बध्नाति वध्यं यश्च प्रमुञ्चति ।
अप्राप्तव्यवहारञ्च स दाप्यो दममुत्तमम् ॥ ३७ ॥
मानेन तुलया वापि योंऽशमष्टमकं हरेत् ।
द्वाविंशतिपणान् दाप्यो वृद्धौ हानौ च कल्पितम् ॥ ३८ ॥
भेषजस्नेहलवणगन्धधान्यगुड़ादिषु ।
पण्येषु प्रक्षिपन् हीनं पणान्दाप्यस्तु षोडश ॥ ३९ ॥
सम्भूय कुर्व्वतामर्घं सबाधं कारुशिल्पिनां ।
अर्घस्य ह्रासं वृद्धिं वा सहस्रो दण्ड उच्यते ॥ ४० ॥
जनि स्थाप्यते योऽर्थः प्रत्यहं तेन विक्रयः ।
वा निस्रवस्तस्माद्वणिजां लाभकृत् स्मृतः ॥ ४१ ॥

दाप्यो दण्डश्च यो यस्मिन् कलहे समुदाहृतः ॥ १८ ॥
तरिकः स्थलजं शुल्कं गृह्णन् दण्ड्यः पणान्दश ।
ब्राह्मणप्रातिवेश्यानामेतदेवानिमन्त्रणे ॥ २० ॥
अभिघाते तथा भेदे च्छेदे कुड्यावपातने ।
पणान्दाप्यः पञ्चदशविंशतिं तद्व्ययस्तथा ॥ २१ ॥
दुःखोत्पादिगृहे द्रव्यं क्षिपन् प्राणहरं तथा ।
षोडशाद्यः पणान् दाप्यो द्वितीयो मध्यमन्दमम् ॥ २२ ॥
दुःखे च शोणितोत्पादे शाखाङ्गच्छेदने तथा ।
दण्डः क्षुद्रपशूनां स्याद्विपणप्रभृतिः क्रमात् ॥ २३ ॥
लिङ्गस्य च्छेदने मृत्यौ मध्यमो मूल्यमेव च ।
महापशूनामेतेषु स्थानेषु द्विगुणा दमाः ॥ २४ ॥
प्ररोहिशाखिनां शाखास्कन्धसर्वविदारणे ।
उपजीव्यद्रुमाणान्तु विंशतेर्द्विगुणा दमाः(१) ॥ २५ ॥
यः साहसं कारयति स दाप्यो द्विगुणन्दमम् ।
यस्त्वेवमुक्त्वाहं दाता कारयेत् स चतुर्गुणम् ॥ २६ ॥
आर्य्याक्रोशातिक्रमकृद्भ्रातृजायाप्रहारदः ।
सन्दिष्टस्याप्रदाता च समुद्रगृहभेदकः ॥ २७ ॥
सामन्तकुलिकादीनामपकारस्य कारकः ।
पञ्चाशत्पणिको दण्ड एषामिति विनिश्चयः ॥ २८ ॥
स्वच्छन्दविधवागामी विक्रुष्टे नाभिधावकः ।
अकारणे च विक्रोष्टा चण्डालश्चोत्तमान् स्पृशन् ॥ २९ ॥
शूद्रः प्रव्रजितानाञ्च दैवे पित्र्ये च भोजकः ।

१ प्ररोहिशाखिनामित्यादिः द्विगुणा दमा इत्यन्तः पाठः ख-पुस्तके नास्ति ।

अयुक्तं शपथं कुर्वन्नयोग्यो योग्यकर्मकृत् ॥ ३० ॥
वृषक्षुद्रपशूनाञ्च पुंस्त्वस्य प्रतिघातकृत् ।
साधारणस्यापलापी दासीगर्भविनाशकृत् ॥ ३१ ॥
पितापुत्रस्वसृभ्रातृदम्पत्याचार्य्यशिष्यकाः ।
एषामपतितान्योन्यत्यागी च शतदण्डभाक् ॥ ३२ ॥
वसानस्त्रीन् पणान् दण्ड्यो नेजकस्तु परांशुकम् ।
विक्रयावक्रयाधानयाचितेषु पणान् दश ॥ ३३ ॥
तुलाशासनमानानां कूटकृन्नाणकस्य च ।
एभिश्च व्यवहर्त्ता यः स दाप्यो दण्डमुत्तमम् ॥ ३४ ॥
अकूटं कूटकं ब्रूते कूटं यश्चाप्यकूटकम् ।
स नाणकपरीक्षी तु दाप्यः प्रथमसाहसम् ॥ ३५ ॥
भिषङ्मिथ्याचरन् दाप्यस्तिर्य्यक्षु प्रथमं दमम् ।
मानुषे मध्यमं राजमानुषेषूत्तमन्तथा ॥ ३६ ॥
अवध्यं यश्च बध्नाति बध्यं यश्च प्रमुञ्चति ।
अप्राप्तव्यवहारञ्च स दाप्यो दममुत्तमम् ॥ ३७ ॥
मानेन तुलया वापि योऽंशमष्टमकं हरेत् ।
द्वाविंशतिपणान् दाप्यो वृद्धौ हानौ च कल्पितम् ॥ ३८ ॥
भेषजस्नेहलवणगन्धधान्यगुड़ादिषु ।
पण्येषु प्रक्षिपन् हीनं पणान्दाप्यस्तु षोड़श ॥ ३९ ॥
सम्भूय कुर्व्वतामर्घं सबाधं कारुशिल्पिनां ।
अर्घस्य ह्रासं वृद्धिं वा सहस्रो दण्ड उच्यते ॥ ४० ॥
राजनि स्थाप्यते योऽर्थः प्रत्यहं तेन विक्रयः ।
क्रयो वा निस्रवस्तस्माद्वणिजां लाभकृत् स्मृतः ॥ ४१ ॥

स्वदेशपण्ये तु शतं वणिग् गृह्णीत पञ्चकं ।
दशकं पारदेश्ये तु यः सद्यः क्रयविक्रयी ॥ ४२ ॥
पण्यस्योपरि संस्थाप्य व्ययं पण्यसमुद्भवं ।
अर्घोऽनुग्रहकृत् कार्यः क्रेतुर्विक्रेतुरेव च ॥ ४३ ॥
गृहीतमूल्यं यः पण्यं क्रेतुर्नैव प्रयच्छति ।
सोदयन्तस्य दाप्योऽसौ दिग्लाभं वा दिगागते ॥ ४४ ॥
विक्रीतमपि विक्रेयं पूर्वे क्रेतर्यगृह्णति ।
हानियेत् क्रेतृदोषेण क्रेतुरेव हि सा भवेत् ॥ ४५ ॥
राजदैवोपघातेन पण्ये दोषमुपागते ।
हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः ॥ ४६ ॥
अन्यहस्ते च विक्रीतं दुष्टं वा दुष्टवद्यदि ।
विक्रीणीते दमस्तत्र तन्मूल्याद्द्विगुणो भवेत् ॥ ४७ ॥
क्षयं वृद्धिञ्च वणिजा पण्यानामविजानता ।
क्रीत्वा नानुशयः कार्य्यः कुर्वन् षड्भागदण्डभाक् ॥ ४८ ॥
समवायेन वणिजां लाभार्थं कर्म कुर्वतां ।
लाभालाभौ यथा द्रव्यं यथा वा संविदा कृतौ ॥ ४९ ॥
प्रतिषिद्धमनादिष्टं प्रमादाद्यच्च नाशितं ।
स तद्दद्याद्विप्लवाच्च रक्षिताद्दशमांशभाक् ॥ ५० ॥
अर्घप्रक्षेपणाद्विंशं भागं शुल्कं नृपो हरेत् ।
व्यासिद्धं राजयोग्यञ्च विक्रीतं राजगामि तत् ॥ ५१ ॥
मिथ्या वदन् परीमाणं शुल्कस्थानादपक्रमन् ।
दाप्यस्त्वष्टगुणं यश्च सव्याजक्रयविक्रयी ॥ ५२ ॥
देशान्तरगते प्रेते द्रव्यं दायादबान्धवाः ।

ज्ञातयो वा हरेयुस्तदागतास्तैर्विना नृपः ॥ ५३ ॥
जिह्मं त्यजेयुर्निर्लोभमशक्तोऽन्येन कारयेत् ।
अनेन विधिराख्यात ऋत्विक्कर्षककर्मिणां ॥ ५४ ॥
ग्राहकैर्गृह्यते चौरो लोप्त्रेणाथ पदेन वा ।
पूर्वकर्मापराधी वा तथैवाशुद्धवासकः ॥ ५५ ॥
अन्येऽपि शङ्कया ग्राह्या जातिनामादिनिह्नवैः ।
द्यूतस्त्रीपानसक्ताश्च शुष्कभिन्नमुखस्वराः ॥ ५६ ॥
परद्रव्यगृहाणाञ्च पृच्छका गूढचारिणः ।
निराया व्ययवन्तश्च विनष्टद्रव्यविक्रयाः ॥ ५७ ॥
गृहीतः शङ्कया चौर्ये नात्मानञ्चेद्विशोधयेत् ।
दापयित्वा हृतं द्रव्यं चौरदण्डेन दण्डयेत् ॥ ५८ ॥
चौरं प्रदाप्यापहृतं घातयेद्विविधैर्वधैः ।
सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत् ॥ ५९ ॥
घातितेऽपहृते दोषो ग्रामभर्तुरनिर्गते ।
स्वसीम्नि दद्याद्ग्रामस्तु पदं वा यत्र गच्छति ॥ ६० ॥
पञ्चग्रामी बहिः क्रोशाद्दशग्राम्यथ वा पुनः ।
बन्दिग्राहांस्तथा वाजिकुञ्जराणाञ्च हारिणः ॥ ६१ ॥
प्रसह्य घातिनश्चैव शूलमारोपयेन्नरान् ।
उत्क्षेपकग्रन्थिभेदौ करसन्दंशहीनकौ ॥ ६२ ॥
कार्यौ द्वितीयापराधे करपादैकहीनकौ ।
भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान् ॥ ६३ ॥
दत्त्वा चौरस्य हन्तुर्वा जानतो दम उत्तमः ।
शस्त्रावपाते गर्भस्य पातने चोत्तमो दमः ॥ ६४ ॥

उत्तमो वाऽधमो वापि पुरुषस्त्रीप्रमापणे ।
शिलां बद्ध्वा क्षिपेदप्सु नरघ्नीं विषदां स्त्रियं ॥ ६५ ॥
विषाग्निदां निजगुरुनिजापत्यप्रमापणीं ।
विकर्णकरनासोष्ठीं कृत्वा गोभिः प्रमापयेत् ॥ ६६ ॥
क्षेत्रवेश्मवनग्रामविवीतखलदाहकाः ।
राजपत्न्यभिगामी च दग्धव्यास्तु कटाग्निना ॥ ६७ ॥
पुमान् संग्रहणे ग्राह्यः केशाकेशिपरस्त्रियाः ।
स्वजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः ॥ ६८ ॥
प्रातिलोम्ये वधः पुंसां नार्य्याः कर्णावकर्त्तनम् ।
नीवीस्तनप्रावरणनाभिकेशावमर्द्दनम् ॥ ६९ ॥
अदेशकालसम्भाषं सहावस्थानमेव च ।
स्त्री निषेधे शतं दद्याद् द्विशतन्तु दमं पुमान् ॥ ७० ॥
प्रतिषेधे तयोर्दण्डो यथा संग्रहणे तथा ।
पशून् गच्छंश्शतं दाप्यो हीनां स्त्रीं गाञ्च मध्यमम् ॥ ७१ ॥
अवरुद्धासु दासीषु भुजिष्यासु तथैव च ।
गम्यास्वपि पुमान्दाप्यः पञ्चाशत्पणिकन्दमम् ॥ ७२ ॥
प्रसह्य दास्यभिगमे दण्डो दशपणः स्मृतः ।
कुबन्धेनाङ्क्य गमयेदन्त्याप्रव्रजितागमे ॥ ७३ ॥
न्यूनं वाप्यधिकं वापि लिखेद्यो राजशासनम् ।
पारदारिकचौरं वा मुञ्चतो दण्ड उत्तमः ॥ ७४ ॥
अभक्ष्यैर्दूषयन् विप्रं दण्ड उत्तमसाहसम् ।
कूटस्वर्णव्यवहारी विमांसस्य च विक्रयी ॥ ७५ ॥
अङ्गहीनश्च कर्त्तव्यो दाप्यश्चोत्तमसाहसं ।

शक्तो ह्यमोचयन् स्वामी दंष्ट्रिणः शृङ्गिणस्तथा। ७६ ॥
प्रथमं साहसं दद्याद्विक्रुष्टे द्विगुणं तथा।
अचोरश्चौरेऽभिवदन् दाप्यः पञ्चशतं दमं ॥ ७७ ॥
राज्ञोऽनिष्टप्रवक्तारं तस्यैवाक्रोशकं तथा।
मृताङ्गलग्नविक्रेतुर्गुरोस्ताड़यितुस्तथा ॥ ७८ ॥
तन्मन्त्रस्य च भेत्तारं छित्वा जिह्वां प्रवासयेत्।
राजयानासनारोढुर्दण्डो मध्यमसाहसः ॥ ७९ ॥
द्विनेत्रभेदिनो राजद्विष्टादेशकृतस्तथा।
विप्रत्वेन च शूद्रस्य जीवतोऽष्टशतो दमः ॥ ८० ॥
यो मन्येताजितोऽस्मीति न्यायेनाभिपराजितः।
तमायान्तं पुनर्जित्वा दण्डयेद्द्विगुणं दमं ॥ ८१ ॥
राज्ञाऽन्यायेन यो दण्डो गृहीतो वरुणाय तं।
निवेद्य दद्याद्विप्रेभ्यः स्वयं त्रिंशद्गुणीकृतं ॥ ८२ ॥
धर्मश्चार्थश्च कीर्तिश्च लोकपङ्क्तिरुपग्रहः।
प्रजाभ्यो बहुमानञ्च स्वर्गस्थानञ्च शाश्वतम् ॥ ८३ ॥
पश्यतो व्यवहारांश्च गुणाः स्युः सप्त भूपतेः।
इत्याग्नेये महापुराणे वाक्पारुष्यादिप्रकरणं नाम
सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥

# अथाष्टपञ्चाशदधिकद्विशततमोऽध्यायः ।

ऋग्विधानं ।

अग्निरुवाच । ऋग्यजुःसामाथर्वविधानं पुष्करोदितम् ।
भुक्तिमुक्तिकरं जप्याद्धोमाद्रामाय तद्वदे ॥ १ ॥
पुष्कर उवाच । प्रतिवेदन्तु कर्म्माणि कार्य्याणि प्रवदामि ते ।
प्रथमं ऋग्विधानं वै शृणु त्वं भुक्तिमुक्तिदम् ॥ २ ॥
अन्तर्जले तथा होमे जपतो मनसेप्सितम् ।
कामं करोति गायत्री प्राणायामाद्विशेषतः ॥ ३ ॥
गायत्र्या दशसाहस्रो जपो नक्ताशिनो द्विज ।
बहुस्नातस्य तत्रैव सर्वकल्मषनाशनः ॥ ४ ॥
दशायुतानि जप्त्वाथ हविष्याशी स मुक्तिभाक् ।
प्रणवो हि परं ब्रह्म तज्जपः सर्वपापहा ॥ ५ ॥
ओंकारशतजप्तन्तु नाभिमात्रोदके स्थितः ।
जलं पिबेत् स सर्वैस्तु पापैर्वै(१)विप्रमुच्यते ॥ ६ ॥
मात्रात्रयं त्रयो वेदास्त्रयो देवास्त्रयोऽग्नयः ।
महाव्याहृतयः सप्त लोका होमोऽखिलाघहा ॥ ७ ॥
गायत्री परमा जप्या महाव्याहृतयस्तथा ।
अन्तर्जले तथा राम मोक्षायैवाघमर्षणः ॥ ८ ॥
अग्निमीले पुरोहितं सूक्तोऽयं वह्निदैवतः ।

---

१ पापैर्हि विप्रमुच्यत इति ग०, घ०, ङ० च० ।

शिरसा धारयन् वह्निं यो जपेत्परिवत्सरम् ॥ ९ ॥
होमं त्रिषवणं भैक्ष्यमनग्निज्वलनञ्चरेत् ।
अतः परमृचः सप्त वाय्वाद्या याः प्रकीर्त्तिताः ॥ १० ॥
ता जपन् प्रयतो नित्यमिष्टान् कामान् समश्नुते ।
मेधाकामो जपेन्नित्यं सदसस्पतिमिति त्वचम् ॥ ११ ॥
अन्वयो यविमाः प्रोक्ताः नवर्चो मृत्युनाशनाः ।
शुनःशेफमृषिं बद्धः सन्निरुद्धोऽथ वा(१) जपेत् ॥ १२ ॥
मुच्यते सर्वपापेभ्यो गदी वाप्यगदो भवेत् ।
य इच्छेच्छाश्वतं कामं मित्रं प्राज्ञं पुरन्दरं ॥ १३ ॥
ऋग्भिः षोड़शभिः कुर्यादिन्द्रस्येति दिने दिने ।
हिरण्यस्तूपमित्येतज्जपन् शत्रून् प्रबाधते ॥ १४ ॥
क्षेमी भवति चाध्वानो ये ते पन्था जपन् नरः ।
रौद्रीभिःषड्भिरीशानं स्तुयाद्यो वै दिने दिने ॥ १५ ॥
चरुं वा कल्पयेद्रौद्रं तस्य शान्तिः परा भवेत् ।
उदित्युदन्तमादित्यमुपतिष्ठन् दिने दिने ॥ १६ ॥
क्षिपेज्जलाञ्जलीन् सप्त मनोदुःखविनाशनं ।
द्विषन्तमित्यथार्द्धर्चं द्विषन्तं मनसा स्मरेत् ॥ १७ ॥
आगस्कृत् सप्तरात्रेण विद्वेषमधिगच्छति ।
आरोग्यकामी रोगी वा प्रस्कण्वस्योत्तमं जपेत् ॥ १८ ॥
उत्तमस्तस्य चार्द्धर्चो जपेद्वै विविधासने ।
उदयत्यायुरक्षय्यं तेजो मध्यन्दिने जपेत् ॥ १९ ॥

---

१ सन्निबद्धोऽपिवेति क० ख०, ज० च ।

अस्तं प्रतिगते सूर्य्ये दियन्तं प्रतिबाधते ।
न वयश्चेति सूक्तानि जपन् मत्रुश्रियच्छति ॥ २० ॥
एकादश सुपर्णस्य सर्व्वकामान्विनिर्दिशेत् ।
आध्यात्मिकीः कद्वित्येता जपन्मोक्षमवाप्नुयात् ॥ २१ ॥
आ नो भद्रा इत्यनेन दीर्घमायुरवाप्नुयात् ।
त्वं सोमेति च सूक्तेन नवं पश्येन्निशाकरं ॥ २२ ॥
उपतिष्ठेत् समित्पाणिर्व्वांसांस्याप्नोत्यसंशयं ।
आयुरीप्सन्निममिति कौत्स सूक्तं सदा जपेत् ॥ २३ ॥
आपनः शोशुचदिति स्तुत्वा मध्ये दिवाकरं ।
यथा मुञ्चति चेषीकां तथा पापं प्रमुञ्चति ॥ २४ ॥
जातवेदस इत्येतज्जपेत् स्वस्त्ययनं पथि ।
भयैर्व्विमुच्यते सर्व्वैः स्वस्तिमानाप्नुयात् गृहान् ॥ २५ ॥
व्युष्टायाञ्च तथा रात्र्यामेतद्दुःस्वप्ननाशनं ।
प्रमन्दिनेति सूयन्त्या जपेद्गर्भविमोचनं ॥ २६ ॥
जपन्निन्द्रमिति स्नातो वैश्वदेवन्तु सप्तक ।
मुच्यत्याज्यं तथा जुह्वत् सकलं किल्बिषं नरः ॥ २७ ॥
इमामिति जपन् शश्वत् कामानाप्नोत्यभीप्सितान् ।
मानस्तोक इति द्वाभ्यां त्रिरात्रोपोषितः शुचिः ॥ २८ ॥
औदुम्बरीश्च जुहुयात्समिधश्चाज्यसंस्कृताः ।
छित्वा सर्व्वान्मृत्युपाशान् जीवेद्रोगविवर्जितः ॥ २९ ॥
ऊर्द्ध्वबाहुरनेनैव स्तुत्वा शम्भुं तथैव च ।
मानस्तोकेति च ऋचा शिखाबन्धे कृते नरः ॥ ३० ॥
अधृष्यः सर्व्वभूतानां जायते संशयं विना ।

चित्रमित्युपतिष्ठेत विसन्ध्यं भास्करं तथा ॥ ३१ ॥
समित्पाणिर्नरो नित्यमीप्सितं धनमाप्नुयात् ।
अद्य स्वप्नेति च जपन् प्रातर्मध्यन्दिने दिने ॥ ३२ ॥
दुःस्वप्नशान्तिं लभते भोजनञ्चाप्नुयाच्छुभम्(१) ।
उभे पुमानिति तथा रक्षोघ्नः परिकीर्त्तितः ॥ ३३ ॥
उभे वासा इति ऋचौ जपन् कामानवाप्नुयात् ।
न सागमिति च जपन् मुच्यते चाततायिनः ॥ ३४ ॥
कया शुभेति च जपन् ज्ञातिश्रैष्ठमवाप्नुयात् ।
इमन्नु सोममित्येतत् सर्व्वान् कामानवाप्नुयात् ॥ ३५ ॥
पितरित्युपतिष्ठेत नित्यमर्थमुपस्थितं(२) ।
अग्ने नयेति सूक्तेन घृतहोमश्च मार्गगः ॥ ३६ ॥
वीरान्वयमवाप्नोति सुश्लोकं यो जपेत् सदा ।
कद्रुतो नेति सूक्तेन विषान् सर्व्वान् व्यपोहति ॥ ३७ ॥
यो जात इति सूक्तेन सर्व्वान् कामानवाप्नुयात् ।
गणानामिति सूक्तेन स्निग्धमाप्नोत्यनुत्तमं ॥ ३८ ॥
यो मे राजन्निति मन्त्रं दुःस्वप्नशमनीमृचं ।
अध्वनि प्रस्थितो यस्तु पश्येच्छत्रुं समुत्थितं ॥ ३९ ॥
अप्रशस्तं प्रशस्तं वा कुविदङ्ग इमं जपेत् ।
द्वाविंशकं जपन् सूक्तमाध्यात्मिकमनुत्तमं ॥ ४० ॥
पर्व्वसु प्रयतो नित्यमिष्टान् कामान् समश्नुते ।
कृणुष्वेति जपन् सूक्तं जुहुदाज्यं समाहितः ॥ ४१ ॥

---

१ भोजनञ्चाप्नुयाच्छुभमिति ख०, ग०, घ०,ज० च ।
२ नित्यमन्नमुपस्थितमिति क०, ङ० च ।

अरातीनां हरेत् प्राणान् रक्षांस्यपि विनाशयेत् ।
उपतिष्ठेत् स्वयं वह्निं परित्यचा दिने दिने ॥ ४२ ॥
त रक्षति स्वयं वह्निर्विश्वतो विश्वतोमुखः ।
हंसः शुचिः सदित्येतच्छुचिरीचेद्दिवाकरं ॥ ४३ ॥
कृषिं प्रपद्यमानस्तु स्थालीपाकं यथाविधि ।
जुहुयात् क्षेत्रमध्ये तु स्वनोम्नाद्यास्तु पञ्चभिः ॥ ४४ ॥
इन्द्राय च मरुद्भ्यस्तु पर्जन्याय भगाय च ।
यथालिङ्गन्तु विहरेल्लाङ्गलन्तु कृषीवलः ॥ ४५ ॥
युक्तो धान्याय सीतायै सुनासीरमथोत्तरं ।
गन्धमाल्यैर्नमस्कारैर्यजेदेताय देवताः ॥ ४६ ॥
प्रवापने प्रलवने खलसीतापहारयोः ।
अमोघङ्कर्म्म भवति वर्द्धते सर्व्वदा कृषि ॥ ४७ ॥
समुद्रादिति सूक्तेन कामानाप्नोति पावकात् ।
विश्वानर इति द्वाभ्यां य ऋग्भ्यां वह्निमर्हति ॥ ४८ ॥
स तरत्यापदः सर्व्वा यशः प्राप्नोति चाक्षयं ।
विपुलां श्रियमाप्नोति जय प्राप्नोत्यनुत्तमं ॥ ४९ ॥
अग्ने त्वमिति च स्तुत्वा धनमाप्नोति वाञ्छितं ।
प्रजाकामो जपेन्नित्यं वरुणदैवतत्रयं ॥ ५० ॥
स्वस्त्या चयं जपेत् प्रातः सदा स्वस्त्ययनं महत् ।
स्वस्ति पन्था इति प्रोच्य स्वस्तिमान् व्रजतेऽध्वनि ॥ ५१ ॥
*विजिगीषुर्वसमस्ते शत्रूणां व्याधितं भवेत्(१) ।*
स्त्रिया गर्भप्रमूढाया गर्भमोक्षणमुत्तमं ॥ ५२ ॥

---

१ स्वाधिवत्ततमरिति ख० ।

अच्छावदेति सूक्तञ्च वृष्टिकामः प्रयोजयेत्।
निराहारः क्लिन्नवासा न चिरेण प्रवर्षति॥ ५३॥
मनसः काम इत्येतां पशुकामो नरो जपेत्।
कर्द्दमेन इति स्नायात्प्रजाकामः शुचिव्रतः॥ ५४॥
अश्वपूर्वा इति स्नायाद्राज्यकामस्तु मानवः।
रोहिते चर्म्मणि स्नायात् ब्राह्मणस्तु यथाविधि॥ ५५॥
राजा चर्म्मणि वैयाघ्रे छागे वैश्यस्तथैव च।
दशसाहस्रिको होमः प्रत्येकं परिकीर्त्तितः॥ ५६॥
आगाव इति सूक्तेन गोष्ठे गां लोकमातरं।
उपतिष्ठेद्व्रजेच्चैव यदिच्छेत्ताः सदाक्षयाः॥ ५७॥
उपेतिति(?)सभीराज्ञो दुन्दुभिमभिमन्त्रयेत्।
तेजो बलञ्च प्राप्नोति शत्रुञ्चैव नियच्छति॥ ५८॥
ग्रणपाणिकर्णेत्युक्तं रक्षोघ्नं दस्युभिर्हतः।
ये के च ज्मेत्यृचं जप्ता दीर्घमायुरवाप्नुयात्(१)॥ ५९॥
जीमूतसूक्तेन तथा सेनाङ्गान्यभिमन्त्रयेत्।
अश्वा लिङ्गं ततो राजा विनिहन्ति रणे रिपून्॥ ६०॥
आग्नेयेति त्रिभिः सूक्तैर्धनमाप्नोति चाक्षयं।
अमीवहेति सूक्तेन भूतानि स्वापयेन्निशि॥ ६१॥
सबाधे विषमे दुर्गे बन्धो वा निर्गतः क्वचित्।
पलायन् वा गृहीतो वा सूक्तमेतत्तथा जपेत्॥ ६२॥
त्रिरात्रं नियतोपोष्य श्रापयेत् पायसञ्चरुं।
तेनाहुतिशतं पूर्णं जुहुयात् त्र्यम्बकेत्यृचा॥ ६३॥

---

१ श्रवाप्नुयामिति ङ०।

समुद्दिश्य महादेवं जीवेदब्दगतं सुखं।
तच्चक्षुरित्यृचा स्नात उपतिष्ठेद्दिवाकरं ॥ ६४ ॥
उद्यन्तं मध्यगञ्चैव दीर्घमायुर्जिजीविषुः।
इन्द्रा सोमेति सूक्तन्तु कथितं ग्रवुनाशनं ॥ ६५ ॥
यस्य लुप्तं व्रतं मोहाद्व्रात्यैर्वा संस्पृशेत्सह।
उपोष्याज्यं स जुहुयात्त्वमग्ने व्रतपा इति ॥ ६६ ॥
आदित्येत्यृक् च सम्राजं(१) जप्त्वा वादे जयी भवेत्।
महीति च चतुष्केण मुच्यते महतो भयात् ॥ ६७ ॥
ऋचं जप्त्वा यदि होतत् सर्व्वकामानवाप्नुयात्।
द्वाचत्वारिंशतिं चैन्द्रं जप्त्वा नाशयते रिपून् ॥ ६८ ॥
वाचं महीति जप्त्वा च प्राप्नोत्यारोग्यमेव च।
शन्नो भवेति द्वाभ्यान्तु भुक्त्वान्नं प्रयतः शुचिः ॥ ६९ ॥
हृदयं पाणिना स्पृष्ट्वा व्याधिभिर्नाभिभूयते।
उत्तमेदमिति स्नातो हुत्वा शत्रुं प्रमापयेत् ॥ ७० ॥
शन्नोऽग्न इति सूक्तेन हुतेनान्नमवाप्नुयात्।
कन्या वारर्षिसूक्तेन दिग्दोषाद्विप्रमुच्यते ॥ ७१ ॥
यदद्य कच्चित्यृचेति जप्तेऽवश्यं जगद्भवेत्।
यद्वागिति च जप्तेन वाग्मी भवति संस्कृता(२) ॥ ७२ ॥
वाचो विदमिति लेतां जपन् वाचं समश्नुते।
पवित्राणां पवित्रन्तु पावमान्योऽटऋचो मताः ॥ ७३ ॥
वैखानसा ऋचस्त्रिंशत्पवित्राः परमा मताः।

१ आदित्येति सम्राजमिति ग०, घ०, ज० च।
२ संस्कृतेति ख०, ङ० च।

ऋचो द्विपष्टिः प्रोक्ताश्च परस्विद्याविसत्तम ॥ ७४ ॥
सर्व्वकल्मषनाशाय पावनाय शिवाय च ।
स्वादिष्टयेतिसूक्तानां सप्तषष्टिकदाहृता ॥ ७५ ॥
दशोत्तराण्यृचाश्चैताः पावमान्यः शतानि षट् ।
एतज्जपंश्च जुह्वंश्च घोरं मृत्युभयं जयेत् ॥ ७६ ॥
आपोहिष्ठेति वारिस्थो जपेत्पापभयार्द्दने ।
प्रदेवत्रेति नियतो जपेच्च मरुधन्वसु ॥ ७७ ॥
प्राणान्तिके भये प्राप्ते विप्रमायुस्तु विन्दति ।
प्रावेपामित्यृचमेकां जपेच्च मनसा निशि ॥ ७८ ॥
व्युष्टायामुदिते सूर्य्ये द्यूते जयमवाप्नुयात् ।
मा प्रगामेति मूढश्च मन्त्राभं पथि विन्दति ॥ ७९ ॥
क्षीणायुरिति मन्येत यङ्कञ्चित सुहृदं प्रियं ।
यस्येयमिति तु स्नातस्तस्य मूर्द्धानमालभेत् ॥ ८० ॥
सहस्रशत्वः पञ्चाहं तेनायुर्विन्दते महत् ।
इदं मेध्येति जुहुयात् घृतं प्रातः सहस्रशः ॥ ८१ ॥
पशुकामो गवां गोष्ठे ऋषकामयतुप्यपे ।
वयः सुपर्णं इत्येतां जपन् वै विन्दते श्रियं ॥ ८२ ॥
हविष्यन्तीयमभ्यस्य सर्व्वपापैः प्रमुच्यते ।
तस्य रोगा विनश्यन्ति कायाग्निर्व्वर्द्धते तथा ॥ ८३ ॥
या ओषधयः स्वस्त्ययनं सर्व्वव्याधिविनाशनं ।
बृहस्पते प्रतीत्येतद् वृष्टिकामः प्रयोजयेत् ॥ ८४ ॥
सर्व्वत्रेति परा शान्तिर्ज्ञेया प्रतिरथस्तथा ।
सूत संकाश्यपमित्यं प्रजाकामस्य कीर्त्तितं ॥ ८५ ॥

अहं रुद्रेति इत्येतद्वाग्मी भवति मानवः ।
न योनौ जायते विद्वान् जपन्रातीति रात्रिषु ॥ ८६ ॥
रात्रिसूक्तं जपन्रात्रौ रात्रिं चेमां नयेन्नरः ।
कल्पयन्तीति च जपन्नित्यं कृत्वारिनाशनं ॥ ८७ ॥
आयुष्यञ्चैव वर्चस्यं सूक्तं दाक्षायणं महत् ।
उत देवा इति जपेदामयघ्नं धृतव्रतः ॥ ८८ ॥
अयमग्ने जनित्येतज्जपेदग्निभये सति ।
अरण्यानीत्यरण्येषु जपेत्तद्भयनाशनं ॥ ८९ ॥
ब्राह्मीमासाद्य सूक्ते द्वे जपन् ब्राह्मीं सरस्वतीं ।
पृथगन्निष्टुतैर्वाथ मेधां लक्ष्मीञ्च विन्दति ॥ ९० ॥
मास इत्यसपत्नघ्नं संग्रामं विजिगीषतः ।
ब्रह्मणोग्निः संविदानं गर्भमृत्युनिवारणं ॥ ९१ ॥
अपैहीति जपेत्सूक्तं शुचिर्दुःस्वप्ननाशनं ।
येनेदमिति वै जप्त्वा समाधिं विन्दते परं ॥ ९२ ॥
मयो भूर्वात इत्येतत् गवां स्वस्त्ययनं परं ।
शाम्बरीमिन्द्रजालं वा मायामेतेन वारयेत् ॥ ९३ ॥
महीत्रीणामवरोऽस्त्विति पथि स्वस्त्ययनं जपेत् ।
अग्नये विद्विषेत्येवं जपेच्च रिपुनाशनं ॥ ९४ ॥
वास्तोष्पतेन मन्त्रेण यजेत गृहदेवताः ।
जपस्यैव विधिः प्रोक्तो हुते ज्ञेयो विशेषतः ॥ ९५ ॥
होमान्ते दक्षिणा देया पापशान्तिर्हुतेन तु ।
हुतं शाम्यति चान्नेन चान्नहेमप्रदानतः ॥ ९६ ॥
विप्राशिषस्त्वमोघाः स्युर्बहिःस्नानन्तु सर्वतः ।

सिद्धार्थका यवा धान्यं पयो दधि घृतं तथा ॥ ९७ ॥
क्षीरवृक्षास्तथेध्मन्तु होमा वै सर्वकामदाः।
समिधः कण्टकिन्यश्च राजिका रुधिरं विषं॥ ९८ ॥
अभिचारे तथा शैलं अशनं शक्तवः पयः।
दधि भैक्ष्यं फलं मूलमृग्विधानमुदाहृतं ॥ ९९ ॥
इत्याग्नेये महापुराणे ऋग्विधानं नामाष्ट-
पञ्चाशदधिकद्विशततमोऽध्यायः।

---

## अथोनषष्टयधिकद्विशततमोऽध्यायः।

### यजुर्विधानं।

पुष्कर उवाच। यजुर्विधानं वक्ष्यामि भुक्तिमुक्तिप्रदं शृणु।
ॐकारपूर्व्विका राम महाव्याहृतयो मताः॥ १ ॥
सर्व्वकल्मषनाशिन्यः सर्व्वकामप्रदास्तथा।
आज्याहुतिसहस्रेण देवानाराधयेद्बुधः॥ २ ॥
मनसः काङ्क्षितं राम मनसेप्सितकामदं।
शान्तिकामो यवैः कुर्य्यात्तिलैः पापापनुत्तये ॥ ३ ॥
धान्यैः सिद्धार्थकैश्चैव सर्व्वकाम करैस्तथा।
औदुम्बरीभिरिध्माभि. पशुकामस्य शस्यते ॥ ४ ॥
दध्ना चैवान्नकामस्य पयसा शान्तिमिच्छतः।
अपामार्गसमिद्भिस्तु कामयन् कनकं बहु॥ ५ ॥

कन्याकामो घृताक्तानि युग्मशो ग्रथितानि तु ।
जातीपुष्पाणि जुहुयाद्ग्रामार्थी तिलतण्डुलान् ॥ ६ ॥
वश्यकर्मणि शाखोटवासापामार्गमेव च ।
विषासृङ्मिश्रसमिधो व्याधिघातस्य भार्गव ॥ ७ ॥
क्रुद्धस्तु जुहुयात्सम्यक् शत्रूणां वधकाम्यया ।
सर्वव्रीहिमयीं कृत्वा राज्ञः प्रतिकृतिं द्विज ॥ ८ ॥
सहस्रशस्तु जुहुयाद्राजा वशगतो भवेत् ।
वस्त्रकामस्य पुष्पाणि दूर्वा व्याधिविनाशिनी ॥ ९ ॥
ब्रह्मवर्चसकामस्य वासोयस्य विधीयते ।
प्रत्यङ्गिरेषु जुहुयात्तुषकण्टकभस्मभिः ॥ १० ॥
विद्वेषणे च पद्मानि काककौशिकयोस्तथा ।
कापिलञ्च घृतं हुत्वा तथा चन्द्रग्रहे द्विज ॥ ११ ॥
वचाचूर्णेन सम्पातात्समानीय च तां वचां ।
सहस्रमन्त्रितां भुक्त्वा मेधावी जायते नरः ॥ १२ ॥
एकादशाङ्गुलं शङ्कु लौहं खादिरमेव च(१) ।
द्विषतो वधोसीति जपन्निखनेद्रिपुवेश्मनि ॥ १३ ॥
उच्चाटनमिदं कर्म शत्रूणां कथितं तव ।
चक्षुष्या इति जप्या च विनष्टचक्षुराप्नुयात् ॥ १४ ॥
उपयुञ्जत इत्येदनुवाकन्तथान्नदं ।
तनूनपाग्ने सदिति दूर्वां हुत्वार्त्तिवर्जितः ॥ १५ ॥
भेषजमसीति दध्याज्यैर्होमः पशूपसर्गनुत्(२) ।

---

१ खादिरमेव वेति ग०, छ०,ञ० च ।

२ पशूपसर्गदेति ख०, ञ० च ।

त्रियम्बकं यजामहे होमः सौभाग्यवर्द्धनः ॥ १६ ॥
कन्यानाम गृहीला तु कन्यालाभकरः परः।
भयेषु तु जपन्नित्यं भयेभ्यो विप्रमुच्यते ॥ १७ ॥
धुस्तूरपुष्पं सघृतं हुत्वा स्यात् सर्वकामभाक्।
हुत्वा तु गुग्गुलं राम स्वप्ने पश्यति शङ्करं ॥ १८ ॥
युञ्जते मनोऽनुवाकं जप्त्वा दीर्घायुराप्नुयात्।
विष्णोरराटमित्येतत्(१) सर्वबाधाविनाशनं ॥ १९ ॥
रक्षोघ्नञ्च यशस्यञ्च तथैव विजयप्रदं।
अयन्नो अग्निरित्येतत् संग्रामे विजयप्रदं ॥ २० ॥
इदमापः प्रवहत स्नाने पापापनोदनं।
विश्वकर्मन्तु हविषा सूचीं लौहीन्दशाङ्गुलाम् ॥ २१ ॥
कन्याया निखनेद्द्वारि साऽन्यस्मै न प्रदीयते।
देव सवितरेतेन हुतेनैतेन चान्नवान् ॥ २२ ॥
अग्नौ स्वाहेति जुहुयाद्बलकामो द्विजोत्तम।
तिलैर्यवैश्च धर्म्मज्ञ तथापामार्गतण्डुलैः ॥ २३ ॥
सहस्रमन्त्रितां कृत्वा तथा गोरोचनां द्विज।
तिलकञ्च तथा कृत्वा जनस्य प्रियतामियात् ॥ २४ ॥
रुद्राणाञ्च तथा जप्यं सर्व्वाघविनिसूदनं।
सर्व्वकर्म्मकरो होमस्तथा सर्व्वत्र शान्तिदः ॥ २५ ॥
अजाविकानामश्वानां कुञ्जराणां तथा गवां।
मनुष्याणान्नरेन्द्राणां बालानां योषितामपि ॥ २६ ॥
ग्रामाणां नगराणाञ्च देशानामपि भार्गव।

१ विष्णोर्व्वराटमित्येतदिति घ०,ञ० च। विष्णोरराटमित्येतदिति क०,ग०,ट०च।

उपद्रुतानां धर्म्मज्ञ व्याधितानां तथैव च ॥ २७ ॥
मरके समनुप्राप्ते रिपुजे च तथा भये ।
रुद्रहोमः परा शान्तिः पायसेन घृतेन च ॥ २८ ॥
कुष्माण्डघृतहोमेन सर्व्वान् पापान् व्यपोहति ।
सक्तुयावकभैक्षाशी नक्तं मनुजसत्तम ॥ २९ ॥
बहिःस्नानरतो मासान्मुच्यते ब्रह्महत्यया ।
मधुवातेति मन्त्रेण होमादितोऽखिलं लभेत् ॥ ३० ॥
दधि क्राव्णेति हुत्वा तु पुत्रान् प्राप्नोत्यसंशयं ।
तथा घृतवतीत्येतद्दायुष्यं स्यात् घृतेन तु ॥ ३१ ॥
स्वस्तिन इन्द्र इत्येतत्सर्व्वबाधाविनाशनं ।
इह गावः प्रजायध्वमिति पुष्टिविवर्धनम् ॥ ३२ ॥
घृताहुतिसहस्रेण तथालक्ष्मीविनाशनं ।
स्रुवेण देवस्य त्वेति हुत्वापामार्गतण्डुलं ॥ ३३ ॥
मुच्यते विकृताच्छीघ्रमभिचारान्न संशयः ।
रुद्र पातु पलाशस्य समिद्भिः कनकं लभेत् ॥ ३४ ॥
शिवो भवेत्यग्न्युत्पाते व्रीहिभिर्जुहुयान्नरः ।
याः सेना इति चैतच्च तस्करेभ्यो भयापहम् ॥ ३५ ॥
यो अस्मभ्यमरातीयाद्धुत्वा कृष्णतिलान्नरः ।
सहस्रशोऽभिचाराच्च मुच्यते विकृतादपि ॥ ३६ ॥
अन्नेनान्नपतेत्येवं हुत्वा चान्नमवाप्नुयात् ।
हंसः शुचिः सदित्येतज्जप्तस्तोयेऽघनाशनं ॥ ३७ ॥
चत्वारि शृङ्गेत्येतत्तु सर्व्वपापहरं जले ।
देवा यज्ञेति जप्यात्तु ब्रह्मलोके महीयते

वसन्तेति च हुत्वाज्यं आदित्याद्वरमाप्नुयात् ।
सुपर्णोसीति चेत्यस्य कर्म्मव्याहृतिवद्भवेत् ॥ ३९ ॥
नमः स्वाहेति त्रिर्जप्त्वा बन्धनान्मोक्षमाप्नुयात् ।
अन्तर्जले त्रिरावर्त्य द्रुपदा सर्व्वपापमुक् ॥ ४० ॥
इह गावः प्रजायध्वं मन्त्रोयं बुद्धिवर्द्धनः ।
हुतन्तु सर्पिषा दध्ना पयसा पायसेन वा ॥ ४१ ॥
शतं य(१) इति चैतेन हुत्वा पर्णफलानि च ।
आरोग्यं श्रियमाप्नोति जीवितञ्च चिरन्तथा ॥ ४२ ॥
ओषधीः प्रतिमोदध्वं(२) वपने लवनेऽर्थकृत् ।
अश्वावती पायसेन होमाच्छान्तिमवाप्नुयात् ॥ ४३ ॥
तस्मा इति च मन्त्रेण बन्धनस्थो विमुच्यते ।
युवा सुवासा इत्येव वासांस्याप्नोति चोत्तमम् ॥ ४४ ॥
मुञ्चन्तु मा शपथ्यानि सर्व्वान्तकविनाशनम्(३) ।
मा मा हिंसीस्तिलाज्येन हुतं रिपुविनाशनं(४) ॥ ४५ ॥
नमोऽस्तु सर्व्वसर्पेभ्यो घृतेन पायसेन तु ।
कृणुध्वं राज इत्येतदभिचारविनाशनं ॥ ४६ ॥
दूर्व्वाकाण्डायुतं हुत्वा काण्डात् काण्डेति मानवः ।
ग्रामे जनपदे वापि मरकन्तु शमं नयेत् ॥ ४७ ॥
रोगार्त्तो मुच्यते रोगात् तथा दुःखात्तु दुःखितः ।

---

१ शतञ्चेति ङ० । शत चेति क० ।
२ ओषधय प्रतिमोदध्वमिति ख० ।
३ सर्व्वकिल्बिषनाशनमिति ख०, ग० च ।
४ विघ्नविनाशनमिति क०, ख० च ।

उपद्रुतानां धर्मज्ञ व्याधितानां तथैव च ॥ २७ ॥
मरके समनुप्राप्ते रिपुजे च तथा भये ।
रुद्रहोमः परा शान्तिः पायसेन घृतेन च ॥ २८ ॥
कुष्माण्डघृतहोमेन सर्व्वान् पापान् व्यपोहति ।
शक्तुयावकभैक्षाशी नक्तं मनुजसत्तम ॥ २९ ॥
बहिःस्नानरतो मासान्मुच्यते ब्रह्महत्यया ।
मधुवातेति मन्त्रेण होमादितोऽखिलं लभेत् ॥ ३० ॥
दधि क्राव्णेति हुत्वा तु पुमान् प्राप्नोत्यसंशयं ।
तथा घृतवतीत्येतदायुष्यं स्याद् घृतेन तु ॥ ३१ ॥
स्वस्तिन इन्द्र इत्येतत्सर्व्वबाधाविनाशनं ।
इह गावः प्रजायध्वमिति पुष्टिविवर्धनम् ॥ ३२ ॥
घृताहुतिसहस्रेण तथालक्ष्मीविनाशनं ।
स्रुवेण देवस्य त्वेति हुत्वापामार्गतण्डुलं ॥ ३३ ॥
मुच्यते विकृताच्छीघ्रमभिचारान्न संशयः ।
रुद्र पातु पलाशस्य समिद्भिः कनकं लभेत् ॥ ३४ ॥
शिवो भवेत्यग्न्युत्पाते व्रीहिभिर्जुहुयान्नरः ।
याः सेना इति चैतच्च तस्करेभ्यो भयापहम् ॥ ३५ ॥
यो अस्मभ्यमरातीयाद्धुत्वा कृष्णतिलान्नरः ।
सहस्रशोऽभिचाराच्च मुच्यते विकृतादपि ॥ ३६ ॥
अन्नेनान्नपतेत्येवं हुत्वा चान्नमवाप्नुयात् ।
हंसः शुचिः षदित्येतज्जप्तस्तोयेऽघनाशनं ॥ ३७ ॥
चत्वारि शृङ्गेत्येतच्च सर्व्वपापहरं जले ।
देवा यज्ञेति जप्तात्तु ब्रह्मलोके महीयते ॥ ३८ ॥

वसन्तेति च हुत्वाज्यं आदित्याद्वरमाप्नुयात् ।
सुपर्णोसीति चेत्यस्य कर्मव्याहृतिवद्भवेत् ॥ ३९ ॥
नमः स्वाहेति त्रिर्जप्त्वा बन्धनान्मोक्षमाप्नुयात् ।
अन्तर्जले त्रिरावर्त्य द्रुपदां सर्व्वपापमुक् ॥ ४० ॥
इह गावः प्रजायध्वं मन्त्रोयं बुद्धिवर्द्धनः ।
हुतन्तु सर्पिषा दध्ना पयसा पायसेन वा ॥ ४१ ॥
शतं च(१) इति चैतेन हुत्वा पर्णफलानि च ।
आरोग्यं श्रियमाप्नोति जीवितञ्च चिरन्तथा ॥ ४२ ॥
ओषधीः प्रतिमोदध्वं(२) वपने लवनेऽर्थकृत् ।
अश्वावती पायसेन होमाच्छान्तिमवाप्नुयात् ॥ ४३ ॥
तस्मा इति च मन्त्रेन बन्धनस्थो विमुच्यते ।
युवा सुवासा इत्येव वासांस्याप्नोति चोत्तमम् ॥ ४४ ॥
मुञ्चन्तु मा शपथ्यानि सर्व्वान्तकविनाशनम्(३) ।
मा माहिंसीस्तिलाज्येन हुतं रिपुविनाशनं(४) ॥ ४५ ॥
नमोऽस्तु सर्व्वसर्पेभ्यो घृतेन पायसेन तु ।
कृणुष्वं राज इत्येतदभिचारविनाशनं ॥ ४६ ॥
दूर्व्वाकाण्डायुतं हुत्वा काण्डात् काण्डेति ग्रामपः ।
ग्रामे जनपदे वापि मरकन्तु शमयेत् ॥ ४७ ॥
रोगार्त्तो मुच्यते रोगात् तथा दुःखात्तु दुःखितः ।

१ शतञ्चेति ख० । शतं चेति क० ।
२ औषधय प्रतिमोदध्वमिति ख० ।
३ सर्व्वकिल्विषनाशनमिति ख०, ख० च ।
४ विप्रविनाशनमिति क०,ख० च ।

औदुम्बरीय समिधो मधुमान्नो वनस्पतिः ॥ ४८ ॥
हुत्वा सहस्रशो राम धनमाप्नोति मानवः ।
सौभाग्यं महदाप्नोति व्यवहारे तथा जयम् ॥ ४९ ॥
अपां गर्भमिति हुत्वा देवं वर्षापयेद्ध्रुवम् ।
अपः पिबेति च तथा हुत्वा दधि घृतं मधु ॥ ५० ॥
प्रवर्त्तयति धर्मज्ञ महावृष्टिमनन्तरं ।
नमस्ते रुद्र इत्येतत् सर्व्वोपद्रवनाशनं ॥ ५१ ॥
सर्व्वशान्तिकरं प्रोक्तं महापातकनाशनं ।
अध्यवोचदित्यनेन रक्षणं व्याधितस्य तु ॥ ५२ ॥
रक्षोघ्नस्य यशस्यञ्च चिरायुःपुष्टिवर्द्धनम् ।
सिद्धार्थकानां क्षेपेण पथि चैतज्जपन् सुखी ॥ ५३ ॥
असौ यस्ताम्र इत्येतत् पठन्नित्यं दिवाकरं ।
उपतिष्ठेत धर्मज्ञ सायं प्रातरतन्द्रितः ॥ ५४ ॥
अन्नमक्षयमाप्नोति दीर्घमायुश्च विन्दति ।
प्रमुञ्च(१) धन्वनित्येतत् षड्भिरायुधमन्त्रणं ॥ ५५ ॥
रिपूणां भयदं युद्धे नात्रकार्य्या विचारणा ।
मानो महान्त इत्येवं बालानां शान्तिकारकं ॥ ५६ ॥
नमो हिरण्यबाहवे इत्यनुवाकसप्तकम् ।
राजिकां कटुतैलाक्तां जुहुयाच्छत्रुनाशनीं ॥ ५७ ॥
नमो वः किरिकेभ्यश्च पद्मलक्षाहुतैर्वरः ।
राज्यलक्ष्मीमवाप्नोति तथा विल्वैः सुवर्णकम् ॥ ५८ ॥
इमा रुद्रायेति तिलैर्होमाच्च धनमाप्यते ।

---

१ प्रमुञ्चेति ग०, घ, ज० च।

दूर्वाहोमेन चान्येन सर्वव्याधिविवर्जितः ॥ ५९ ॥
आशुः शिशान इत्येतदायुधानाञ्च रक्षणे ।
संग्रामे कथितं राम सर्वशत्रुनिबर्हणं ॥ ६० ॥
राजसामेति जुहुयात् सहस्रं पशुभिर्द्विज ।
आज्याहुतीनां धर्मज्ञ पशूरोगाद्विमुच्यते ॥ ६१ ॥
यज्ञो यनस्पते गेहे होमः स्याहाग्न्युदीपनुत् ।
भन्न आयूंसि हुत्वाज्यं द्वेषं नाप्नोति केनचित् ॥ ६२ ॥
अपां फेनेति लाजाभिर्हुत्वा जयमवाप्नुयात् ।
भद्रा इतीन्द्रियैर्हीनो जपन् स्यात् सकलेन्द्रियः ॥ ६३ ॥
अग्निश्च पृथिवी चेति वशीकरणमुत्तमम् ।
अध्वनेति जपन् मन्त्रं व्यवहारे जयी भवेत् ॥ ६४ ॥
यत्र राजन्यमिति च कर्मारम्भे तु सिद्धिकृत् ।
संवत्सरोसीति घृतैर्लक्षहोमादरोगवान् ॥ ६५ ॥
केतुं कृण्वन्निताल्लेतत् संग्रामे जयवर्द्धनम् ।
इन्द्रोग्निर्धर्म इत्येतद्रणे धर्मनिबन्धनम्(१) ॥ ६६ ॥
धन्वा नागेति मन्त्रश्च धनुर्ग्राहमिकः परः ।
यजीतेति तथा मन्त्रो विज्ञेयो ह्यभिमन्त्रणे ॥ ६७ ॥
मन्त्रमाहिरथेत्येतच्छराणां(२) मन्त्रणे भवेत् ।
वह्वीनां पितरित्येतत्तूणमन्त्रः प्रकीर्त्तितः ॥ ६८ ॥
युञ्जन्तीति तथाश्वानां योजने मन्त्र उच्यते ।
आशुः शिशान इत्येतद्यात्रारम्भणमुच्यते ॥ ६९ ॥

---

१ धर्मविवर्द्धनमिति ख० ।

२ मन्त्रय हि रथ इत्येतच्छराणामिति क०, ङ० च ।

विष्णोः क्रमेति मन्त्रच रथारोहणिकः परः।
आजङ्घेतीति चाश्वानां ताडनीयमुदाहृतं ॥ ७० ॥
याः सेना अभित्वरीति परसैन्यमुखे जपेत्।
दुन्दुभ्य इति चाप्येतद्दुन्दुभीताड़नं भवेत् ॥ ७१ ॥
एतैः पूर्वं हुतैर्मन्त्रैः कृत्वैवं विजयी भवेत्।
यमेन दत्तमित्यस्य कोटिहोमाद्विचक्षणः ॥ ७२ ॥
रथमुत्पादयेच्छीघ्रं संग्रामे विजयप्रदम्।
आ कृष्णेति तथैतस्य कर्म व्याहृतिवद्भवेत् ॥ ७३ ॥
शिवसंकल्पजापेन(१) समाधिं मनसो लभेत्।
पञ्चनद्यः पञ्चलक्षं हुत्वा लक्ष्मीमवाप्नुयात् ॥ ७४ ॥
यदा बधून्दाक्षायणा मन्त्रेणानेन मन्त्रितम्।
सहस्रकृत्वः कनकं धारयेद्रिपुवारणं ॥ ७५ ॥
इमं जीवेभ्य इति च शिलां लोष्टंश्चतुर्दिशं।
क्षिपेद्गृहे तदा तस्य न स्याच्चौरभयं निशि ॥ ७६ ॥
परिमे गामनेनेति(२) वशीकरणमुत्तमं।
हन्तुमभ्यागतस्तत्र वशीभवति मानवः ॥ ७७ ॥
भक्ष्यताम्बूलपुष्पाद्यं मन्त्रितन्तु प्रयच्छति।
यस्य धर्मञ्च सभगः सोऽस्य शीघ्रं भविष्यति ॥ ७८ ॥
शन्नो मित्र इतीत्येतत् सदा सर्वत्र शान्तिदं।
गणानां त्वा गणपतिं कृत्वा होमचतुष्पथे ॥ ७९ ॥
वशीकुर्य्याज्जगत्सर्वं सर्वधान्यैरसंशयम्।

---

१ शिवसंकल्प इत्येतदिति घ०, ज० च।
२ परामे मे गायनेनेति ख०।

हिरण्यवर्णाः शुचयो मन्त्रोयमभिषेचने ॥ ८० ॥
शन्नो देवीरभिष्टये तथा शान्तिकरः परः ।
एकचक्रेति मन्त्रेण हुतेनाज्येन मागगः(१) ॥ ८१ ॥
ग्रहेभ्यः शान्तिमाप्नोति प्रसादं न च संशयः ।
गावो भग इति द्वाभ्यां हुत्वाज्यङ्गा भवाप्नुयात् ॥ ८२ ॥
प्रवाद्यांश सोपदिशेति(२) मन्त्रयज्ञे विधीयते ।
देवेभ्यो वनस्पत इति द्रुमयज्ञे विधीयते ॥ ८३ ॥
गायत्री वैष्णवी ज्ञेया तद्विष्णोः परमम्पदं ।
सर्व्वपापप्रशमनं सर्व्वकामकरस्तथा(३) ॥ ८४ ॥
इत्याग्नेये महापुराणे यजुर्व्विधानं नामोनषष्ट्यधिक-
द्विशततमोऽध्यायः ।

---

## अथ षष्ट्यधिकद्विशततमोऽध्यायः ।

### सामविधानं ।

पुष्कर उवाच । यजुर्व्विधानङ्कथितं वक्ष्ये साम्नां विधानकं ।
संहितां वैष्णवीञ्जप्त्वा हुत्वा स्यात् सर्व्वकामभाक् ॥ १ ॥
संहितान्छान्दसीं साधु जप्त्वा प्रीणाति शङ्करं ।
स्कान्दीं पैत्र्यां संहिताञ्च जप्त्वा स्यात्तु प्रसादवान् ॥ २ ॥

---

१ मागग इति क०, ग०, घ०, ङ०, ज० च ।
२ प्रवादांश सोपदिशेति ख०,ज० च ।
३ सर्व्वशान्तिकरस्तथेति घ०, ञ० च ।

यत इन्द्र भजामहे हिंसादोषविनाशनं ।
अवकीर्णी मुच्यते च अग्निस्तिस्मेति वै जपन् ॥ ३ ॥
सर्व्वपापहरं ज्ञेयं परितोयच्च तासु च(१) ।
अविक्रेयञ्च विक्रीय जपेद्घृतवतीति च ॥ ४ ॥
अयानो देव सवितर्वैयन्दुःस्वप्ननाशनं ।
अबोध्यग्निरितिमन्त्रेण हुतं राम यथाविधि ॥ ५ ॥
अभ्युक्ष्य घृतशेषेण मेखलाबन्ध इष्यते ।
स्त्रीणां यासान्तु गर्भाणि पतन्ति भृगुसत्तम ॥ ६ ॥
मयिं जातस्य बालस्य वधीयात्सदनन्तरं ।
सोमं राजानमेतेन व्याधिभिर्विप्रमुच्यते ॥ ७ ॥
सर्पसाम प्रयुञ्जानो नाप्नुयात् सर्पजम्भयं ।
माय लीं वाचयेत्येतद्धुत्वा विप्रः सहस्रशः ॥ ८ ॥
प्रतावरिमणिम्बद्धा नाप्नुयाच्छत्रुतो भयं ।
दीर्घितमसोर्क इति हुत्वान्नं प्राप्नुयाद्बहु ॥ ९ ॥
स्वमध्यायन्तीति जपन्न म्रियेत पिपासया(२) ।
त्वमिमा ओषधी होतज्जप्त्वा व्याधिं न चाप्नुयात् ॥ १० ॥
पथि देवव्रतञ्जप्त्वा भयेभ्यो विप्रमुच्यते ।
यदिन्द्रो मुनये त्वेति हुतं सौभाग्यवर्द्धनं ॥ ११ ॥
भगो न चित्र इत्येवं नेत्रयो रञ्जनं हितं ।
सौभाग्यवर्द्धनं राम नात्र कार्य्या विचारणा ॥ १२ ॥
जपेदिन्द्रेति वर्गञ्च तथा सौभाग्यवर्द्धनं ।

---

१ परितोयं सुनायुनमिति क०, ङ० च ।

२ पिपासित इति ख०, ञ० च ।

परि प्रिया हि वः कारिः(१)काम्यां संयावयेत्स्त्रियं ॥१३॥
सा तद्वामवते राम नात्र कार्य्या विचारणा।
रथन्तरं वामदेव्यं ब्रह्मवर्चसवर्द्धनं ॥ १४ ॥
प्रायश्चेदान्नकं नित्यं यथाचूर्णं घृतप्लुतं।
इन्द्रमिद्गाथिनं जप्वा भवेत्कु तिधरस्त्वमी ॥ १५ ॥
हुत्वा रथन्तरम्नसा पुत्रमाप्नोत्यसंशयं।
मयि श्रीरिति मन्त्रोयं जप्यः श्रीविवर्द्धनः ॥ १६ ॥
वैरूप्यम्याटकं नित्यं प्रयुञ्जानः श्रियं लभेत्।
सप्ताष्टकं प्रयुञ्जानः सर्व्वान् कामानवाप्नुयात् ॥ १७ ॥
गव्येषुणेति यो नित्यं सायं प्रातरतन्द्रितः।
उपस्थानं गवां कुर्य्यात्तस्य स्युस्ताः सदा गृहे ॥ १८ ॥
घृताक्तन्तु यवद्रोणं वातं आयातु भेषजं।
अनेन हुत्वा विधिवत् सर्व्वां मायां व्यपोहति ॥ १९ ॥
प्रदेवो दासेन तिलान् हुत्वा कार्म्मणकृन्तनं।
अभि त्वा पूर्व्वपीतये वषट्कारसमन्वितं ॥ २० ॥
वासकेध्मसहस्रन्तु हुतं युद्धे जयप्रदं।
हस्त्यश्वपुरुषान् कुर्य्याद्बुधः पिष्टमयान् शुभान् ॥ २१ ॥
परकीयानथोद्दिश्य प्रधानपुरुषांस्तथा।
सन्निधानृपिष्टकवरान् क्षुरेणोत्कृत्य भागशः ॥ २२ ॥
अभि त्वा शूर नोनुमो मन्त्रेणानेन मन्त्रवित्।
कृत्वा सर्षपतैलाक्तान् क्रोधेन(२) जुहुयात्ततः ॥ २३ ॥

एतत् कृत्वा बुधः कर्म्म संग्रामे जयमाप्नुयात्।
गारुडं वामदेव्यञ्च रथन्तरबृहद्रथौ ॥ २४ ॥
सर्व्वपापप्रशमनाः कथिताः संशयं विना।

इत्याग्नेये महापुराणे सामविधानं नाम षष्ट्यधिक-
द्विशततमोऽध्यायः।

---

## अथैकषष्ट्यधिकद्विशततमोऽध्यायः।

अथर्व्वविधानं।

पुष्कर उवाच। साम्नां विधानं कथितं वक्ष्ये चाथर्व्वणामथ।
शान्तातीयं गणं हुत्वा शान्तिमाप्नोति मानवः ॥ १ ॥
भैषज्यञ्च गणं हुत्वा सर्व्वान्रोगान् व्यपोहति।
त्रिसप्तीयं गणं हुत्वा सर्व्वपापैः प्रमुच्यते ॥ २ ॥
क्वचिच्चाप्नोति च भयं हुत्वा चैवाभयङ्गणं।
न क्वचिज्जायते राम गणं हुत्वा पराजितं ॥ ३ ॥
आयुष्यञ्च गणं हुत्वा अपमृत्युं व्यपोहति।
स्वस्तिमाप्नोति सर्व्वत्र हुत्वा स्वस्त्ययनङ्गणं ॥ ४ ॥
श्रेयसा योगमाप्नोति शर्म्मवर्म्मगणस्तथा।
वास्तोष्पत्यगणं हुत्वा वास्तुदोषान् व्यपोहति ॥ ५ ॥
तथा रौद्रगणं हुत्वा सर्व्वान् दोषान् व्यपोहति।
एतैर्दशगणैर्होमो अष्टादशसु शान्तिषु ॥ ६ ॥

वैष्णवी शान्तिरैन्द्री च ब्राह्मी रौद्री तथैव च।
वायव्या वारुणी चैव कौवेरी भार्गवी तथा ॥ ७॥
प्राजापत्या तथा त्वाष्ट्री कौमारी वह्निदैवता।
मारुद्गणा च गान्धारी शान्तिर्नैर्ऋतकी तथा ॥ ८ ॥
शान्तिराङ्गिरसी याम्या पार्थिवी सर्व्वकामदा।
यस्त्वां मृत्युरिति ह्येतज्जप्तं मृत्युविनाशनं ॥ ९ ॥
सुपर्णस्त्वेति हुत्वा च भुजगैर्नैव बाध्यते।
इन्द्रेण दत्तमित्येतत् सर्वकामकरम्भवेत् ॥ १० ॥
इन्द्रेण दत्तमित्येतत् सर्वबाधाविनाशनं।
इमा देवीति मन्त्रश्च सर्वशान्तिकरः परः ॥ ११ ॥
देवा मरुत इत्येतत् सर्वकामकरम्भवेत्।
यमस्य लोकादित्येतत् दुःस्वप्नशमनम्परं ॥ १२ ॥
इन्द्रस्य पश्चवणिजेति(१) पण्यलाभकरं परं।
कामो मे वाजीति हुतं स्त्रीणां सौभाग्यवर्द्धनं ॥ १३ ॥
तुभ्यमेव जवीमन्नित्ययुतन्तु हुतम्भवेत्।
अग्ने गोभिन्न इत्येतत्(२) मेधावृद्धिकरम्परं ॥ १४ ॥
ध्रुवं ध्रुवेणेति हुतं स्थानलाभकरं भवेत्।
अलक्तजीवेति शाना कृषिलाभकरं भवेत् ॥ १५ ॥
अहन्ते भग्न इत्येतत् भवेत्सौभाग्यवर्द्धनं।
ये मे पाशास्तथाप्येतत् बन्धनान्मोक्षकारणं ॥ १६ ॥
शपत्वहमिति रिपून् नाशयेद्धोमजाप्यतः।

---

१ इन्द्र मन वणिक् येनोमि च०, ज० च।
२ अग्ने गोभिन्न इत्येतदिति ज०।

त्वमुत्तममितीत्येतद्यशोवृद्धिविवर्धनं ॥ १७ ॥
यथा मृगमतीत्येतत् स्त्रीणां सौभाग्यवर्धनं ।
येन चेदृदिदृश्चैव गर्भलाभकरं भवेत् ॥ १८ ॥
अयन्ते योनिरित्येतत् पुत्रलाभकरं भवेत् ।
शिवः शिवाभिरित्येतत् भवेत्सौभाग्यवर्धनं(१) ॥ १९ ॥
बृहस्पतिर्नः परिपातु पथि स्वस्त्ययनं भवेत् ।
मुञ्चामि त्वेति कथितमपमृत्युनिवारणं ॥ २० ॥
अथर्वशिरसोऽध्येता सर्वपापैः प्रमुच्यते ।
प्राधान्येन तु मन्त्राणां किञ्चित् कर्म तवेरितं ॥ २१ ॥
हव्यानां यज्ञियानान्तु समिधः प्रथमं हविः ।
आज्यञ्च व्रीहयश्चैव तथा वै गौरसर्षपाः ॥ २२ ॥
अक्षतानि तिलाश्चैव दधिक्षीरे च भार्गव ।
दर्भास्तथैव दूर्वाश्च विल्वानि कमलानि च ॥ २३ ॥
शान्तिपुष्टिकराण्याहुर्द्रव्याण्येतानि सर्वशः ।
तैलकणानि धर्मज्ञ राजिका रुधिरं विषं ॥ २४ ॥
समिधः कण्टकोपेता अभिचारेषु योजयेत् ।
आर्षं वै दैवतं छन्दो विनियोगञ्च चाचरेत् ॥ २५ ॥

इत्याग्नेये महापुराणे अथर्वविधानं नामैक-
पञ्चाधिकद्विशततमोऽध्यायः ।

---

१ नृद मृग' प्रभावयेदिति ग०, ज०,झ० च ।

# अथ द्विषष्ट्यधिकद्विशततमोऽध्यायः ।

---

## उत्पातशान्तिः ।

पुष्कर उवाच । श्रीसूक्तं प्रतिवेदञ्च ज्ञेयं लक्ष्मीविवर्द्धनं ।
हिरण्यवर्णां हरिणीमृचः पञ्चदश श्रियः ॥ १ ॥
रथेष्वक्षेषु वाजेति चतस्रो यजुषि श्रियः ।
स्रावन्तीयं तथा साम श्रीसूक्तं सामवेदके ॥ २ ॥
श्रियं धातर्मयि धेहि प्रोक्तमाथर्वणे तथा ।
श्रीसूक्तं यो जपेद्भक्त्या हुत्वा श्रीस्तस्य वै भवेत् ॥ ३ ॥
पद्मानि चाथ बिल्वानि हुत्वाज्यं वा तिलान् श्रियः ।
एकन्तु पौरुषं सूक्तं प्रतिवेदन्तु सर्वदं ॥ ४ ॥
सूक्तेन दद्यान्निष्पापो ह्येकैकया(१) जलाञ्जलिं ।
स्नात एकैकया पुष्पं विष्णोर्दत्त्वाघहा भवेत् ॥ ५ ॥
स्नात एकैकया दत्वा फलं स्यात् सर्वकामभाक् ।
महापापोपपापान्तो भवेज्जप्त्वा तु पौरुषं ॥ ६ ॥
कृच्छ्रैर्विशुद्धो जप्त्वा च हुत्वा स्नात्वाऽथ सर्वभाक् ।
अष्टादशभ्यः शान्तिभ्यस्तिस्रोऽन्याः शान्तयो वराः ॥ ७ ॥
अमृता चाभया सौम्या सर्व्वोत्पातविमर्द्दनाः ।
अमृता सर्वदैवत्या अभया ब्रह्मदैवता ॥ ८ ॥
सौम्या च सर्वदैवत्या एका स्यात्सर्व्वकामदा ।

१ ह्येकैकश इति ख०, घ०, ङ०, ञ० च ।

अभयाया मणिः कार्य्यो वरुणस्य भृगूत्तम ॥ ९ ॥
शतकाण्डोऽमृतायाश्च सौम्यायाः शङ्खजो मणिः ।
तद्दैवत्यास्तथा मन्त्राः सिद्धो(१)ऽस्त्राभिषवक्षमं ॥ १० ॥
दिव्यान्तरीक्षभौमादिसमुत्पातार्दना इमाः ।
दिव्यान्तरीक्षभौमन्तु अद्भुतं त्रिविधं शृणु ॥ ११ ॥
ग्रहर्क्षवैकृतं दिव्यमान्तरीक्षं निबोध मे ।
उल्कापातश्च दिग्दाहः परिवेशस्तथैव च ॥ १२ ॥
गन्धर्वनगरञ्चैव वृष्टिश्च विकृता च या ।
चरस्थिरभवं भूमौ भूकम्पमपि भूमिजं ॥ १३ ॥
सप्ताहाभ्यन्तरे दृष्टावद्भुतं निष्फलं भवेत् ।
शान्तिं विना त्रिभिर्वर्षैरद्भुतं भयकृद्भवेत् ॥ १
देवतार्च्चाः(२) प्रनृत्यन्ति वेपन्ते प्रज्वलन्ति
आरठन्ति(३) च रोदन्ति प्रस्विद्यन्ते
अर्च्चाविकारोपशमोऽभ्यर्च्य हुत्वा
अनग्निर्दीप्यते यत्र राष्ट्रे च
न दीप्यते चेन्धनवांस्तद्राष्ट्रं पीड्यते
अग्निवैकृत्यशमनमग्निमन्त्रैश्च भार्गव ॥
अकाले फलिता वृक्षाः क्षीरं रक्तं ।
वृक्षोत्पातप्रशमनं शिवं पूज्य च
अतिवृष्टिरनावृष्टिर्दुर्भिक्षायोभयं मतं ।

१ सिद्धा इति ख०, ञ० च ।
२ देवतार्चेति ख०, ङ० च ।
३ आरटन्तीति क०, ख०, ङ०, ञ० च ।

अनृतौ चिदिनारव्यवृष्टिर्न या भयाय हि ॥ १९ ॥
वृष्टिवैकल्यनाशः स्यात्पर्जन्येन्द्रार्कपूजनात्।
नगराद्पसर्पन्ते समीपमुपयान्ति च ॥ २० ॥
नद्यो ह्रदप्रस्रवणा विरसाश्च भवन्ति च।
सलिलाशयवैकल्ये जलद्यो वारुणो मनुः ॥ २१ ॥
अकालप्रसवा नार्य्यः कालतो वाप्रजास्तथा।
विकृतप्रसवाश्चैव युग्मप्रसवनादिकं ॥ २२ ॥
स्त्रीणां प्रसववैकल्ये स्त्रीविप्रादिं प्रपूजयेत्।
वड़वा हस्तिनो गौर्वा यदि युग्मं प्रसूयते ॥ २३ ॥
विजात्यं विकृतं वापि षड्भिर्मासैर्म्रियेत वै।
विकृतं वा प्रसूयन्ते परचक्रभयं भवेत् ॥ २४ ॥
होमः प्रसूतिवैकल्ये जपो विप्रादिपूजनं।
यानि यानान्ययुक्तानि युक्तानि न वहन्ति च ॥ २५॥
आकाशे तूर्य्यनादाश्च महद्भयमुपस्थितं।
प्रविशन्ति यदा ग्राममारण्या मृगपक्षिणः ॥ २६ ॥
अरण्यं यान्ति वा ग्राम्याः जलं यान्ति स्थलोद्भवाः।
स्थलं वा जलजा यान्ति राजद्वारादिके शिवाः ॥ २७ ॥
प्रदोषे कुक्कुटो वासे शिवा चार्कोदये भवेत्।
गृहं कपोतः प्रविशेत् क्रव्यादा मूर्द्ध्नि लीयते ॥ २८ ॥
मधुर्वा मक्षिका कुर्य्यात् काको मैथुनगो दृशि।
प्रासादतोरणोद्यानद्वारप्राकारवेश्मनां ॥ २९ ॥
अनिमित्तन्तु पतनं दृढ़ानां राजमृत्यवे।
रजसा वाथ धूमेन दिशो यत्र समाकुलाः ॥ ३० ॥

अभयाया मणिः कार्य्यो वरुणस्य भृगूत्तम ॥ ९ ॥
शतकाण्डोऽमृतायाश्च सौम्यायाः शङ्खजो मणिः ।
तद्दैवत्यास्तथा मन्त्राः सिद्धो(१)स्याम्मणिबन्धनं ॥ १० ॥
दिव्यान्तरीक्षभौमादिसमुत्पातार्दना इमाः ।
दिव्यान्तरीक्षभौमन्तु अद्भुतं त्रिविधं शृणु ॥ ११ ॥
ग्रहर्क्षवैकृतं दिव्यमान्तरीक्षन्निबोध मे ।
उल्कापातश्च दिग्दाहः परिवेशस्तथैव च ॥ १२ ॥
गन्धर्वनगरञ्चैव वृष्टिश्च विकृता च या ।
चरस्थिरभवं भूमौ भूकम्पमपि भूमिजं ॥ १३ ॥
सप्ताहाभ्यन्तरे दृष्टमद्भुतं निष्फलं भवेत् ।
शान्तिं विना त्रिभिर्वर्षैरद्भुतं भयकृद्भवेत् ॥ १४ ॥
देवतार्च्चाः(२) प्रनृत्यन्ति वेपन्ते प्रज्वलन्ति च ।
आरटन्ति(३) च रोदन्ति प्रस्विद्यन्ते हसन्ति च ॥ १५ ॥
अर्च्चाविकारोपशमोऽभ्यर्च्य हुत्वा प्रजापतेः ।
अनग्निर्दीप्यते यत्र राष्ट्रे च भृशनिस्वनं ॥ १६ ॥
न दीप्यते चेन्धनवांस्तद्राष्ट्रं पीड्यते नृपैः ।
अग्निवैकृत्यशमनमग्निमन्त्रैश्च भार्गव ॥ १७ ॥
अकाले फलिता वृक्षाः क्षीरं रक्तं स्रवन्ति च ।
वृक्षोत्पातप्रशमनं शिवं पूज्य च कारयेत् ॥ १८ ॥
अतिवृष्टिरनावृष्टिर्दुर्भिक्षायोभयं मतं ।

१ सिद्धा इति ख०, ञ० च ।
२ देवतार्थेति ख०, ङ० च ।
३ आइटन्तीति ख०, घ०, ङ०, ञ० च ।

अनृतौ विदिनारव्यव्रुष्टिर्न्ने या भयाय हि ॥ १९ ॥
वृष्टिवैकल्यनाशः स्यात्पर्जन्येन्द्रार्कपूजनात्।
नगराद्पसर्पन्ते समीपमुपयान्ति च ॥ २० ॥
नद्यो ह्रदप्रस्रवणा विरसाश्च भवन्ति च ।
सलिलाशयवैकृत्ये जप्यो वारुणो मनुः ॥ २१ ॥
अकालप्रसवा नार्य्यः कालतो वाप्रजास्तथा ।
विकृतप्रसवाश्चैव युग्मप्रसवनादिकं ॥ २२ ॥
स्त्रीणां प्रसववैकृत्ये स्त्रीविप्रादिं प्रपूजयेत् ।
वड़वा हस्तिनी गौर्वा यदि युग्मं प्रसूयते ॥ २३ ॥
विजात्यं विकृतं वापि षड्भिर्मासैर्म्रियेत वै ।
विकृतं वा प्रसूयन्ते परचक्रभयं भवेत् ॥ २४ ॥
होमः प्रसूतिवैकृत्ये जपो विप्रादिपूजनं ।
यानि यानान्ययुक्तानि युक्तानि न वहन्ति च ॥ २५॥
आकाशे तूर्यनादाश्च महद्भयमुपस्थितं ।
प्रविशन्ति यदा ग्राममारण्या मृगपक्षिणः ॥ २६ ॥
अरण्यं यान्ति वा ग्राम्याः जलं यान्ति स्थलोद्भवाः ।
स्थलं वा जलजा यान्ति राजद्वारादिके शिवाः ॥ २७ ॥
प्रदोषे कुक्कुटो वासे शिवा चार्कोदये भवेत् ।
गृहंकपोतः प्रविशेत् क्रव्यादा मूर्द्धि लीयते ॥ २८ ॥
मधुरा मक्षिका कुर्य्यात् काको मैथुनगो दृशि ।
प्रासादतोरणोद्यानद्वारप्राकारवेश्मनां ॥ २९ ॥
अनिमित्तन्तु पतनं दृढ़ानां राजमृत्यवे ।
रजसा वाथ धूमेन दिशो यत्र समाकुलाः ॥ ३० ॥

केतूदयोपरागौ च छिद्रता शशिसूर्ययोः ।
ग्रहर्क्षविकृतिर्यत्र तत्रापि भयमादिशेत् ॥ ११ ॥
अग्निर्यत्र न दीप्येत स्रवन्ते चोदकुम्भकाः ।
मृतिर्भयं शून्यतादिरुत्पातानां फलम्भवेत् ॥ १२ ॥
द्विजदेवादिपूजाभ्यः शान्तिर्जप्यैस्तु होमतः ।
इत्याग्नेये महापुराणे उत्पातशान्तिर्नाम द्विषष्ट्यधिक-
द्विशततमोऽध्यायः ।

---

## अथ त्रिषष्ट्यधिकद्विशततमोऽध्यायः ।

—o॥o—

### देवपूजावैश्वदेवबलिः ।

पुष्कर उवाच । देवपूजादिकं कर्म वक्ष्ये चोत्पातमर्दनम् ।
आपोहिष्ठेति तिसृभिः स्नातोऽर्घ्यं विष्णवेर्पयेत् ॥ १ ॥
हिरण्यवर्णा इति च पाद्यञ्च तिसृभिर्द्विज ।
शन्न आपो ह्याचमनमिदमापोऽभिषेचनं ॥ २ ॥
रथे अक्षे च तिसृभिर्गन्धं युवेति(¹) वस्त्रकं ।
पुष्पं पुष्पवतीत्येवं धूपन्धूपोसि चाप्यथ ॥ ३ ॥
तेजोसि शुक्रं दीपं,स्यामधुपर्कं दधीति च ।
हिरण्यगर्भ इत्यष्टावृचः प्रोक्ता निवेदने ॥ ४ ॥
अयस्य मनुजश्रेष्ठ पानस्य च सुगन्धिनः ।
चामरव्यजनोपानच्छत्रं यानासने तथा ॥ ५ ॥

---

१ युवा सुवासेति ख०, ग०, घ०, ज० च ।

यत् किञ्चिद्देवमादि स्थाद्यानिवेद्य निवेदयेत्।
पौरुषन्तु जपेत् सूक्तं तदेव जुहुयात्तथा॥ ६॥
अर्च्चाभावे तथा वेद्यामप्सु पूर्णघटे तथा।
नद्यां तीरेऽथ कमले शान्तिः स्याद्विष्णुपूजनात्॥ ७॥
ततो होमः प्रकर्त्तव्यो दीप्यमाने विभावसौ।
परिसमूहन्य पर्युक्ष्य परिस्तीर्य परिस्तरैः॥ ८॥
सर्व्वान्नाग्रं समुद्धृत्य जुहुयात् प्रयतस्ततः।
वासुदेवाय देवाय प्रभवे चाव्ययाय च॥ ९॥
अग्नये चैव सोमाय मित्राय वरुणाय च।
इन्द्राय च महाभाग इन्द्राग्निभ्यां तथैव च॥ १०॥
विश्वेभ्यश्चैव देवेभ्यः प्रजानां पतये नमः।
अनुमत्यै तथा राम धन्वन्तरय एव च॥ ११॥
वास्तोष्पत्यै ततो देव्यै ततः स्विष्टिकृतेऽग्नये।
सचतुर्थ्यन्तनाम्ना(१) तु हुत्वैतेभ्यो बलिं हरेत्॥ १२॥
तस्योपतप्तमभितः पूर्वेणाग्निमतः परम्।
अम्बानामपि धर्मज्ञ जपानामानि चाप्यथ॥ १३॥
निरुन्धी धूम्रिणीका च अस्वपन्ती(२) तथैव च।
मेघपत्नी(३) च नामानि सर्व्वासामेव भार्गव॥ १४॥
आग्नेयाद्याः क्रमेणाथ ततः प्रतिषु निक्षिपेत्।
नन्दिन्यै च सुभाग्यै च सुमङ्गल्यै च भार्गव॥ १५॥

---

१ सचतुर्थीक मन्त्रेति पाठः साधुः।

२ अस्तपन्तीति क०।

३ मेघपत्नीति ज०।

भद्रकाल्यै ततो दत्वा स्थूणायाञ्च तथा श्रिये ।
हिरण्यकेश्यै च तथा वनस्पतय एव च ॥ १६ ॥
धर्माधर्ममयौ द्वारे गृहमध्ये ध्रुवाय च ।
मृत्यवे च बहिर्दद्याद्वरुणायोदकाश्रये ॥ १७ ॥
भूतेभ्यश्च बहिर्दद्याच्छरणे धनदाय च ।
इन्द्रायेन्द्रपुरुषेभ्यो दद्यात् पूर्वेण मानवः ॥ १८ ॥
यमाय तत् पुरुषेभ्यो दद्याद्दक्षिणतस्तथा ।
वरुणाय तत्पुरुषेभ्यो दद्यात्पश्चिमतस्तथा ॥ १९ ॥
सोमाय सोमपुरुषेभ्य उदग्दद्यादनन्तरं ।
ब्रह्मणे ब्रह्मपुरुषेभ्यो मध्ये दद्यात्तथैव च ॥ २० ॥
आकाशे च तथा चोर्द्ध्वं स्थण्डिलाय क्षितौ तथा ।
दिवा दिवाचरेभ्यश्च रात्रौ रात्रिचरेषु च ॥ २१ ॥
बलिं बहिस्तथा दद्यात्सायं प्रातस्तु प्रत्यहं ।
पिण्डनिर्वपणं कुर्य्यात् प्रातः सायञ्च वारयेत् ॥ २२ ॥
पित्रे तु प्रथमं दद्यात्तत्पित्रे तदनन्तरम् ।
प्रपितामहाय तन्मात्रे पितृमात्रे ततोऽर्पयेत् ॥ २३ ॥
तन्मात्रे दक्षिणाग्रेषु कुशेष्वेवं यजेत् पितॄन् ।
इन्द्रवारुणवायव्या याम्या वा नैर्ऋताश्च ये ॥ २४ ॥
ते काकाः प्रतिगृह्णन्तु इमं पिण्डं मयोद्धृतम् ।
काकपिण्डन्तु मन्त्रेण शुनः पिण्डं प्रदापयेत् ॥ २५ ॥
विवस्वतः कुले जातौ द्वौ श्यावशवलौ(१) शुनौ ।
तेषां पिण्डं प्रदास्यामि पथि रक्षन्तु मे सदा ॥ २६ ॥

१ श्यामशबलाविति ख०, ग०, ङ० च ।

सौरभेय्यः(१) सर्वहिताः पवित्राः पापनाशनाः(२) ।
प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः ॥ २७ ॥
श्रोपासञ्च स्वस्त्ययनं कृत्वा भिक्षां प्रदापयेत् ।
अतिथीन्दीनान् पूजयित्वा गृही भुञ्जीत च स्वयं ॥ २८ ॥
ॐ भूः स्वाहा ॐ भुवः स्वाहा ॐ स्वः स्वाहा ॐ भूर्भुवः स्वः स्वाहा ।

ॐ देवकृतस्यैनसोऽवयजनमसि स्वाहा ॐ पितृकृतस्यैनसोऽवयजनमसि स्वाहा ॐ आत्मकृतस्यैनसोऽवयजनमसि स्वाहा ॐ मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा ॐ एनस एनसोऽवयजनमसि स्वाहा । यच्चाहमेनो विद्वांश्चकार यच्चाविद्वांस्तस्य सर्वस्यैनसोऽवयजनमसि स्वाहा अग्नये स्विष्टिकृते स्वाहा ॐ प्रजापतये स्वाहा ॥

विष्णुपूजावैश्वदेवमिलिस्ते कीर्त्तितो मया ।
इत्याग्नेये महापुराणे देवपूजावैश्वदेवबलिर्नाम चिपद्यधिकद्विशततमोऽध्यायः ॥

## अथ चतुःषष्ट्यधिकद्विशततमोऽध्यायः ।

### दिक्पालादिस्नानं ।

अग्निरुवाच । सर्वार्थसाधनं स्नानं वक्ष्ये शान्तिकरं शृणु ।
स्नापयेच्च सरित्तीरे ग्रहान् विष्णुं विचक्षणः ॥ १ ॥

१ सौरभेया इति क०, ख०, ग०, घ० च ।
२ पुण्यराशय इति ग०, ङ० च ।

देवालये त्वरार्त्तादौ विनायकग्रहार्दिते ।
विद्यार्थिनो ह्रदे गेहे जयकामस्य तीर्थके ॥ २ ॥
पद्मिन्यां स्नापयेन्नारीं गर्भो यस्याः स्रवेत्तथा ।
अशोकपत्रिधौ स्नायात्कालो यस्या विनश्यति ॥ ३ ॥
पुष्यार्थिनाञ्च पुष्पाढ्ये पुत्रार्थिनाञ्च सागरे ।
स्वद्दसौभाग्यकामानां सर्वेषां विष्णुसन्निधौ ॥ ४ ॥
वैष्णवे रेवतीपुष्ये सर्वेषां स्नानमुत्तमं ।
स्नानकामस्य सप्ताहम्पूर्वमुत्सादनं स्मृतं ॥ ५ ॥
पुनर्नवा रोचनाञ्च शताङ्गं गुरणी त्वचं ।
मधूकं रजनी द्वे च तगरञ्चागरुं वरम् ॥ ६ ॥
शर्करीचैव मञ्जिष्ठां मांसीयासक्रमर्दनैः ।
प्रियङ्गु सर्षपं कुष्ठम्बलाम्ब्राह्मीञ्च कुङ्कुमं ॥ ७ ॥
पञ्चगव्यं गन्धमिश्रं छत्रं स्नानमाचरेत् ।
मण्डले कर्णिकायाञ्च विष्णुं ब्रह्मणमर्चयेत् ॥ ८ ॥
दक्षे वामे हरं पूर्वं पत्रे पूर्वादिके क्रमात् ।
लिखेदिन्द्रादिकान्देवान् सायुधान् सहवाहनान्(१) ॥९॥
स्नानमण्डलकान् दिक्षु कुर्य्याच्चैव विदिक्षु च ।
विष्णुब्रह्मेशशक्रादींस्तदस्त्राण्यर्चेत् होमयेत् ॥ १० ॥
एकैकस्य त्वष्टशतं समिधस्तु तिलान् घृतं ।
भद्रः सुभद्रः सिद्धार्थः कलसाः पुष्टिवर्धनाः ॥ ११ ॥
अमोघश्चित्रभानुश्च पर्ज्जन्योऽथ सुदर्शनः
स्थापयेत् घटानेतान् साश्विरुद्रमरुद्गणान् ॥ १२ ॥

१ सहवाहनानिति ग०, ख० च ।

विश्वे देवास्तथा दैत्या वसवो मुनयस्तथा ।
आविशयन्तु सुप्रीतास्तथान्या अपि देवताः ॥ १३ ॥
ओषधीर्विक्षिपेत् कुम्भे जयन्तीं विजयां जयां ।
शतावरीं शतपुष्पां विष्णुक्रान्तापराजिताम् ॥ १४ ॥
ज्योतिष्मतीमतिबलाञ्चन्दनोशीरकेशरं ।
कस्तूरिकाञ्च कर्पूरं बालकं पत्रकं त्वचं ॥ १५ ॥
जातीफलं लवङ्गञ्च मृत्तिकां पञ्चगव्यकं ।
भद्रपीठे स्थितं साध्यं स्नापयेयुर्द्विजा बलात् ॥ १६ ॥
राजाभिषेकमन्त्रोक्तदेवानां होमकाः पृथक् ।
पूर्णाहुतिस्ततो दत्वा गुरवे दक्षिणां ददेत् ॥ १७ ॥
इन्द्रोऽभिषिक्तो गुरुणा पुरा दैत्यान् जघान ह ।
दिक्पालस्नानमुक्तं संग्रामादौ जयादिकं ॥ १८ ॥

इत्याग्नेये महापुराणे दिक्पालादिस्नानं नाम
चतुःषष्ठ्यधिकद्विशततमोऽध्यायः ।

---

## अथ पञ्चषष्ठ्यधिकद्विशततमोऽध्यायः ।

—000—

### विनायकस्नानं ।

पुष्कर उवाच । विनायकोपसृष्टानां स्नानं सर्वकरं वदे ।
विनायकः कर्म्मविघ्नसिद्ध्यर्थं विनियोजितः ॥ १ ॥
गणानामाधिपत्ये च केशवेशपितामहैः ।
स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति ॥ २ ॥

विनायकोपसृष्टस्तु साध्यादानधिरोहति ।
यजमानस्तथात्मानं मन्यतेऽनुगतम्परैः ॥ ३ ॥
विमना विफलारम्भः संसीदत्यनिमित्ततः ।
कन्या वरं न चाप्नोति न चापत्यं वराङ्गना ॥ ४ ॥
आचार्य्यत्वं श्रोत्रियश्च न शिष्योऽध्ययनं लभेत् ।
धनी न लाभमाप्नोति न कृषिञ्च कृषीवलः ॥ ५ ॥
राजा राज्यं न चाप्नोति स्नपनन्तस्य कारयेत् ।
हस्तपुष्याश्वयुक्सौम्ये वैष्णवे भद्रपीठकें(१) ॥ ६ ॥
गौरसर्षपकल्केन साज्येनोत्सादितस्य च(२) ।
सर्वौषधैः सर्वगन्धैः प्रलिप्तशिरसस्तथा ॥ ७ ॥
चतुर्भिः कलसैः स्नानन्तेषु सर्वौषधीः क्षिपेत् ।
अश्वस्थानाद्गजस्थानाद्वल्मीकात् सङ्गमाध्रदात् ॥ ८ ॥
मृत्तिकां रोचनाङ्गन्धङ्गुग्गुलुन्तेषु निक्षिपेत् ।
सहस्राक्ष शतधारमृषिभिः पावनं कृतम् ॥ ९ ॥
तेन त्वामभिषिञ्चामि पावमान्यः(३) पुनन्तु ते ।
भगन्ते वरुणो राजा भगं सूर्य्यो वृहस्पतिः ॥ १० ॥
भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ।
यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्द्धनि ॥ ११ ॥
ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नन्तु सर्वदा ।
दर्भपिञ्जलिमादाय वामहस्ते ततो गुरुः ॥ १२ ॥

---

१ हस्तपुष्याश्वयुक्सौम्यनैऋतेषु शुभेषु चेति ख०, ग० च ।

२ साज्ये मासादिकस्य चेति क०, ख० च ।

३ इमा आप इति क०, ग० च ।

स्नातस्य सार्षपं तैलं स्रुवेणौडुम्बरेण च।
जुहुयान्मूर्द्धनि कुशान् सव्येन परिगृह्य च ॥ १३ ॥
मितश्च सम्मितश्चैव तथा शालककण्टकौ।
कुष्माण्डो राजपुत्रश्च एतैः स्वाहासमन्वितैः ॥ १४ ॥
नामभिर्बलिमन्त्रैश्च नमस्कारसमन्वितैः(१)।
दद्याच्चतुष्पथे शूर्पे कुशानास्तीर्य सर्व्वतः ॥ १५ ॥
कृताकृतांस्तण्डुलांश्च पललौदनमेव च।
मत्स्यान्पक्वांस्तथैवामान् पुष्पं चित्रं सुरां त्रिधा ॥ १६ ॥
मूलकं पूरिकां पूपांस्तथैवेण्डविकास्रजः।
दध्यन्नं पायसं पिष्टं मोदकं गुड़मर्पयेत् ॥ १७ ॥
विनायकस्य जननीमुपतिष्ठेत्ततोऽम्बिकां।
दूर्व्वासर्षपपुष्पाणां दत्वार्घ्यं पूर्णमञ्जलिं ॥ १८ ॥
रूपं देहि यशो देहि सौभाग्यं सुभगे मम।
पुत्रं देहि धनं देहि सर्व्वान् कामांश्च देहि मे ॥ १९ ॥
भोजयेद्ब्राह्मणान्दद्याद्वस्त्रयुग्मं गुरोरपि।
विनायकं ग्रहान्प्रार्च्य श्रियं कर्म्मफलं लभेत् ॥ २० ॥

इत्याग्नेये महापुराणे विनायकस्नानं नाम पञ्चषष्ट्यधिकद्विशततमोऽध्यायः।

---

१ वषट्कारसमन्वितैरिति ख०, ग०, ज०, ङ० च।

# अथ षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥

——०*०——

## माहेश्वरस्नानलक्षकोटिहोमादयः ।

पुष्कर उवाच । स्नानं माहेश्वरं वक्ष्ये राजादेर्जयवर्द्धनम् ।
दानवेन्द्राय बलये यच्चगादोशनाः पुरा ॥ १ ॥
भास्करेऽभ्युदिते पीठे प्रातः संस्नापयेद् घटैः ।
ॐ नमो भगवते रुद्राय च बलाय च पाण्डरोचितभस्मानुलिप्त-
गात्राय । तद्यथा जय जय सर्वान् शत्रून्मूकस्य कलहविग्रहवि-
वादेषु भञ्जय ।
ॐ मथ मथ सर्व्वपथिकान्योसौ युगान्तकाले दिधक्षति इमां
पूजां रौद्रमूर्त्तिः सहस्रांशुः शक्तः स ते रक्षतु जीवितं ।
सम्वर्त्तकाग्नितुल्यश्च त्रिपुरान्तकरः शिवः ।
सर्वदेवमयः सोपि तव रक्षतु जीवितं लिखि लिखि खिलि स्वाहा॥
एवं स्नातस्तु मन्त्रेण जुहुयात्तिलतण्डुलम् ॥ २ ॥
पश्चात्तैस्तु संस्नाप्य पूजयेच्छूलपाणिनं ।
स्नानान्यन्यानि वक्ष्यामि सर्वदा विजयाय ते ॥ ३ ॥
स्नानं घृतेन कथितमायुष्यवर्द्धनं परम् ।
गोमयेन च लक्ष्मीः स्याद्गोमूत्रेणाघमर्द्दनम् ॥ ४ ॥
क्षीरेण बलबुद्धिः स्याद्दध्ना लक्ष्मीविवर्धनं ।
कुशोदकेन पापान्तः पञ्चगव्येन सर्वभाक् ॥ ५ ॥
शतमूलेन सर्वाप्तिर्गोशृङ्गोदकतोऽघजित् ।

अनुलेपस्त्रियश्चात्र कर्पूरोशीरचन्दनैः ॥ १७ ॥
चन्दनागुरुकर्पूरमृगदर्पैः सकुङ्कुमैः ।
पश्चानुलेपनं विष्णोः सर्वकामफलप्रदं ॥ १८ ॥
त्रिसुगन्धञ्च कर्पूरं तथा चन्दनकुङ्कुमैः ।
मृगदर्पं सकर्पूरं मलयं सर्व्वकामदम् ॥ १९ ॥
जातीफलं सकर्पूरं चन्दनञ्च त्रिमीतकम् ।
पीतानि शुक्लवर्णानि तथा रक्तानि भार्गव ॥ २० ॥
कृष्णानि चैव रक्तानि पञ्चवर्णानि निर्द्दिशेत् ।
उत्पलं पद्मजाती च त्रिमीतं हरिपूजने ॥ २१ ॥
कुङ्कुमं रक्तपद्मानि विरक्तं रक्तमुत्पलं ।
धूपदीपादिभिः प्रार्च्य विष्णुं शान्तिर्भवेन्नृणां ॥ २२ ॥
चतुरस्त्रकरे कुण्डे ब्राह्मणायाष्ट षोडश ।
लक्षहोमकोटिहोमन्तिलाज्ययवधान्यकैः ॥ २३ ॥
ग्रहानभ्यर्च्य गायत्र्या सर्व्वशान्तिः क्रमाद्भवेत् ।

*इत्याग्नेये महापुराणे माहेश्वरस्नानलक्षकोटिहोमादयो नाम*
षट्पञ्चाधिकद्विशततमोऽध्यायः ।

---

## अथ सप्तषष्ट्यधिकद्विशततमोऽध्यायः ।

—000—

### नीराजनाविधिः ।

पुष्कर उवाच । कर्म सांवत्सरं राज्ञां जन्मर्क्षे पूजयेच्च तं ।
मासि मासि च संक्रान्तौ सूर्य्यसोमादिदेवताः ॥ १ ॥

अगस्त्यस्योदयेऽगस्त्यश्चातुर्मास्यं हरिं यजेत् ।
शयनोत्थापने पञ्चदिनं कुर्य्यात्सुमुत्सवम् ॥ २ ॥
प्रोष्ठपादे सिते पक्षे प्रतिपत्प्रभृतिक्रमात् ।
शिबिरात् पूर्वदिग्भागे शक्रार्थं भवनञ्चरेत् ॥ ३ ॥
तत्र शक्रध्वजं स्थाप्य शचीं शक्रञ्च पूजयेत् ।
अष्टम्यां वाद्यघोषेण तान्तु यष्टिं प्रवेशयेत् ॥ ४ ॥
एकादश्यां सोपवासो द्वादश्यां केतुमुत्थितम् ।
यजेद्वस्त्रादिसंवीतं घटस्थं(१) सुरपं शचीं ॥ ५ ॥
वर्द्धस्वेन्द्र जिताभिव वृत्रहन् पाकशासन ।
देव देव महाभाग त्वं हि भूमिष्ठतां गतः ॥ ६ ॥
त्वं प्रभुः शाश्वतश्चैव सर्व्वभूतहिते रतः ।
अनन्ततेजा वैराजो यशोजयविवर्द्धनः ॥ ७ ॥
तेजस्ते वर्द्धयन्त्वेते देवाः शक्रः सुहद्दिसत् ।
ब्रह्मविष्णुमहेशाश्च कार्त्तिकेयो विनायकः ॥ ८ ॥
आदित्या वसवो रुद्राः साध्याश्च भृगवो दिशः ।
मरुद्गणा लोकपाला ग्रहा यक्षाद्रिनिम्नगाः ॥ ९ ॥
समुद्रा श्रीर्मही गौरी चण्डिका च सरस्वती ।
प्रवर्त्तयन्तु ते तेजो जय शक्र शचीपते ॥ १० ॥
तव चापि जयान्नित्यं मम सम्पद्यतां शुभं ।
प्रसीद राज्ञां विप्राणां प्रजानामपि सर्व्वशः ॥ ११ ॥
भवत्प्रसादात् पृथिवी नित्यं शस्यवती भवेत्।
शिवं भवतु निर्व्विघ्नं शाम्यन्तामीतयो भृशं ॥ १२ ॥

---

१ घटस्थमिति क०, ग०, ङ०, ज०, ट० च ।

मन्त्रैरेन्द्रं समभ्यर्च्य जितभूः स्वर्गमाप्नुयात् ।
भद्रकालीं पटे लिख्य पूजयेदाश्विने जये ॥ १३ ॥
शुक्लपक्षे तथाष्टम्यामायुधं कार्मुकं ध्वजम् ।
छत्रञ्च राजलिङ्गानि शस्त्राद्यं कुसुमादिभिः ॥ १४ ॥
जाग्रन्निशि बलिन्दद्याद्द्वितीयेऽह्नि पुनर्यजेत् ।
भद्रकालि महाकालि दुर्गे दुर्गार्त्तिहारिणि ॥ १५ ॥
त्रैलोक्यविजये चण्डि मम शान्तौ जये भव ।
नीराजनविधिं वक्ष्ये ऐशान्यां मन्दिरं चरेत् ॥ १६ ॥
तोरणत्रितयं तत्र गृहे देवान्यजेत् सदा ।
चित्रान्त्यजा यदा स्वातिं सविता प्रतिपद्यते ॥ १७ ॥
ततः प्रभृति कर्त्तव्यं यावत् स्वातौ रविः स्थितः ।
ब्रह्मा विष्णुश्च शम्भुश्च शक्रश्चैवानलानिलौ ॥ १८ ॥
विनायकः कुमारश्च वरुणो धनदो यमः ।
विश्वे देवा वैश्रवसो गजाश्चाष्टौ च तान्यजेत्॥ १९ ॥
कुमुदैरावणो पद्मः पुष्पदन्तश्च वामनः ।
सुप्रतीकोऽञ्जनो नीलः पूजा कार्य्या गृहादिके ॥ २० ॥
पुरोधा जुहुयादाज्यं समित्सिद्धार्थकं तिलाः ।
कुम्भा अष्टौ पूजिताश्च तैः स्नाप्याश्च गजोत्तमाः ॥ २१ ॥

वारुणे वरुणं प्राच्य रात्रौ भूतबलिं हरेत् ॥ २३ ॥
विशाखायां(१) गते सूर्य्ये आश्रमे निवसेन्नृपः ।
अलङ्कुर्य्याद्दिने तस्मिन् वाहनन्तु विशेषतः ॥ २४ ॥
पूजिता राजलिङ्गाश्च कर्त्तव्या नरहस्तगाः ।
हस्तिनन्तुरगं छत्रं खड्गं चापञ्च दुन्दुभिम् ॥ २५ ॥
ध्वजं पताकां धर्म्मञ्च कालज्ञस्त्वभिमन्त्रयेत् ।
अभिमन्त्र ततः सर्व्वान् कुर्य्यात् कुञ्जरधूर्गताम् ॥ २६ ॥
कुञ्जरोपरिगौ स्यातां सांवत्सरपुरोहितौ ।
मन्त्रिताय समारुह्य तोरणेन विनिर्गमेत् ॥ २७ ॥
निष्क्रम्य नागमारुह्य तोरणेनाथ निर्गमेत् ।
बलिं विभज्य विधिवद्राजा कुञ्जरधूर्गतः ॥ २८ ॥
उल्मुकानान्तु निचयमादीपितदिगन्तरं ।
राजा प्रदक्षिणं कुर्य्यात्त्रीन् वारान् सुसमाहितः ॥ २९ ॥
चतुरङ्गबलोपेतः सर्व्वसैन्येन नादयन् ।
एवं कृत्वा गृहं गच्छेद्विसर्जितजनाञ्जलिः ॥ ३० ॥
शान्तिर्न्नीराजनाख्येयं वृद्धये रिपुमर्द्दनी ।

इत्याग्नेये महापुराणे नीराजनाविधिर्नाम सप्तषष्ट्यधिक-
द्विशततमोऽध्यायः ।

---

१ विशाखास्थित इति क०, ख० च ।

## अथाष्टषष्ट्यधिकद्विशततमोऽध्यायः ।

———0:0———

छत्रादिमन्त्रादयः ।

पुष्कर उवाच । छत्रादिमन्त्रान्वक्ष्यामि यैस्तत् पूज्य जयादिकम् ।
ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च ॥ १ ॥
सूर्यस्य च प्रभावेन वर्द्धस्व त्वं महामते ।
पाण्डराभप्रतीकाश हिमकुन्देन्दुसुप्रभ ॥ २ ॥
यथाम्बुदश्छादयते शिवायैनां वसुन्धरां ।
तथाच्छादय राजानं विजयारोग्यवृद्धये ॥ ३ ॥
गन्धर्वकुलजातस्त्वं माभूयाः कुलदूषकः ।
ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च ॥ ४ ॥
प्रभावाच्च हुताशस्य वर्द्धस्व त्वं तुरङ्गम ।
तेजसा चैव सूर्यस्य मुनीनां तपसा तथा ॥ ५ ॥
रुद्रस्य ब्रह्मचर्य्येण पवनस्य बलेन च ।
स्मर त्वं राजपुत्रोऽसि कौस्तुभन्तु मणिं स्मर ॥ ६ ॥
यां गतिं ब्रह्महा गच्छेत् पितृहा मातृहा तथा ।
भूम्यर्थेऽनृतवादी च क्षत्रियश्च पराङ्मुखः ॥ ७ ॥
व्रजेस्त्वमेतां गतिं क्षिप्रं मा तत् पापं भवेत्तव ।
विकृतिं मापगच्छेस्त्वं युद्धेऽध्वनि तुरङ्गम ॥ ८ ॥
रिपून्विनिघ्नन्समरे सह भर्त्रा सुखी भव ।
शक्रकेतो महावीर्य्यः सुवर्णस्त्वामुपाश्रितः ॥ ९ ॥
पतत्रिराड्वैनतेयस्तथा नारायणध्वजः ।

काश्यपेयोऽमृताहर्त्ता नागारिर्विष्णुवाहनः॥ १०॥
अप्रमेयो दुराधर्षो रणे देवारिसूदनः।
महाबलो महावेगो महाकायोऽमृताशनः॥ ११॥
गरुत्मान्मारुतगतिस्त्वयि सन्निहितः स्थितः।
विष्णुना देवदेवेन शक्रार्थं स्थापितो ह्यसि॥ १२॥
जयाय भव मे नित्यं हृदयेऽथ बलस्य च।
साश्ववर्मायुधान्योधानृक्षास्माकं रिपून्दह॥ १३॥
कुमुदैरावणौ पद्मः पुष्पदन्तोऽथ वामनः।
सुप्रतीकोऽञ्जनो नील एतेऽष्टौ देवयोनयः॥ १४॥
तेषां पुत्राश्च पौत्राश्च बलान्यष्टौ समाश्रिताः।
भद्रो मन्द्रो मृगश्चैव गजः संकीर्ण एव च॥ १५॥
वने वने प्रसूतास्ते स्मरयोनिं महागजाः।
पान्तु त्वां वसवो रुद्रा आदित्याः समरुद्गणाः॥ १६॥
भर्त्तारं रक्ष नागेन्द्र समयः परिपाल्यताम्।
ऐरावताधिरूढस्तु वज्रहस्तः शतक्रतुः॥ १७॥
पृष्ठतोऽनुगतस्त्वेष रक्षतु त्वां स देवराट्।
अवाप्नुहि जयं युद्धे सुस्थश्चैव सदा व्रज॥ १८॥
अवाप्नुहि बलञ्चैव ऐरावतसमं युधि।
श्रीस्ते सोमाद्बलं विष्णोस्तेजः सूर्य्याज्जवोऽनिलात्॥ १९॥
स्थैर्य्यं गिरेर्जयं रुद्राद्यशो देवात् पुरन्दरात्।
युद्धे रक्षन्तु नागास्त्वां दिशश्च सह दैवतैः॥ २०॥
अश्विनौ सह गन्धर्वैः पान्तु त्वां सर्वतो दिशः।
मनवो वसवो रुद्रा वायुः सोमो महर्षयः॥ २१॥

नागकिन्नरगन्धर्वयक्षभूतगणा ग्रहाः ।
प्रमथास्तु सहादित्यैर्भूतेशो मातृभिः सह ॥ २२ ॥
शक्रः सेनापतिः स्कन्दो वरुणश्चाश्रितस्त्वयि ।
प्रदहन्तु रिपून् सर्वान् राजा विजयमृच्छतु ॥ २३ ॥
यानि प्रयुक्तान्यरिभिर्भूषणानि समन्ततः ।
पतन्तु तव शत्रूणां हतानि तव तेजसा ॥ २४ ॥
कालनेमिवधे यद्वत् युद्धे त्रिपुरघातने ।
हिरण्यकशिपोर्युद्धे बधे सर्वासुरेषु च ॥ २५ ॥
शोभितासि तथैवाद्य शोभस्व समयं स्मर ।
नीलश्वेतामिमान्दृष्ट्वा नश्यन्त्वाशु नृपारयः ॥ २६ ॥
व्याधिभिर्विविधैर्घोरैः शस्त्रैश्च युधि निर्जिताः ।
पूतना रेवती लेखा कालरात्रीति पठ्यते ॥ २७ ॥
दहन्त्वाशु रिपून् सर्वान्पताके त्वामुपाश्रिताः ।
सर्वमेधे महायज्ञे देवदेवेन शूलिना ॥ २८ ॥
सर्वेण जगतश्चैव सारेण त्वं विनिर्म्मितः ।
नन्दकस्यापरां मूर्त्तिं स्मर शत्रुनिवर्हण ॥ २९ ॥
नीलोत्पलदलश्याम कृष्ण दुःस्वप्ननाशन ।
असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः ॥ ३० ॥
श्रीगर्भो विजयश्चैव धर्म्मपालस्तथैव च ।
इत्यष्टौ तव नामानि पुरोक्तानि स्वयम्भुवा ॥ ३१ ॥
नक्षत्रं कृत्तिका तुभ्यं गुरुर्देवो महेश्वरः ।
हिरण्यञ्च शरीरन्ते दैवतन्ते जनार्दनः ॥ ३२ ॥
राजानं रक्ष निस्त्रिंश सबलं सपुरन्तथा ।

पिता पितामहो देवः स त्वं पालय सर्वदा ॥ ३३ ॥
शर्मप्रदस्त्वं समरे वर्मन् सैन्ये यशोऽद्य मे ।
रक्ष मां रक्षणीयोऽहन्तवानघ नमोऽस्तु ते ॥ ३४ ॥
दुन्दुभे त्वं सपत्नानां घोषाद्धृदयकम्पनः ।
भव भूमिपसैन्यानां यथा विजयवर्द्धनः ॥ ३५ ॥
यथा जीमूतघोषेण हृष्यन्ति वरवारणाः ।
तथास्तु तव शब्देन हर्षोऽस्माकं मुदावह ॥ ३६ ॥
यथा जीमूतशब्देन स्त्रीणां त्रासोऽभिजायते ।
तथा तु तव शब्देन त्रस्यन्त्वस्मद्विषो रणे ॥ ३७ ॥
मन्त्रैः सदार्च्चनीयास्ते योजनीया जयादिषु ।
घृतकम्बलविष्णादिस्त्वभिषेकश्च वत्सरे ॥ ३८ ॥
राज्ञोऽभिषेकः कर्त्तव्यो दैवज्ञेन पुरोधसा ।

इत्याग्नेये महापुराणे छत्रादिमन्त्रादयः नामाष्टषष्ट्यधिक-
द्विशततमोऽध्यायः ।

---